मा । मा । प्र । आपन् । इषवः । दैव्याः । याः । मा । मानुषीः । अवऽसृष्टाः । वधाय ॥ २८ ॥

परीवृत इत्यादि वर्चसा च इत्यन्तं पूर्ववद् व्याख्येयम् । यतोहं ब्रह्मणा वर्मणा ज्योतिषा वर्चसा च परीवृतः [अतो] दैव्याः देवप्रेरिताः । "देवाद् यञञौ" [इति] प्राग्दीव्यतीयो यञ् प्रत्ययः । या इषवः बाणाः सन्ति ता मा मां [मा] प्रापन् । इषवो विशेष्यन्ते । वधाय मम हननाय अवसृष्टाः प्रेरिताः मा प्रापन् । मा प्राप्नुयुः । एवं मानुषीः मानुष्यः मनुष्यैर्वधाय प्रेषिता अपि इषवो मा मां प्रापन् ॥

नवमी ॥

ऋतेन गुप्त ऋतुभिश्च सर्वैर्भूतेन गुप्तो भव्येन चाहम् ।
मा मा प्रापत् पाप्मा मोत मृत्युरन्तर्दधेहं सलिलेन वाचः ॥ २९ ॥

ऋतेन । गुप्तः । ऋतुऽभिः । च । सर्वैः । भूतेन । गुप्तः । भव्येन । च । अहम् ।

मा । मा । प्र । आपत् । पाप्मा । मा । उत । मृत्युः । अन्तः । दधे । अहम् । सलिलेन । वाचः ॥ २९ ॥

अहम् ऋतेन । ऋतम् यथार्थम् । सत्यम् इत्यर्थः । तेन गुप्तः रक्षितः । अथ वा ऋतं ब्रह्म आदित्याख्यम् तेन गुप्तः । तथा [सर्वैः] ऋतुभिः वसन्ताद्यैश्च गुप्तो रक्षितः । तथा भूतेन पूर्वकालम् उत्पन्नेन पदार्थजातेन गुप्तः । एवं भव्येन उत्पत्स्यमानेन च पदार्थजातेन गुप्तो रक्षितः । यत एवम् अतो हेतोः पाप्मा पापं नरकहेतुभूतं मा मां मा प्रापत् मा प्राप्नुयात् । उत अपि च मृत्युः मरणकर्ता देवोपि मा प्रापत् । अहं तु वाचो मन्त्रात्मिकायाः सलिलेन उदकेन[1] रक्षाकामः अन्तर्दधे अन्तर्धानं करोमि । यथा लोके सलिलेनान्तर्हितः प्राणी न केनापि दृश्यते

१ P देव्याः ।. We with P̊ J Cp. २ P P̊ J Cp omit the visarga in याः. We with Sâyaṇa. ३ P P̊ J Cp omit the visarga in °सृष्टाः. We with Sâyaṇa.

1 S′ अहं after उदकेन.

एवम् अहं मन्त्रमयेन सलिलेन पापादिबाधराहित्याय आत्मानं गोपयामीत्यर्थः ॥

दशमी ॥

अग्निर्मा गोप्ता परि पातु विश्वत उद्यन्त्सूर्यो नुदतां मृत्युपाशान्।
व्युच्छन्तीरुषसः पर्वता ध्रुवाः सहस्रं प्राणा मय्या यतन्ताम् ॥ ३० ॥ (३)

अग्निः। मा। गोप्ता। परि। पातु। विश्वतः। उत्ऽयन्। सूर्यः। नुदताम्। मृत्युऽपाशान्।
विऽउच्छन्तीः। उषसः। पर्वताः। ध्रुवाः। सहस्रम्। प्राणाः। मयि। आ। यतन्ताम् ॥ ३० ॥ (३)

अग्निः अङ्गनादिविशिष्टो देवो गोप्ता स्वाश्रितरक्षकः अथ वा मम भयेभ्यो गोप्ता सन् विश्वतः सर्वतः यतोयतो भयं भवति तेभ्यः सर्वेभ्योपि [मा] परि पातु परितो रक्षतु। तथा सूर्यो देवः उद्यन् उदयसमय एव मृत्युपाशान् मृत्योर्मारकस्य देवस्य ये पाशाः सर्पाग्निव्याघ्रकण्टकादिरूपा विततः सन्ति तान् सर्वान् नुदताम् अपसारयतु। यथा ते मां न स्पृशन्ति तथा करोतु। अत्र उद्यन्त्सूर्यो नुदताम् इत्यभिधानात् अग्निर्मा गोप्ता परि पात्विति अग्निविषयपरिपालनप्रार्थना उदयात्पूर्वकालीनरात्रिविषया वेदितव्या। तथा व्युच्छन्तीः व्युच्छन्त्यः। ॥ उछी विवासे। विवासो वर्जनम् ॥। नैशस्य तमसो निवारयित्र्य उषसः उषोदेवता उदयात्पूर्वकालाभिमानिन्यः। ॥ दिवसानां बाहुल्यम् अपेक्ष्य उषस इति बहुवचननिर्देशः ॥। तथा ध्रुवाः निश्चलाः स्थिराः पर्वताः पर्ववन्तः शैला हिमवदादयश्च। मृत्युपाशान् नुदन्ताम् इति योज्यम्। माम् अनुगृह्णन्त्विति वा शेषोध्याहर्तव्यः। तेषाम् अग्न्यादीनाम् अनुग्रहात् सहस्रं प्राणाः। सहस्रम् इति अपरिमितनाम। प्राणस्य व्यापारभेदेन आनन्त्याद् अपरिमितत्वम्। ते मयि आयुष्कामे आ सर्वतो यतन्ताम् चेष्टां कुर्वन्तु। अथ वा प्राणसंवादश्रुतिषु इन्द्रियाणा-

मपि प्राणशब्दव्यवहार्यत्व[1]श्रवणात् "सप्त प्राणाः प्रभवन्ति" [तै॰ आ॰ १०. १०. १] "नव वै प्राणा नाभिर्दशमी" [तै॰ ब्रा॰ १. ३. ७. ४] इत्यादौ [च] चक्षुरादीन्द्रियाणामपि प्राणशब्दव्यवहारात् तेषामपि स्थैर्यस्य मुख्यप्राणवदेव आशास्यत्वात् तद्व्यापारबाहुल्यमपि अपेक्ष्य सहस्रं प्राणा मय्या यतन्ताम् इत्युक्तम् ॥

श्रीमद्राजाधिराजराजपरमेश्वरश्रीवीरहरिहरमहाराजसाम्राज्य-
धुरंधरेण सायणाचार्येण विरचिते अथर्ववेदार्थप्रकाशे
सप्तदशकाण्डं समाप्तम् ॥

---

1 S' °व्यवहारार्थत्व°.

श्रीगणाधिपतये नमः ॥

यस्य निश्वसितं वेदा यो वेदेभ्योखिलं जगत् ।
निर्ममे तम् अहं वन्दे विद्यातीर्थमहेश्वरम् ॥

"ओ चित् सखायम्" इति अष्टादशकाण्डे चत्वारोनुवाकाः । तत् काण्डं सकलं पितृमेधे शवदाहे[1] अग्निप्रदानानन्तरं सप्तनवैकादशादिविषम-संख्याका ब्राह्मणाः पूर्वाभिमुखोपविष्टा[2] जपेयुः ॥

तत्रैव कर्मणि सारस्वतहोमानन्तरं सर्वे बान्धवा अनेन काण्डेन सकलेन प्रेतम् उपतिष्ठेरन् । तथा च कौशिकेन सूत्रितम् । ["सर्वैरुपतिष्ठन्ति" इति । कौ० ११.२] ॥

तत्र प्रथमेनुवाके षट् सूक्तानि । आदितश्चतुर्णां सूक्तानां काण्डप्रयुक्त एव विनियोगः[3] । तेषु प्रथमेन सूक्तेन द्वितीये च सूक्ते "अधा कृणुष्व संविदं सुभद्राम्" इत्यन्तेन च वैवस्वतयोर्यमयम्योः संभोगार्थः संवादः प्रतिपादितः । तत्र यमी मिथुनार्थं स्वभ्रातरं[4] यमं बहुप्रकारं प्रार्थितवती । स च स्वभगिनीगमनस्य अत्यन्तम् अनुचितत्वाद् नानाविधाभिर्युक्तिभिस्तां प्रत्याचख्यौ । तयोर्यमयम्योः सरण्वां[5] विवस्वतः सकाशाद् युगलभावेनोत्पत्तिः[6] उपरिष्टात् "त्वष्टा दुहित्रे वहतुं कृणोति" [५३] इत्याख्यायिकया प्रपञ्चयिष्यते ॥

तत्र प्रथमसूक्ते प्रथमा ॥

ओ चित् सखायं सख्या ववृत्यां तिरः पुरू चिदर्णवं जगन्वान्[१] ।
पितुर्नपातमा दधीत वेधा अधि क्षमि प्रतरं दीध्यानः ॥ १ ॥

---

१ C B R A K[m] V जंघन्वान्.

---

1 S′ °देहे. 2 S′ is corrupt here and reads पूर्वाभिजपामुखयुगाद्यात् for पूर्वाभिमुखोपविष्टा जपेयुः ।. The restoration is in the words of the *Kes′avî*. 3 S′ inserts तत्र प्रथमेनुवाके षट् सूक्तानि here again. 4 S′ स्वभर्तारं. 5 S′ सरण्यां. 6 S′ °भावेननोत्पत्तिः.

ओ इति । चित् । सखायम् । सख्या । ववृत्याम् । तिरः । पुरु । चित् । अर्णवम् । जगन्वान् ।
पितुः । नपातम् । आ । दधीत । वेधाः । अधि । क्षमि । प्रऽतरम् । दीध्यानः ॥ १ ॥

इदं यम्या वचनम् । अहं सखायम् समानख्यानं यमम् । यैव विवस्वत्पुत्रलक्षणा ख्यातिर्यमस्य सैव यम्या अपीति ख्यातेः समानत्वात् सखित्वं यमस्य । अथ वा गर्भवासप्रभृति युगलत्वेन अवस्थानात् सखित्वम् । तादृशं यमं सख्या सखित्वेन संभोगविषयैकमनस्कत्वलक्षणेन निमित्तेन ओ चित् । चिदिति पूरणः । आ उ इति निपातद्वयसमुदायात्मकम् ओ इत्येकं पदम् । आ ववृत्याम् आवर्तयामि । अस्मदनुकूलं करोमीत्यर्थः । अथ वा स्वमनीषितस्य अविहितरूपत्वात् लज्जया स्वयं तम् आवर्तयितुम् अशक्नुवाना ब्रूते सख्या आह्वानोपायभूतया आ ववृत्याम् इति । इदानीं संभोगोचितान्तर्हितप्रदेशप्रदर्शनपूर्वकं तत्संभोगम् आशास्ते तिरः पुरू चिद् इत्यादिना । तिरस्तिरोहितं पुरु विस्तीर्णम् अर्णवम् मेघं समुद्रं वा जगन्वान् गच्छन् । अत्र समुद्रशब्देन तन्मध्यवर्ती द्वीपो वा लक्षयितव्यः । संभोगस्य अन्तर्हितदेशाभावेन यमः प्रतिषेत्स्यतीति बुद्ध्या एवम् आह । एवं लब्धाभिमतप्रदेशो यमः पितुर्विवस्वतो नपातम् नप्तारं पौत्रं यम्याम् उत्पन्नः पुत्रस्तत्पितुर्विवस्वतो नप्ता भवति । अथ वा नपातम् न पातयितारं कुलस्य प्रवर्तकम् इत्यर्थः । तादृशं पुत्रं वेधाः विधाता पुत्रस्य उत्पादको यमो मयि आ दधीत गर्भे किम् आदध्यात् । गर्भम् आधातुं भ्रात्रैव भाव्यम् इति को निर्बन्ध इत्याशङ्क्य तस्यातिशयम् आह अधि क्षमीति । ‡ अधिः सप्तम्यर्थानुवादी ‡ । क्षमायाम् इत्यर्थः । प्रतरम् प्रकृष्टतरं दीध्यानः दीप्यमानः । न केवलं स्वकीय एव लोके तस्य प्रकाशः किं तु भूमा-

१ P पुर। We with P[2] Cp.

1 S' °विषयेरक° for °विषयैक°. 2 S' रामात्यर्थः for करोमीत्यर्थः. 3 S' आधातुं किं भ्रात्रैवाभाव्यम्.

वपि अतिशयितप्रकाश इत्यर्थः । सर्वप्राणिसंहाराधिकारावस्थितत्वाद् भू[1]-लोके तस्य ख्यातिः सर्वप्राणिप्रसिद्धा । यद्वा दीध्यानः मयि गर्भम् आधातुम् उपायं ध्यायन्निति व्याख्येयम् । ⌛ववृत्याम् इति । वृतु वर्तने । अस्मात् लिङ् । व्यत्ययेन परस्मैपदम् । "बहुलं छन्दसि" इति शपः श्लुः । यद्वा अस्माद् यङ्लुगन्तात् लिङि "चर्करीतं पदम् अदादिवच्च द्रष्टव्यम्" इति परस्मैपदम् । जगन्वान् । गमेर्लिटः क्वसुः । "विभाषा गमहनविदविशाम्" इति इटो विकल्पितत्वाद् अत्र इडभावः । "म्वोश्च" इति मकारस्य नत्वम् ⌛ ॥

द्वितीया ॥

न ते सखा सख्यं वष्ट्येतत् सलक्ष्मा यद् विषुरूपा[1] भवाति ।
महस्पुत्रासो असुरस्य वीरा दिवो धर्तार उर्विया परि ख्यन् ॥ २ ॥

न । ते[2] । सखा । सख्यम् । वष्टि । एतत् । सऽलक्ष्मा । यत् । विषुऽरूपा । भवाति ।
महः । पुत्रासः । असुरस्य । वीराः । दिवः । धर्तारः । उर्विया । परि । ख्यन् ॥ २ ॥

इदं यमस्य वाक्यम् । ते सखा त्वया सह समानोदरोत्पन्नत्वेन[3] सखिभूतो यमः एतत् उक्तलक्षणं भ्रातृस्वस्रोः[4] संभोगात्मकं सख्यं न वष्टि न कामयते । सख्यं कुतो[5] वा न कामयत इति तत्र कारणम् आह । यत् यस्मात् सलक्ष्मा समानम् एकमेव लक्ष्म एकोदरत्वलक्षणं यस्याः सा तथोक्ता सहजा[6] सती विषुरूपा स्वसृरूपं परित्यज्य भार्यात्वलक्षणरूपवती भवाति भवेत् अतो न वष्टीति संबन्धः । यद्वा वाक्यद्वयम् । यत् यतः सलक्ष्मा अतो न सख्यं वष्टि । लोके विषुरूपैव भवाति भवति । भार्येति[7] शेषः । यत एवम् अत इति पूर्वत्र संबन्धः । न केवलं मम

---

१ B °विषूरूपा. We with A R K^m C V Dc. २ Cp ते ।. We with P.

---

1 S' inserts स before भूलोके. 2 S' °सिद्धा for °प्रसिद्धा. 3 S' has अ---सिक्षोत्पन्न° in place of ते सखा त्वया सह समानोदरो°, the lacuna being long enough to contain about twenty letters. The restoration is conjectural. 4 S' भ्रातुःस्वस्रोः. 5 S' कोवा. 6 S' सहरा. 7 S' भार्याभवतीति for भार्येति.

कामनाभावः किं तु देवा अपि निराकरिष्यन्तीत्याह महस्पुत्रास इत्या-दिना । महः महतो महत्त्वोपेतस्य असुरस्य प्रकृष्टासोर्बलवतो रुद्रस्य पु-त्रासः पुत्रा मरुतः । ते विशेष्यन्ते[1] । वीराः विविधम् ईरयन्ति प्रेरयन्ति शत्रून् इति वीराः विक्रमवन्तः । दिवः द्युलोकस्य धर्तारः धारकाः पा-लकाः उर्विया[2] उरवो महान्तो व्याप्ताः ते परि ख्यन् परिवदन्ति । नि-राकरिष्यन्तीत्यर्थः । ख्या प्रकथने । "अस्यतिवक्तिख्यातिभ्योङ्" इति च्लेः अङ् आदेशः ॥

तृतीया ॥

उशन्ति घा ते अमृतास एतदेकस्य चित् त्यजसं मर्त्यस्य ।
नि ते मनो मनसि धाय्यस्मे जन्युः पतिस्तन्व१मा विविश्याः ॥ ३ ॥

उशन्ति । घ । ते । अमृतासः । एतत् । एकस्य । चित् । त्यजसम् । मर्त्यस्य ।
नि । ते । मनः । मनसि । धायि । अस्मे इति । जन्युः । पतिः । तन्वम् ।
आ । विविश्याः ॥ ३ ॥

इदं यमीवचनम् । हे यम रुद्रपुत्रा निराकरिष्यन्तीति मा वादीः । किं तु ते अमृतासः अमृता देवा मरुतः एतत् मया प्रार्थ्यमानं कर्म उशन्ति घ । घेति प्रसिद्धौ । कामयन्त एव । एतच्छब्दार्थम् आह । एकस्य असाधारणस्य मर्त्यस्य मनुष्यस्य पुत्रस्य त्यजसम् त्यागं गर्भान्नि-र्गमनम् उत्पत्तिम् उशन्तीति संबन्धः । यत एवम् अतस्ते मनः[3] अस्मे अस्माकं मनसि नि धायि निधीयताम् । आवयोर्मनः एकमेवास्त्वित्यर्थः । अनन्तरं जन्युः[4] अपत्यस्य[4] जनयिता त्वं पतिः । भूत्वेति शेषः । भ्रातृभावं परित्यज्य पतिः सन् तन्वम् तनूं मामकीनाम् आ विविश्याः आविश प्रविश । यद्वा तव तनूं मयि आवेशय । संभोगं कुर्वित्यर्थः । विश प्रवेशने । लिङि "बहुलं छन्दसि" इति शपः श्लुः ॥

चतुर्थी ॥

न यत् पुरा चकृमा कद्ध नूनमृतं वदन्तो अनृतं रपेम ।

---

1 S' विलेष्यंते. 2 S' उर्व्या. 3 S' नमः. 4 S' जन्युपरइत्यस्य.

गन्धर्वो अप्स्वप्या च योषा सा नौ नाभिः परमं जामि तन्नौ ॥ ४ ॥

न । यत् । पुरा । चकृम । कत् । ह । नूनम् । ऋतम् । वदन्तः । अनृतम् । रपेम ।

गन्धर्वः । अप्ऽसु । अप्या । च । योषा । सा । नौ । नाभिः । परमम् । जामि । तत् । नौ ॥ ४ ॥

इदं यमस्य वाक्यम् । यत् यस्मात् कारणात् पुरा इतः पूर्वस्मिन् काले न चकृम एतादृशं कर्म भगिनीसंभोगलक्षणं न चकृम न कृतवन्तः स्मः अतः कद्ध कस्मात् खलु कारणात् नूनं निश्चयम् । किमर्थं करिष्याम इति शेषः । तदेव प्रकारान्तरेणाह । ऋतम् सत्यं यथार्थं वदन्तः ब्रुवाणा वयम् अनृतम् असत्यम् अयथार्थं कथं रपेम स्पष्टं ब्रूमः । "यद्धि मनसा ध्यायति तद् वाचा वदति तत् कर्मणा करोति" इति [तै॰ सं॰ ६. १. ७. ४] श्रुतेः असत्याभिधाने अङ्गीकृते पश्चात् तदाचरणमपि भवेदेवेति[1] बुद्ध्या असत्यवदनमपि न कुर्म इति प्रतिज्ञया अभिप्रायः । अथ वा संभोगो मास्तु तद्विषयं[2] शृङ्गारकवचनं वा कर्तव्यम् इत्याशङ्क्य तदपि निराक्रियते ऋतम् इत्यादिना ॥ उक्तनिषेधसिद्धये निषिध्यमान[3]स्यार्थस्य प्रतिकूलताम् आह गन्धर्वे इत्यादिना । गाम् उदकं धारयतीति गन्धर्वः आदित्यः अप्सु । अन्तरिक्षनामैतत् । अनाश्रये स्थाने अस्य शब्दस्य व्यवहारः । अन्तरिक्षे । साक्षित्वेन[4] वर्तत इति शेषः । तथा अप्या [[5]अन्तरिक्षस्था सा प्रसिद्धा योषा[5]] च आदित्यभार्या च अन्तरिक्षे वर्तते । सा भार्या नौ आवयोः नाभिः उत्पत्तिस्थानम् उभयोरपि तत एवोत्पत्तेः । तत् मिथुनं परमं निरतिशयं [नौ आवयोः] जामि बन्धुभूतम् । अत्र भार्याया नाभित्वेऽभिहिते तत्पतिर्विव[स्वानपि उक्त एव अतस्तस्य पुनरभिधानं] न । यद्वा मातुरुदरादेव गर्भनिर्गमात् सा नौ नाभिरिति तस्या एवाभिधानम् । इतरेषां बन्धुत्वस्य मातापितृसंबन्धसव्यपे-

१ Cp जामि ।.

1 S′ भवेदेवेविपबुद्ध्या for भवेदेवेति बुद्ध्या. 2 S′ तद्विषयंगारकवचनं. 3 S′ निषेध्य°. 4 S′ अंतरिक्षसाक्षि°. 5 S′ omits this portion, which we have restored from the *Rigveda*. S′ has a blank space for about eight letters between अप्या and च.

क्षत्वात् तयोर्बन्धुत्वस्य परमत्वम् । यतः पितरावभिन्नौ तौ च संनिहितौ अतस्त्वदभीष्टं न कार्यम् इति तात्पर्यम् ॥

पञ्चमी ॥

गर्भे॒ नु नौ॑ जनि॒ता दंप॑ती कर्दे॒वस्त्वष्टा॑ सवि॒ता वि॒श्वरू॑पः ।
नकि॑रस्य॒ प्र मि॑नन्ति व्र॒तानि॒ वेद॑ नाव॒स्य पृ॑थि॒वी उ॒त द्यौः ॥ ५ ॥

गर्भे॑ । नु॑ । नौ॒ । ज॒नि॒ता । दंप॑ती॒ इति॒ दम्ऽप॑ती । कः॒ । दे॒वः । त्वष्टा॑ ।
स॒वि॒ता । वि॒श्वऽरू॑पः ।
नकि॑: । अ॒स्य॒ । प्र । मि॒न॒न्ति॒ । व्र॒तानि॑ । वेद॑ । नौ॒ । अ॒स्य । पृ॒थि॒वी ।
उ॒त । द्यौः ॥ ५ ॥

यम्या वचनम् इदम् । एवम् एकयोनिजत्वेन दांपत्ये निराकृतेपि[1] तत् पूर्वमेव सिद्धम् इत्याह । नौ आवां गर्भे नु गर्भ एव जनिता जनयिता अपत्यस्य स्रष्टा देवः दंपती दांपत्यवन्तौ[2] कः अकः कृतवान् । ‡ करोतेर्लुङि "मन्त्रे घस॰" इत्यादिना च्लेर्लुक् ‡ । क इति आकाङ्क्षायाम् आह । त्वष्टा मातुरुदरस्थितस्य रेतसः अवयवसंनिवेशकर्ता विश्वकर्मा देवः सविता प्रसविता सर्वस्य अनुज्ञाता विश्वरूपः विश्वं रूप्यते येन सः विश्वस्रष्टा विश्वात्मको वा । एवंमहानुभावो देवः । दंपती करिति पूर्वत्र संबन्धः । यस्माद् उक्तमहिमोपेतः अतः अस्य त्वष्टुः सवितुः व्रतानि तत्कृतानि कर्माणि नकिः प्र मिनन्ति न हिंसन्ति न केपि अतिक्रामन्ति । ‡ मीञ् हिंसायाम् । "प्वादीनां ह्रस्वः" इति ह्रस्वः । "श्नाभ्यस्तयोरातः" इति आकारलोपः ‡ । एतत् सर्वं स्वकार्यार्थं कल्पितम् इति आशङ्कायाम् आह वेद नौ इति । नौ आवयोः अस्य । ‡ कर्मणि षष्ठी ‡ । इदं कर्म गर्भ एव दंपतित्वलक्षणम्[3] । यद्वा अस्य त्वष्टुर्देवस्य कर्म दंपतिकरणलक्षणं कर्म । पृथिवी देवी उत अपि च द्यौर्देवता[4] वेद उभे अपि जानीतः । तस्मात् एतद् यथार्थम् इत्यर्थः ॥

---

१ P तु । We with P Cr.　२ Cr वेदंनौ ।. P P वेद । नौ ।.

1 S′ omits °पि in निराकृतेपि.　2 S′ दंपत्यौ for दांपत्यवन्तौ.　3 S′ दंपती°.　4 S′ omits द्यौर्° in द्यौर्देवता.

षष्ठी ॥

को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून्।
आसन्निषून् हृत्स्वसो मयोभून् य एषां भृत्यामृणधत् स जीवात् ॥ ६ ॥

कः। अद्य। युङ्क्ते। धुरि। गाः। ऋतस्य। शिमीऽवतः। भामिनः। दुःऽहृणायून्।
आसन्ऽइषून्। हृत्सुऽअसः। मयःऽभून्। यः। एषाम्। भृत्याम्। ऋणधत्। सः। जीवात् ॥ ६ ॥

इदं यमस्य वाक्यम्। यम्या असत्यमेवोक्तम् इत्यभिप्रेत्य सत्याभिधानस्य[1] दुर्लभताम् आह। अद्य इदानीम् अस्मिन् काले ऋतस्य सत्यस्य धुरि वहनव्यापारे गाः[2] बलीवर्दस्थानीया वाचः स्वीयाः को युङ्क्ते को योजयति[3]। न कोपीत्यर्थः। गोशब्दस्य लिङ्गद्वयसाधारणत्वाद् उत्तरत्र गोविशेषणानि सर्वाण्यपि पुंलिङ्गतया निर्दिष्टानि। शिमीवतः। [शमीति[4]] कर्मनाम। छान्दसम् इत्वम्। कर्मवतः कार्यपर्यवसायिनः। केवलायाः सत्योक्तेः सुलभत्वात्। भामिनः तेजस्विनः लोके सत्यवादा एव जयन्ति "सत्यमेव जयति[5] नानृतम्" इत्यादिश्रुतेः [मु° ३. १. ६]। दुर्हृणायून्। ⌛हृणीयतिः क्रोधकर्मा⌛। क्रोधरहितान् इत्यर्थः। यद्वा लज्जारहितान् न हि सत्यवदनविषये क्रोधलज्जे स्तः। ⌛हृणीङ् लज्जायाम्। कण्ड्वादित्वाद् यक्। अस्माद् उण् प्रत्ययः। अतो लोपे सति वर्णव्यापत्त्या आकारः। मृगय्वादिर्वा द्रष्टव्यः⌛। आसन्निषून् आसन् आस्ये इष्यमाणान् तस्मात् प्रेर्यमाणान् सर्वदा सत्यविषयसंकल्पवतोपि मुखतः सत्यं वक्तुम् अशक्यम् इत्यभिप्रायेण एवम् उच्यते। ⌛"पद्दन्°" इत्यादिना आस्यशब्दस्य आसन् आदेशः। इष गतौ इत्यस्मात् इषेः किच्च [उ° १. १३] इति [उप्रत्ययः। स च कित्][6]⌛। हृत्स्वसः हृदयेषु हृदयेभ्यः अस्यमानान् श्रोतॄणां हृद-

१ Cᴾ शमी°. Pᴾ² शिमी°.

1 S′ °भिधानंसे for °भिधानस्य. 2 S′ पाः वाः for गाः. 3 S′ यजति. 4 S′ नि° for शमीति. 5 So S′ and not जयते. 6 So S′.

येषु क्षिप्यमाणान् वा कण्ठाद् उपरि निर्गच्छन्तः शब्दाः[1] संमता लोके हृदयपूर्वकास्तु दुर्लभा इत्यभिप्रायेण हृत्स्वस इत्युक्तम् । ⧗ असे-र्व्यत्ययेन कर्मणि क्विप् "तत्पुरुषे कृति बहुलम्" इति सप्तम्या अ-लुक् ⧗ । मयोभून् । मय इति सुखनाम । सुखस्य भावयितॄन् स-[2]त्याभिर्वाग्भिः सुखं सर्वेषां भवति असत्याभिस्तु असुखं भवतीति लोके सुप्रसिद्धम् एतत् । यः पुरुषो महान् एषाम् उक्तविशेषणयुक्तानां गवां भृत्याम् भृतिं भरणम् । ⧗ "भृञोऽसंज्ञायाम्" इति क्यप् । तुगा-गमः ⧗ । ऋणधत् वर्धयेत् । सत्यवचनम् अभिवृद्धं कुर्यात् । ⧗ ऋधु वृद्धौ । अस्मात् लेटि अडागमः ⧗ । स जीवात् चिरकालं जीवति सत्याभिधानस्य माहात्म्यात् । ⧗ जीवात् । लेटि आडागमः ⧗ ॥

सप्तमी ॥

को अस्य वेद प्रथमस्याह्नः क ईं ददर्श क इह प्र वोचत् ।
बृहन्मित्रस्य वरुणस्य धाम कदु ब्रव आहनो वीच्या नॄन् ॥ ७ ॥

कः । अस्य । वेद । प्रथमस्य । अह्नः । कः । ईम् । ददर्श । कः । इह । प्र । वोचत् ।
बृहत् । मित्रस्य । वरुणस्य । धाम । कत् । ऊं इति । ब्रवः । आहनः । वी-च्या । नॄन् ॥ ७ ॥

इदं यस्या वचनम् । [अस्य] प्रथमस्य अह्नः । ⧗ कर्मणि ष-ष्ठ्यौ ⧗ । प्रथमम् अहः । आवयोः संगमदिवसम् इत्यर्थः । तत् को वेद जानाति । न कोपीत्यर्थः । किं च ईम् इदं कर्म इदानीं वा को ददर्श पश्येत् । न कश्चित् पश्यतीत्यर्थः । तथा इह एतद्विषये कः पु-मान् [3]दृष्टम् अर्थं प्र वोचत् प्रब्रूयात् दृष्टम् अर्थम् अन्यस्मै कथयेत् । सोपि नास्त्येव । ज्ञाता नैव किल । द्रष्टा कथयिता च दूरापास्तावि-त्यभिप्रायः । ज्ञानदर्शनप्रवचनानाम् अविषयं कालं संभावयति बृहदि-

1 S′ has a lacuna for six letters in place of °छन्तः शब्दाः 2 S′ has a blank space for twenty or twenty-five letters for °त्याभिर्वाग्भिः सुखं सर्वेषां भवति असत्याभिस्तु असुखं भवतीति लोके. 3 S′ इष्टम्.

त्यादिना । मित्रस्य देवस्य धाम स्थानम् । अहरित्यर्थः । तद् बृहत् प्रभूतम् । तथा वरुणस्य तमोवारकस्य देवस्य धाम रात्र्याख्यम् तच्च बृहत् । अहोरात्रयोर्मध्ये कतमश्चन समयः संभोगाय संपत्स्यत इत्यभिप्रायः । तस्मात् हे आहनः । आङ्पूर्वात् हन्तेः[1] असुन् । आहन्तः अस्मदभिमतस्य अकरणेन क्लेशकारिन् कत् कथं वीच्याः[*2] विविधम् अञ्चन्तः गच्छन्तः संचरन्तो नॄन् नराः । जसः स्थाने शस् । ते सन्तीति कथं ब्रवः ब्रूयाः ब्रवीषि ॥

अष्टमी ॥

यमस्य मा यम्यं[1] काम आगन्त्समाने योनौ सहशेय्याय ।
जायेव पत्ये तन्वं रिरिच्यां वि चिद् वृहेव रथ्येव चक्रा ॥ ८ ॥

यमस्य । मा । यम्यम् । कामः । आ । अगन् । समाने । योनौ । सहऽशेय्याय ।
जायाऽइव । पत्ये । तन्वम् । रिरिच्याम् । वि । चित् । वृहेव[3] । रथ्याऽइव । चक्रा ॥ ८ ॥

इदमपि यमीवचनम् । मा मां [यम्यम्] यमीं यमस्य कामः यमविषयोभिलाषः आगन् आगमत् । यम्यम् इति । "वा छन्दसि" इति पूर्वरूपत्वाभावे यण् आदेशः । "उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्य" इति यणः स्वरितत्वम् । आगन्निति[3] । गमेर्लुङि "मन्त्रे घस०" इति च्लेर्लुक् । "हल्ङ्या०" इत्यादिना तिलोपे "मो नो धातोः" इति नत्वम् । कामं विशिनष्टि । समाने साधारणे योनौ एकस्मिन् शयने सहशेय्याय सहशयनार्हाय । शेयं शयनम् । "अचो यत्" इति भावे यत् । "तद् अर्हति" इति यत् । यद्वा शय्याम् अर्हतीति शय्यः तस्मै । "तद् अर्हति" इति यत् । एकारोपजन-

१ A B C K[m] R Dc ३ for १. We with V. २ Cp सहुऽराज्याय, a reading which doubtless arose from the omission of the mâtrâ over शे° and then the श being mistaken for रा. ३ Cp बृहेव ।.

1 S′ हेः for हन्तेः. 2 S′ वीच्यः. 3 S′ आगआगन्निति.

श्छान्दसः ⧗ । तदर्थं तन्वम् तनूं मामकीनां रिरिच्याम् पृथक् कु-र्याम् । तदधीनां[1] कुर्याम् इत्यर्थः । तत्र दृष्टान्तः जायेव पत्ये [इति] । यथा स्वकीयाय भर्त्रे जाया पत्नी स्वकीयां तनुं पत्यधीनां[2] करोति एवम् इत्यर्थः । तस्मिन् यथा विस्रम्भेण कामोपभोगः एवं करोमीत्यर्थः । अ-नन्तरं वि वृहेव आवां संश्लेषं करवाव । इतरेतरयोः संश्लेषो[3] विवर्हो । तत्रापि दृष्टान्तोभिधीयते । रथ्येव चक्रा रथ्यया रथयोग्यया पदव्या सह[4] [चक्रा] चक्राणि यथा वृहन्ति तद्वत् । ⧗ रथ्येति । "तद् वहति र-थयुगप्रासङ्गम्" इति यत् ⧗ । अथ वा रथ्येव रथाधाराणि चक्राणि अक्षेण सह विवर्हो कुर्वन्ति तद्वद् इति व्याख्येयम् ॥

नवमी ॥

न ति॑ष्ठन्ति॒ न नि मि॑षन्त्ये॒ते दे॒वानां॒ स्पश॑ इ॒ह ये चर॑न्ति ।
अ॒न्येन॒ मदा॑हनो याहि॒ तू॒यं[1] तेन॒ वि वृ॒ह[2] र॒थ्ये॑व च॒क्रा ॥ ९ ॥

न । ति॒ष्ठ॒न्ति॒ । न । नि । मि॒ष॒न्ति॒ । ए॒ते । दे॒वाना॑म् । स्पशः॑ । इ॒ह । ये । चर॑न्ति ।

अ॒न्येन॑ । मत् । आ॒ह॒नः॒ । या॒हि॒ । तू॒यम् । तेन॑ । वि । वृ॒ह॒ । र॒थ्या॑ऽइव । च॒क्रा ॥ ९ ॥

इह अस्मिन् लोके ये देवानां स्पशः चराः चरन्ति भ्रमन्ति तेषां म-ध्ये एके[*] केचनापि न तिष्ठन्ति एकत्र स्थितिं न कुर्वन्ति । तथा न नि मिषन्ति । पक्ष्मसंकोचनं निमेषः । तदपि न कुर्वन्ति । न निद्रान्ती-त्यर्थः । सर्वदैव[5] स्पशा जागरूका वर्तन्त इत्यर्थः । ⧗ स्पश इति । जसः[6] सुः । किंवा द्रष्टव्यः ⧗ । यत एवम् अतः [हे आहनः] मत् मत्तः अन्येन सह । ⧗ "एकवचनस्य च" इति पञ्चम्या अत् आदेशः ⧗ । तेन सह । रमस्वेति शेषः । तदर्थं तूयम् तूर्णं याहि

१ P[2] तूयन् । २ Cp बृहु । P बृह । We with P[2].

1 S' तदनां. 2 S' पत्यधानं. 3 S' om. संश्लेषो. 4 S' साह. 5 S' °देव°. 6 S' has a lacuna for six letters, after which it reads सः सुः.

गच्छ । तेन सह वि वृह संश्लेषं कुरु । रथ्येव चक्रेति दृष्टान्तवचनं व्याख्यातम् ॥

दशमी ॥

रात्रीभिरस्मा अहभिर्दशस्येत् सूर्यस्य चक्षुर्मुहुरुन्मिमीयात् ।
दिवा पृथिव्या मिथुना सबन्धू यमीर्यमस्य विवृहादजामि ॥ १० ॥ (१)

रात्रीभिः । अस्मै । अहऽभिः । दशस्येत् । सूर्यस्य । चक्षुः । मुहुः । उत् । मिमीयात् ।
दिवा । पृथिव्या । मिथुना । सबन्धू इति सऽबन्धू । यमीः । यमस्य । विवृहात् । अजामि ॥ १० ॥ (१)

इदं यमीवचनम् । अस्मै यमाय रात्रीभिः तथा अहभिः अहोभिः । रात्रिषु अहःसु चेत्यर्थः । सर्वदा दशस्येत् । ॥दशस्यतिर्दानकर्मा॥ । प्रयच्छतु । यजमानो हविरिति शेषः । तथा सूर्यस्य देवस्य चक्षुः प्रकाशकं तेजः मुहुः अन्वहम् उन्मिमीयात् ऊर्ध्वं गच्छेत् । अस्मा अर्थायेति शेषः । सूर्योदयोपि अस्य भोगायास्त्वित्यभिप्रायः । ॥डुमिञ् प्रक्षेपणे । व्यत्ययेन श्नुः दीर्घश्च॥ । किं च दिवा पृथिव्या च दिवा सह पृथिवी पृथिव्या सह द्यौश्च मिथुना मिथुने परस्परं मिथुने अविश्लिष्टे सबन्धू समानबन्धने यथा एकमनस्के एवं यमीः यमी । ॥सोः सुः॥ । यमस्य अजामिः अबन्धुः स्वसृरूपबन्धुत्वरहिता सती वि वृहात् विवृहणं कुर्यात् इति परोक्षत्वेन आत्मनो व्यपदेशः ॥

इति अष्टादशकाण्डे प्रथमेनुवाके प्रथमं सूक्तम् ॥

"आ घा ता" इति द्वितीयं सूक्तम् ॥

तत्र प्रथमा ॥

आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि ।

१ Cp बिभृयात् । changed to विवृहात् ।.

उप॑ बर्बृहि वृष॒भाय॑ बा॒हुम॒न्यमि॑च्छस्व सुभगे॒ पतिं॒ मत् ॥ ११ ॥

आ । घ॒ । ता । ग॒च्छा॒न् । उत्ऽत॑रा । यु॒गानि॑ । यत्र॑ । जा॒मय॑ः । कृ॒णव॑न् । अजा॑मि ।

उप॑ । ब॒र्बृ॒हि॒ । वृ॒ष॒भाय॑ । बा॒हुम् । अ॒न्यम् । इ॒च्छ॒स्व॒ । सु॒ऽभ॒गे॒ । पति॑म् । मत् ॥ ११ ॥

इदं यमवाक्यम् । घ इति पादपूरणः । ता तानि उत्तरा उत्तराणि युगानि अहोरात्रयोर्युगलानि । आगामिनो दिवसा इत्यर्थः । आ गच्छान् आगच्छेयुः । ननु दिनानि आगच्छन्त्येव किमिति आशास्यत इत्याशङ्कायाम् उत्तराणि दिवसानि विशिनष्टि । यत्र येषु आगामिषु दिवसेषु जामयः बन्धवः स्वसृभूताः अजामि अबन्धुत्वं भार्यात्वं कृणवन् कुर्युः । ॥ कृवि हिंसाकरणयोश्च । "धिन्विकृण्व्योर च" इति उप्रत्ययः ॥ । यस्माद् एवं तस्मात् हे यमि त्वं वृषभाय सेक्त्रे संभोगं कुर्वते अन्यस्मै बाहुम् स्वीयं भुजम् उप बर्बृहि अतिवृद्धं कुरु । ॥ बृहेर्यङ्लुगन्तात् लोटि "सेर्ह्यपिच्च" इति हिः । तस्य ङित्त्वाद् गुणाभावः । धातोरन्त्यलोपश्छान्दसः ॥ । तदर्थम् हे सुभगे कामिनि मत् मत्तः । ॥ "एकवचनस्य च" इति पञ्चम्या अत् आदेशः ॥ । अन्यं पतिम् इच्छस्व[1] कामयस्व[2] ॥

द्वितीया ॥

किं भ्राता॑सद् यद॑ना॒थं भवा॑ति॒ किमु॒ स्वसा॒ यन्नि॒र्ऋ॑ति॒र्नि॒गच्छा॑त् ।

काम॑मूता ब॒ह्वे॒३॒॑तद् र॑पामि त॒न्वा॒३॒॑ मे त॒न्वं॒१॒॑ सं पि॑पृग्धि ॥ १२ ॥

किम् । भ्राता॑ । अ॒स॒त् । यत् । अ॒ना॒थम् । भवा॑ति । किम् । ऊं॒ इति॑ । स्वसा॑ । यत् । निः॒ऽऋ॑तिः । नि॒ऽगच्छा॑त् ।

काम॑ऽमूता । ब॒हु । ए॒तत् । र॒पा॒मि॒ । त॒न्वा॒ । मे॒ । त॒न्व॒म् । सम् । पि॒पृ॒ग्धि॒ ॥ १२ ॥

---

१ AB ३ for १. We with K̈ Dc. २ P °भूता I. We with P̈ Cp.

1 S' इच्छ. 2 S' कामय.

[इदं यमीवचनम् ।] स किं भ्राता असत् भ्राता भवेत् न भवत्येव । स भ्राता क[1] एवं निन्द्यत इति तम् आह । यत् यदि भ्रातरि विद्यमाने स्वसा अनाथं नाथरहितम् अपेक्षितकामशून्यं भवाति भवेत् । स किं भ्रातासद् इति पूर्वत्रान्वयः । एवं भ्रा[2]तरं निन्दित्वा स्वसारं निन्दे[3]ति । सा किमु स्वसा [4]असत् स्वसा भवेत् न भवत्येव । कैवं नि[4]न्द्यत इति तां विशिनष्टि । यत् यदि स्वसृभूतायां विद्यमानायां भ्रातरं निर्ऋतिः दुःखं निगच्छात् प्राप्नुयात् । सा किमु स्वसेति संबन्धः । यतोहं सनाथा अतः काममूता कामेन मूर्छिता बहुविधकामोपेता बहु अधिकम् एतत् इदानीम् एतेन कारणेन वा[5] रपामि प्रलापं करोमि । ॥ बह्वेतत् इत्यत्र संहितायां “स्वरितो वानुदात्ते पदादौ” इति उदा[6]त्तयणः परस्यानुदात्तस्य स्वरितत्वम् ॥ । अतो मम प्रलापस्य सार्थकत्वाय मे मम तन्वा शरीरेण सह हे भ्रातः [तन्वम्] तनूं तावकं शरीरं सं पिपृग्धि संपर्चय । ॥ पृची संपर्के । व्यत्ययेन श्लुः । “बहुलं छन्दसि” इति अभ्यासस्य इत्वम् ॥ ।

तृतीया ॥

न ते॑ ना॒थं य॑म्यत्रा॒हम॑स्मि॒ न ते॑ त॒नूं त॒न्वा३॒॑ सं प॑पृच्याम् ।
अ॒न्येन॒ मत् प्र॒मुद॑ः कल्पयस्व॒ न ते॒ भ्राता॑ सुभगे वष्ट्ये॒तत् ॥ १३ ॥

न । ते॒ । ना॒थम् । य॑मि[1] । अत्र॑ । अ॒हम् । अ॒स्मि॒ । न । ते॒ । त॒नूम् । त॒न्वा॑ । सम् । प॒पृ॒च्या॒म् ।
अ॒न्येन॑ । मत् । प्र॒ऽमुद॑ः । क॒ल्प॒य॒स्व॒ । न । ते॒ । भ्राता॑ । सु॒ऽभ॒गे॒ । व॒ष्टि॒ । ए॒तत् ॥ १३ ॥

इदं यमवाक्यम् । हे यमि अत्र अस्मिन् विषये ते तव अहं नाथम् अभिमतार्थसंपादको भ्राता नास्मि न भवामि । किं च ते तव तन्वा शरीरेण सह [7*]नूनम् निश्चयं [न] सं पपृच्याम् संपर्कं न करोमि । त-

१ Cp यमिं ।.

1 S′ एव. 2 S′ ए भ्रातरं. 3 S′ निन्दिति. 4 S′ om. from असत् to निन्द्य°. 5 S′ ता. 6 S′ उदात्तेणः. 7 Sâyaṇa's text in S′ has नूनं for our तनूम्.

स्मात् [मत्] मत्तः अन्येन पुरुषान्तरेण सह प्रमुदः प्रमोदान् संभोगजनितान् कल्पयस्व साधय । ते तव भ्राता अयं जनः हे सुभगे संभोगार्थिनि एतत् जायापत्यलक्षणं कर्म न वष्टि न कामयते ॥

चतुर्थी ॥

न वा उ ते तनूं तन्वा३ सं पपृच्यां पापमाहुर्यः स्वसारं निगच्छात् ।
अंसंयदे्तन्मनसो हृदो मे भ्राता स्वसुः शयने यच्छ्यीय ॥ १४ ॥

न । वै । ऊं इति । ते । तनूम् । तन्वा । सम् । पपृच्याम् । पापम् । आहुः । यः । स्वसारम् । निऽगच्छात् ।
असम्ऽयत् । एतत् । मनसः । हृदः । मे । भ्राता । स्वसुः । शयने । यत् । शयीय ॥ १४ ॥

इदमपि यमवाक्यम् । पूर्वमन्त्रोक्तमेव निषेधम् अत्यन्तपापतया पुनर्द्रढयति । हे यमि ते [तव] तन्वा सह तनूम् मदीयां न वै सं पपृच्याम् नैव संपर्चयामि । संपर्काभावे हेतुम् आह । स्वसारम् भगिनीं निगच्छात् भ्राता संभोगं कुर्यात् इति यत् एतत् पापं निषिद्धम् आहुः ब्रुवते धर्मरहस्यविदः । न केवलं पारलौकिकं पापमेव अपि तु दृष्टबाधाप्यस्तीत्याह । एतत् वक्ष्यमाणं कर्म [मे मम] मनसः हृदः हृदयाच्च अथवा मनसा हृदयेन च सह असुम् प्राणम् । अपहरेत् इति शेषः । एतच्छब्दार्थम् आह । भ्राता सन् स्वसुर्भगिन्याः शयने । शय्यते अत्रेति शयनम् । एकस्यां शय्यायां शयीय शयनं कुर्याम् इति यद् एतद् इति पूर्वत्रान्वयः ॥

पञ्चमी ॥

बतो बतासि यम नैव ते मनो हृदयं चाविदाम ।

---

१ **C K̈ R** असंयदे°. We with **B V Dc.** २ So **A B K̈ R C V Dc Cr.** ३ **P P̈** असम्ऽयत् । **Cp** असम्ऽयत् । changed to असम् यत् । meant to be असम् । यत् ।. Sâyaṇa: असुम् and यत्, with which he supplies हरेत् &c. But असंयत् is a better reading as its opposite, संयत्, means meeting, including perhaps a meeting of the sexes, so that असंयत् should mean bad or improper sexual intercourse which suits well here.

1 The text in **S′**, however, reads यः स्वसारं निगच्छात् and not यत्स्वसारं निगच्छात्.

अन्या किल त्वां कक्ष्येव युक्तं परि ष्वजातै लिबुजेव वृक्षम् ॥ १५ ॥

बतः । बत । असि । यम । न । एव । ते । मनः । हृदयम् । च । अविदाम । अन्या । किल । त्वाम् । कक्ष्याऽइव । युक्तम् । परि । स्वजातै । लिबुजाऽइ-व । वृक्षम् ॥ १५ ॥

इदं यमी[1]वाक्यम् । हे यम त्वं बतोसि बलाद् अतीतो भवसि दुर्बलो जातोसि[2] बत । खेदानुकम्पयोर्बतशब्दः अत्र खेदे वर्तते । यमस्य पराधीनतया दौर्बल्यं यम्याः खेदाय संपद्यते । स्वाभिमतकार्यस्य तत्रासंभवात् खेदश्च [ । नैव ते मनः तव मनो मयि नास्त्येव । मयि उदासीनो भवसीत्यर्थः ] । किं च तव हृदयम् अविदाम ज्ञातवन्तः स्मः[3] । बहुवचनं पूजार्थम् । हृदयस्य स्वाधीनताया अभावात् खेदेनेदम् उच्यते । हृदयपरिज्ञानप्रकारं प्रकटयति अन्या किलेति । अन्या मत्तः अपरा कामिनी त्वां परि ष्वजातै परिष्वङ्गं कृतवती तस्मात् माम् अवमन्यसे । अत एव च पराधीनत्वाद् दुर्बलश्च भवसीत्यर्थः । अत्र दृष्टान्तद्वयम् । कक्ष्येवे[4]ति एकः । अश्वस्य कक्षप्रदेशस्था[5] रज्जुः कक्ष्या । सा यथा युक्तम् स्वसंबद्धम् अश्वं परिष्वजति श्लिष्टा भवति तद्वत् । दुर्दान्तोप्यश्वः कक्ष्यया संबद्धो यथा स्वाच्छन्द्येन वर्तितुं न शक्नोति तद्वदिति । लिबुजेव वृक्षम् इति द्वितीयो दृष्टान्तः । लिबुजा व्रततिर्भवति [ नि॰ ६.२८ ] इति निरुक्तम् । [सा यथा गाढं][6] वृक्षम् आदित आरभ्य अग्रम् आलिङ्गति तद्वत् त्वाम् अन्या सर्वात्मना स्वाधीनं चकार । एकदेशसंश्लेषस्य सर्वाङ्गसंश्लेषस्य च क्रमेण दृष्टान्तद्वयम् । ✠अत्र बतो बलाद् अतीतो भवति दुर्बलो बतासि [ नि॰ ६.२८ ] इत्यादि निरुक्तम् अनुसंधे[7]यम्✠ ॥

षष्ठी ॥

अन्यमू[1] षु यम्[2]यन्य उ त्वां परि ष्वजातै लिबुजेव वृक्षम् ।

---

१ A B C K^m R V Dc अन्य ऊषु. K^m अन्य उषु. We with P^2. २ K^m inserts त्वं after षु.

---

1 S′ यम॰. 2 S′ omits ॰सि. 3 S′ omits the visarga in स्मः. 4 S′ कक्ष्येवमिति. 5 S′ ॰देशयनू for ॰देशस्था. 6 S′ has a lacuna here for eight or nine letters. 7 S′ अनुसंबंधेयम्.

तस्य॑ वा॒ त्वं मन॑ इ॒च्छा स वा॒ तवाधा॑ कृणुष्व सं॒विदं॑ सु॒भ॑द्राम् ॥ १६ ॥

अ॒न्यम् । ऊं॒ इति॑ । सु । य॒मि॒ । अ॒न्यः । ऊं॒ इति॑ । त्वाम् । परि॑ । स्व॒जा॒ते॒ । लिबु॑जाऽइव । वृ॒क्षम् ।

तस्य॑ । वा॒ । त्वम् । मन॑ः । इ॒च्छ॒ । सः । वा॒ । तव॑ । अध॑ । कृ॒णु॒ष्व॒ । सम्ऽवि॒दम् । सु॒ऽभ॑द्राम् ॥ १६ ॥

इदं यमवाक्यम् । हे यमि त्वम् अन्यमू षु । उशब्दः एवार्थे । अन्यमेव सुष्ठु परि ष्वजातै अन्य उ त्वां त्वामपि अन्यः परि ष्वजाते । एवं परस्परं कुरुतम् इत्यर्थः[1] । तत्र दृष्टान्तः । लिबुजेव वृक्षम् । गतम् एतत् । संश्लेषस्य उभयव्यापारजत्वाद् व्यतिहारेणाभिधानम् । परस्परसंश्लेषः समानमनस्कत्वम्[2] अन्तरेण न घटत इत्यभिप्रेत्य आह तस्य [वा] त्वम् इति । हे यमि तस्य वा मनस्त्वम् इच्छ । वाशब्दश्चार्थे । तस्य मनसे[3] यद् रोचते तदेव त्वम् अनुसरेत्यभिप्रायः । स वा तव । मन इच्छत्विति शेषः । तव मनस आनुकूल्यं भजताम् । अध अथ परस्परानुकूल्यानन्तरं सुभद्राम् अत्यन्तकल्याणां संविदम् संवित्तिं[4] सुखानुभवं तेन सह कृणुष्व कुरु ॥

सप्तमी ॥

त्रीणि॒ च्छन्दां॑सि क॒वयो॒ वि ये॑तिरे पु॒रु॒रूपं॑ द॒र्श॒तं वि॒श्वच॑क्षणम् ।
आपो॒ वाता॒ ओष॑धय॒स्तान्येक॑स्मि॒न् भुव॑न॒ आर्पि॑तानि ॥ १७ ॥

त्रीणि॑ । छन्दां॑सि । क॒वय॑ः । वि । ये॒ति॒रे॒ । पु॒रु॒ऽरूप॑म् । द॒र्श॒तम् । वि॒श्वऽच॑क्षणम् ।
आप॑ः । वाता॑ः । ओष॑धयः । तानि॑ । एक॑स्मिन् । भुव॑ने । आर्पि॑तानि ॥ १७ ॥

कवयः क्रान्तप्रज्ञा ज्ञानिनः पूर्वे महर्षयः देवा वा त्रीणि च्छन्दांसि । अत्र छादनाच्छन्दांसीति व्युत्पत्त्या छन्दःशब्देन वक्ष्यमाणा अबादयस्त्रयो

१ P अन्यः ।. P[2] अन्यम् ।. Cp अ॒न्यः ।. २ V Dc पु॒रु॒रूपं॑ द॒र्श॒तं वि॒श्वच॑क्षणम्. B पु॒रु॒रूपं॑ द॒र्श॒तं वि॒श्वच॑र्षणम्. C पुरुरूपं॑ द॒र्श॒तं वि॒श्वच॑क्षणम्. K[m] पु॒रु॒रूपं॑ द॒र्श॒तं वि॒श्वच॑क्षणम्. We with R. ३ Cp पु॒रु॒ऽरूपम् ।.

1 S' कुवें इत्यर्थः. 2 S' omits °मन°. 3 S' मनसा. 4 S' has वित्त्वि for संवित्ति.

गृह्यन्ते । तानि वि येतिरे यत्नं कृतवन्तः । जगन्निर्वाहायेति[1] शेषः । तेषु एकैकं विशिनष्टि । तेषु मध्ये आपः अप्तत्त्वं पुरुरूपम् नानारूपम् अविकारत्वात् सर्वेषां रूपाणाम् । दर्शतम् दर्शनीयं स्पृहणीयत्वेन प्रियदर्शनम् विश्वचक्षणम् विश्वस्य द्रष्टृ[2] । एवं वाताः वायुतत्त्वमपि प्राणात्मना पुरुरूपं भवति दर्शनीयं च भवति । सूत्रात्मतया विश्वद्रष्टृपि । एवम् ओषध्यात्मकमपीति द्रष्टव्यम् । यद्वा समुदायाभिप्रायेण एकवचनम् । तद् अबादित्रयं पुरुरूपत्वादिधर्मकम् इत्यर्थः । त्रीणि च्छन्दांसीति उक्तम् । कानि तानि त्रीणीति तत्राह आपो वाता ओषधय इति । अबादीनां भुवनाच्छादकत्वं प्रसिद्धम् एव । तेषां भुवनैकप्रयोजकताम् आह तानीति । भवन्ति अत्र प्राणिनः अप्राणिनश्चेति भुवनं भूलोकः । तत्र तन्निर्वाहार्थम् आर्पितानि स्थापितानि सृष्ट्यादौ[3] ॥

अष्टमी ॥

वृषा॒ वृष्णे॒ दुदु॒हे॒ दोह॑सा दि॒वः पयां॑सि य॒ह्वो अदि॑ति॒रदा॑भ्यः ।
विश्वं॒ स वे॑द॒ वरु॑णो॒ यथा॑ धि॒या स य॒ज्ञियो॑ यजति य॒ज्ञियाँ॑ ऋ॒तून् ॥ १८ ॥

वृषा॑ । वृष्णे॑ । दु॒दु॒हे॒ । दोह॑सा । दि॒वः । पयां॑सि । य॒ह्वः । अदि॑तेः । अदा॑भ्यः । विश्व॑म् । सः । वे॒द॒ । वरु॑णः । यथा॑ । धि॒या । सः । य॒ज्ञियः॑ । य॒ज॒ति॒ । य॒ज्ञिया॑न् । ऋ॒तून् ॥ १८ ॥

वृषा कामानाम् अपां च वर्षिता अग्निः वृष्णे आज्यपयआदेर्वर्षित्रे[4] प्रयच्छते यजमानाय तद्भोगार्थं दोहसा दोहनसाधनेन यज्ञादिना दिवः सकाशात् पयांसि उदकानि दुदुहे वर्षितवान् । कीदृशो वृषा । यह्वः महन्नामैतत् । महान् । अथ द्यौर्विशेष्यते । अदितेः अखण्डनीयायाः । न हि द्यौः केनचित् खण्ड्यते । अदाभ्य इति वृष्णो विशेषणम् । कैरपि रक्षःप्रभृतिभिः अहिंसितः । स तादृशोऽग्निः विश्वम् सर्वं धिया प्रज्ञानेन वेद जानाति साक्षात्करोति । तत्र दृष्टान्तः । वरुणो देवो यथा धिया वेत्ति तद्वत् । स च यज्ञियः यज्ञार्होऽग्निः । ꣿ "यज्ञत्वि-

१ P P[2] वृष्ण्ये । We with Cp and the Saṁhitâ which is based on A B C K[m] R.

1 S′ जगंतिनिर्वा°. 2 S′ द्रष्टारम्. 3 S′ दृष्ट्यादौ. 4 S′ °वर्षित.

ग्म्याम्°" इति घः ॥ । यज्ञियान् यज्ञार्हान् यष्टव्यान् ऋतून् अभिगन्तॄन् यद्वा यज्ञियान् यज्ञियेषु ऋतुषु कालेषु तत्तद्विहितकाले यष्टव्यान् देवान् यजतीति व्याख्येयम् ॥

नवमी ॥

रपद् गन्धर्वीरप्या च योषणा नदस्य नादे परि पातु नो मनः ।
इष्टस्य मध्ये अदितिर्नि धातु नो भ्राता नो ज्येष्ठः प्रथमो वि वोचति ॥१९॥

रपत् । गन्धर्वीः । अप्या । च । योषणा । नदस्य । नादे । परि । पातु । नः । मनः ।
इष्टस्य । मध्ये । अदितिः । नि । धातु । नः । भ्राता । नः । ज्येष्ठः । प्रथमः । वि । वोचति ॥ १९ ॥

गन्धर्वीः गन्धर्वस्य उदकधारकस्य भरतस्य आदित्य[स्य स्वभूता भारती अप्या योषणा च अप्संबन्धिनी अप्स्यायिनी युवतिः सरस्वती च रपत् रपतु स्पष्टं वक्तु मद्द्वारा अग्निं स्तौतु । नदस्य नादे स्तोतुर्मम स्तोत्ररूपे नादे कर्तव्ये ध्वनौ नो मनः मम मनः परि पातु] परितो रक्षतु । भारती सरस्वती चेति शेषः । अनन्तरम् इष्टस्य फलस्य यागस्य वा मध्ये नः अस्मान् अदितिः देवमाता देवी नि धातु स्थापयतु इष्टं योजयतु । भ्राता भरणकर्ता भ्रातृवत् हितकारी ज्येष्ठः गुणैः प्रशस्यः प्रथमोऽग्निः । ॥ प्रथम इति मुख्यनाम । प्रतमो भवति [नि° २. २२] इति निरुक्तम् ॥ । वि वोचति विवक्तु[1] साधु यष्टा [अयम् इति] मयि ब्रवीत्वित्यर्थः । ॥ वि वोचति । "[2]लिङ्याशिष्यङ्" इति विहितोऽङ् प्रत्ययो व्यत्ययेनात्र न प्राप्तः । "वच उम्" इति अङ्प्रत्ययनिबन्धन उमागमः ॥ ॥

दशमी ॥

सो चिन्नु भद्रा क्षुमती यशस्वत्युषा उवास मनवे स्वर्वती ।

---

1 S' विवक्तुं. 2 So S'. Should we read लिङ्याशिष्यङ् इति अङ् प्रत्ययः । इतश्चेति विहित इकारलोपो व्यत्ययेनात्र न प्राप्तः ?

यदीमुशन्तमुशतामनु क्रतुमग्निं होतारं विदथाय जीजनन् ॥ २० ॥ (२)

सो इति। चित्। नु। भद्रा। क्षुऽमती। यशस्वती। उषाः। उवास। मनवे। स्वःऽवती।

यत्। ईम्। उशन्तम्। उशताम्। अनु। क्रतुम्। अग्निम्। होतारम्। विदथाय। जीजनन् ॥ २० ॥ (२)

सो चित् सैव खलु भद्रा भन्दनीया कल्याणी क्षुमती मन्त्ररूपशब्दवती। प्रातरनुवाकादौ बहुभिरुषस्यसूक्तैः शस्यमानत्वात्। अथ वा तस्मिन् काले पक्ष्यादीनां प्रबुद्धानां शब्ददर्शनात् क्षुमती। यशस्वती। यश इति अन्ननाम। अन्नवती मनुष्योपभोगार्थेन अन्नेन हविर्लक्षणेन वा तद्वती। तथा स्वर्वती स्वः आदित्यः। तद्वती। तदविनाभावात्। "छन्दसीवनिपौ॰" इति[1] मतुपो वत्वम्। एवंरूपा उषाः मनवे मनुष्याय। जातावेकवचनम्। मनुष्याणां व्यवहाराय यजमानाय वा तस्याग्निहोत्राद्यर्थाय उवास प्रादुरभूत्। तमो निराचकारेत्यर्थः[2]। यत् यदा ईम् एनम् उशन्तम् कामयमानं[3] होतारम् देवानाम् आह्वातारं होमनिष्पादकं वा अग्निम् उशताम् यज्ञार्थं कामयमानानां यजमानानां तेषां विदथाय यज्ञाय देवानां हविःप्रापणाय अनु क्रतुम् तत्रतत्र क्रतौ तत्तत्क्रत्वर्थं जीजनन् अजीजनन् उदपादयन् अध्वर्यवः ॥

[इति] अष्टादशकाण्डे प्रथमेनुवाके द्वितीयं सूक्तम् ॥

अथ तृतीयं सूक्तम् ॥

तत्र प्रथमा ॥

अध त्यं द्रप्सं विभ्वं विचक्षणं विराभरदिषिरः श्येनो अध्वरे।
यदी विशो वृणते दस्ममार्या अग्निं होतारमध धीरजायत ॥ २१ ॥

१ P[2] जीजनत्।. Cp जीवंनम्।. २ P[2] omits the avagraha. We with P Cp. ३ Cp उशताम्।.

1 So S′. We should have मादुपधायाश्च &c. instead of छन्दसी &c. 2 S′ inserts अनुष्ठानाय उवास प्रादुरभूत् तमोनिराचकार after this. 3 S′ कामयमानानां भ्राजन्तं दीप्यमानं.

अधं । त्यम् । द्रप्सम् । विऽभ्वम् । विऽचक्षणम् । विः । आ । अभरत् ।
इषिरः । श्येनः । अध्वरे ।
यदि । विशः । वृणते । दस्मम् । आर्याः । अग्निम् । होतारम् । अध । धीः ।
अजायत ॥ २१ ॥

अध अथ अनन्तरं त्यम् तम् । "तृतीयस्याम् इतो दिवि सोम आसीत्" [तै॰ब्रा॰ ३.२.१.१] इत्यादिश्रुतिप्रसिद्धम् । द्रप्सम् देवैर्मनुष्यैश्च भक्षणीयं सोमम् । कीदृशम् । विभ्वम् महन्नामैतत् । महान्तं विचक्षणम् विद्रष्टारम् एवंलक्षणं सोमम् इषिरः प्रकृष्टगमनः एषणां प्राप्तः अग्न्यादिदेवैः प्रार्थितो वा श्येनः शंसनीयगतिः सौपर्णो विः पक्षी अध्वरे यज्ञे निमित्तभूते सति आभरत् आहरत् आहृतवान् । गायत्री सुपर्णरूपं धृत्वा द्युलोकात् सोमम् आहरद् इत्येतद् आख्यानम् "तृतीयस्याम् इतो दिवि सोम आसीत् । तं गायत्र्याहरत् । तस्य पर्णम् अच्छिद्यत" [तै॰ब्रा॰ ३.२.१.१] "कद्रूश्च वै सुपर्णी चास्पर्धेताम्" [तै॰सं॰ ६.१.६.१] इत्यादिश्रुतिषु प्रसिद्धम् । एवम् आहृते सोमे यदि यदा आर्याः सर्वैरभिगन्तव्या विशः प्रजाः यजमाना दस्मम् दर्शनीयम् अग्निं होतारम् होमनिष्पादकम् । [1] जुहोतेर्होतेत्यौर्णवाभः इति निरुक्तम् [नि॰ ७.१५] [1] । होतृत्वेन वृणते वरणं कुर्वन्ति पुरस्कुर्वन्ति अध [अथ] अनन्तरं सोमस्य अग्नेश्च सिद्धत्वाद् धीः । कर्मनामैतत् । अग्निष्टोमादिलक्षणं कर्म अजायत जायते निर्वृत्ता भवति । अग्निम् अन्तरेण कस्यचिदपि कर्मणः असिद्धेः यदी विशो वृणते अध धीरजायतेति अग्नेर्होतृत्वोपयोगित्वेन स्तुतिः ॥

द्वितीया ॥

सदासि रण्वो यवसेव पुष्यते होत्राभिरग्ने मनुषः स्वध्वरः ।
विप्रस्य वा यच्छशमान उक्थ्यो वाजं ससवाँ उपयासि भूरिभिः ॥२२॥

१ B V उपयासि. Dc उपयासि corrected to उपयासि. We with A C K R.

1 S′ has here a blank for about five letters. 2 S′ रणं. 3 S′ तृतीयं यस्या°. 4 S′ °अन्तरेणास्य° for अन्तरेण कस्य°. 5 S′ अग्नेराहत्योप° for अग्नेर्होतृत्वोप°.

सदा । असि । रण्वः । यवसाऽइव । पुष्यते । होत्राभिः । अग्ने । मनुषः । सुऽअध्वरः ।

विप्रस्य । वा । यत् । शशमानः । उक्थ्यः । वाजम् । ससऽवान् । उपऽयासि । भूरिऽभिः ॥ २२ ॥

हे अग्ने स्वध्वरः शोभनयागः सुष्ठु यागस्य निर्वर्तकस्त्वं [मनुषः मनुष्यस्य स्वभूताभिः] होत्राभिः होमसाधनाभिः आज्यादिभिः पुष्यते पोषयित्रे यजमानाय तदर्थं सदा सर्वदा रण्वः रमणीयः दर्शनीयोसि । तत्र दृष्टान्तः । यवसेव यवसा हरिततृणादिना गवादिरिव । स यथा पुष्यते स्वामिने रमणीयो भवति तद्वत् । [यत्] यस्त्वं शशमानः शंसन् यजमानं प्रशंसन् उक्थ्यः स्तोतव्यश्च सन् विप्रस्य मेधाविनो यजमानस्य वाजम् अन्नं हविर्लक्षणं ससवान् संभजमानः भूरिभिः बहुभिः कामैः सहितस्त्वं बहुभिर्देवैः सहितो वा उपयासि उपगच्छसि । यत एवं करिष्यसि अतस्त्वं यजमानस्य सदा रण्वोसीति संबन्धः ॥

तृतीया ॥

उदीरय पितरा जार आ भगमियक्षति हर्यतो हृत्त इष्यति ।

विवक्ति वह्निः स्वपस्यते मखस्तविष्यते असुरो वेपते मती ॥ २३ ॥

उत् । ईरय । पितरा । जारः । आ । भगम् । इयक्षति । हर्यतः । हृत्तः । इष्यति ।

विवक्ति । वह्निः । सुऽअपस्यते । मखः । तविष्यते । असुरः । वेपते । मती ॥२३॥

हे अग्ने त्वं पितरा पितरौ मातापितरौ । "पिता मात्रा" इत्येकशेषः । अत्र द्यावापृथिव्यौ गृह्येते । "द्यौः पितः पृथिवि मातः" [तै° ब्रा° २. ८. ६. ५] "द्यौः पिता पृथिवी माता" [तै° ब्रा° ३. ७. ५. ४] इत्यादिश्रुतिषु तथा श्रवणात् । तौ उदीरय उद्गमय यज्ञं प्रति प्रेरय । यद्वा तावकं तेजः पितरौ प्रति उदीरय उद्गमय । अत्यन्तं प्रज्वलितो भवेत्यर्थः । तत्र दृष्टान्तः जार आ भगम् । जारः आदित्यः रात्रे-

---

१ P P² उपऽयासि ।. Cp उप । यासि ।.

जरयिता । ⧗जार इव भगम् आदित्योत्र जार उच्यते रात्रेर्जरयितेति यास्कः [नि° ३. १६]⧗ । आ इति इवार्थे । जार इव आदित्य इव । स यथा भगम् भजनीयं स्वप्रकाशं द्यावापृथिव्यौ प्रति प्रेरयति तद्वत् । लौकिको जारो भगम् योनिमिव इत्ययं दृष्टान्तस्तु स्पष्टं प्रतीयत एव । अथ वा जरा स्तुतिः । तत्कृत्वेन तत्संबन्धी जारः स्तोता । स च भगम् भजनीयं त्वाम्[1] आ । ह्वयति इत्यध्याहारः । अत उदीरयेति संबन्धः ॥ अथ परोक्षम् आह । इयक्षति यष्टुम् इच्छति यान् देवान् यजमानः । ⧗यजतेः सन् । अभ्यासस्य छान्दसं संप्रसारणम्⧗ । तान् हर्यतः कमनीयः स्पृहणीयोग्निः हृत्तः हृदयात् हृदयेनैव इष्यति इच्छति । स्वयं[2] कर्तुम् इति शेषः ॥ किं च वह्निः हविषां वोढाग्निः मखः मखसाधनो मंहनीयो वा स्वपस्यते शोभनकर्म कर्तुम् इच्छते । ⧗"सुप आत्मनः क्यच्" । "नः क्ये" इति नियमात् पदसंज्ञाया अभावाद् रुत्वाभावः⧗ । यजमानाय विवक्ति ब्रवीति । अभिलषितं तवेष्टं दास्यामीति भाषत इत्यर्थः । तथा तविष्यते । ⧗तविषिर्वृद्ध्यर्थः⧗ । वर्धिष्यते यजमानाय असुरः बलवान् अग्निः मती मत्या कर्मणा यागेन निमित्तेन वेपते कम्पते चलति आगच्छति ॥

चतुर्थी ॥

यस्ते अग्ने सुमतिं मर्तो अख्यत् सहसः सूनो अति स प्र शृण्वे ।

इषं दधानो वहमानो अश्वैरा स द्युमाँ अमवान् भूषति द्यून् ॥ २४ ॥

यः । ते । अग्ने । सुऽमतिम् । मर्तः । अख्यत् । सहसः । सूनो इति । अति । सः । प्र । शृण्वे ।

इषम् । दधानः । वहमानः । अश्वैः । आ । सः । द्युऽमान् । अमऽवान् । भूषति । द्यून् ॥ २४ ॥

---

१ B V Dc अमवान्भूषति. We with A C K̄ R. २ P अक्षत् ।. We with P̄ Cp. ३ Cp भूषतिं ।.

1 S′ त्वान्. 2 So S′. Is स्वयं a mistake for स्वकीयान् ?

हे अग्ने ते तव सुमतिम् शोभनां बुद्धिम् अनुग्रहलक्षणां यो मर्तः मरणधर्मा मनुष्यो यजमानः अख्यत् कथयति परस्मै । स्वयं प्राप्तो भवतीत्यर्थः । हे सहसः सूनो बलस्य पुत्र बलेन मथ्यमानो जायत इति तादृशाग्ने स त्वयानुगृहीतो यजमानः अभि* आभिमुख्येन सर्वतः प्र शृण्वे प्रकर्षेण श्रूयते । ⧗ शृणोतेर्लिटि[1] "छन्दस्युभयथा" इति लिटः सार्वधातुकत्वात् "श्रुवः शृ च" इति श्नुप्रत्ययः ⧗ । सर्वत्र विश्रुतो भवति । किं च [स] त्वयानुगृहीतो यजमानः इषम् सर्वैरेषणीयम् अन्नं दधानः धारयन् बह्वन्नः सन् तथा अश्वैः बहुभिर्वहमानः अश्वैरुह्यमानो रथगामी भूत्वा द्युमान् दीप्तिमान् अमवान् बलवान् सन् द्यून् । अहर्नामैतत् । बहून् दिवसान् आ भूषति आभवति । सर्वम् अधिष्ठाय वर्तते । यद्वा भूषति बुभूषति द्युमान् अमवांश्च भवितुम् इच्छति । ⧗ भवतेः सनि "सनि ग्रहगुहोश्च" इति इडभावः । "इको झल्" इति कित्त्वाद् गुणाभावः । सर्वविधीनां छन्दसि विकल्पितत्वाद् द्वित्वाभावः[2] ⧗ ॥

पञ्चमी ॥

श्रु॒धी नो॑ अग्ने॒ सद॑ने स॒धस्थे॑ यु॒क्ष्वा रथ॑म॒मृत॑स्य द्रवि॒त्नुम् ।
आ नो॑ वह॒ रोद॑सी दे॒वपु॑त्रे॒ माकि॑र्दे॒वाना॒मप॑ भूरि॒ह स्याः ॥ २५ ॥

श्रु॒धि । नः॒ । अ॒ग्ने॒ । सद॑ने । स॒धऽस्थे॑ । यु॒क्ष्व । रथ॑म् । अ॒मृत॑स्य । द्र॒वि॒त्नुम् ।
आ । नः॒ । व॒ह॒ । रोद॑सी॒ इति॑ । दे॒वपु॑त्रे॒ इति॑ दे॒वऽपु॑त्रे । माकिः॑ । दे॒वाना॑म् । अप॑ । भूः॒ । इ॒ह । स्याः॒ ॥ २५ ॥

हे अग्ने त्वं नः अस्माकम् आह्वानं श्रुधि शृणु । कुत्रेति उच्यते । सदने सीदन्त्यत्रेति सदनं गृहं तत्र । कीदृशे सधस्थे सहस्थाने । ⧗ "सध मादस्थयोश्छन्दसि" इति सहस्य सधादेशः[3] ⧗ । देवानां साधारणे यागगृहे । तदर्थम् अमृतस्य उदकस्य द्रवित्नुम् द्रावकं रथं युक्ष्व योजय । किं च त्वं नः अस्माकम् अर्थाय रोदसी द्यावापृथिव्यौ । कीदृश्यौ । देवपुत्रे देवाः पुत्रा ययोस्ते तादृश्यौ तदुपजीव्यत्वात् तत्पुत्र-

1 S′ has a space for fifteen or sixteen letters after °लिटि. 2 S′ गुणा° for द्वित्वा°.
3 S′ सहा° for सधा°.

त्वोपचारः । ते देवते आ वह यज्ञार्थम् । किं च त्वं देवानां संघे माकिरप[1] भूः मा भूः मा गच्छ । किं तु इह अस्मदीये यागगृह एव स्याः भव । सर्वकर्मार्थं सर्वदा संनिहितो भवेत्यर्थः । यद्वा देवानां मध्ये एकोपि देवो माकिरप भूः अप भूत् अपगतो मा भूत् । किं तु सर्वोपीह स्याः स्यात् । "तिङां तिङो भवन्ति" इति [प्रथमपुरुषस्थाने[3] मध्यमः] ॥

षष्ठी ॥

यद॑ग्न ए॒षा समि॑तिर्भवा॑ति दे॒वी दे॒वेषु॑ यज॒ता य॑जत्र ।
रत्ना॑ च॒ यद् वि॒भजा॑सि स्वधावो भा॒गं नो॒ अत्र॒ वसु॑मन्तं वीतात् ॥ २६ ॥

यत् । अ॒ग्ने॒ । ए॒षा । सम्ऽइ॑तिः । भवा॑ति । दे॒वी । दे॒वेषु॑ । य॒ज॒ता । य॒ज॒त्र॒ ।
रत्ना॑ । च॒ । यत् । वि॒ऽभजा॑सि । स्व॒धा॒ऽव॒ः । भा॒गम् । न॒ः । अत्र॑ । वसु॑ऽमन्तम् । वी॒ता॒त् ॥ २६ ॥

हे यजत्र यष्टव्य अग्ने यत् यदा एषा पुरोभाविनी समितिः समाजः । संहतिरित्यर्थः । भवाति भवति । स्तुतानां हविषां च समितिर्यदा भवति । कीदृशी । देवी दैवी देवसंबन्धिनी दीप्ता वा । कुत्र । देवेषु मध्ये । पुनः कीदृशी सा । यजता यष्टव्या पूजनीया । हे स्वधावः अन्नवः अन्नवन् अग्ने यत् यदा च रत्ना रत्नानि रमणीयानि धनानि विभजासि स्तोतृभ्यो विभजसि प्रयच्छसि अत्र विभागसमये नः अस्माकमपि वसुमन्तम् प्रभूतेन वसुना युक्तं भागम् अंशं वीतात् । वी गत्यादिषु । अत्र गत्यर्थः । वीहि । प्रयच्छेत्यर्थः ॥

"अन्वग्निः" इति सप्तमी "प्रत्यग्निः" इति अष्टमी च पूर्वत्र व्याख्याते [७.८७.४,५] । तयोः पाठस्तु ।

सप्तमी ॥

अन्व॒ग्निरु॒षसा॒मग्र॑मख्य॒दन्वहा॑नि प्रथ॒मो जा॒तवे॑दाः ।

---

१ P संवाति[2] । We with P Cp.

1 S' माकिर्भूः for माकिरप भूः. 2 S' यच्छ. 3 S' has a lacuna for seven or eight letters here.

अनु सूर्यं उषसो अनु रश्मीननु द्यावापृथिवी आ विवेश ॥ ७ ॥

अनु । अग्निः । उषसाम् । अग्रम् । अख्यत् । अनु । अहानि । प्रथमः । जातऽवेदाः ।

अनु । सूर्यः । उषसः । अनु । रश्मीन् । अनु । द्यावापृथिवी इति । आ । विवेश ॥ ७ ॥

अष्टमी ॥

प्रत्यग्निरुषसामग्रमख्यत् प्रत्यहानि प्रथमो जातवेदाः ।

प्रति सूर्यस्य पुरुधा च रश्मीन् प्रति द्यावापृथिवी आ ततान ॥ २८ ॥

प्रति । अग्निः । उषसाम् । अग्रम् । अख्यत् । प्रति । अहानि । प्रथमः । जातऽवेदाः ।

प्रति । सूर्यस्य । पुरुऽधा । च । रश्मीन् । प्रति । द्यावापृथिवी इति । आ । ततान ॥ २८ ॥

नवमी ॥

द्यावा ह क्षामा प्रथमे ऋतेनाभिश्रावे भवतः सत्यवाचा ।

देवो यन्मर्तान् यजथाय कृण्वन्त्सीदद्धोता प्रत्यङ् स्वमसुं यन् ॥ २९ ॥

द्यावा । ह । क्षामा । प्रथमे इति । ऋतेन । अभिऽश्रावे । भवतः । सत्यऽवाचा । देवः । यत् । मर्तान् । यजथाय । कृण्वन् । सीदत् । होता । प्रत्यङ् । स्वम् । असुम् । यन् ॥ २९ ॥

अत्र द्यावापृथिव्यौ यष्टुम् इच्छन् तयोर्यागस्य अग्निसव्यपेक्षत्वाद् अग्निं स्तौति । द्यावा । ॥ "दिवो द्यावा" इति द्यावादेशः ॥ । द्यौः तथा क्षामा क्षमा पृथिवी द्यावापृथिव्यौ । ॥ व्यवहितप्रयोगश्छान्दसः । यद्वा [1]द्योशब्दस्य द्विवचनं द्यावेति[2] । द्यावौ । क्षामा[शब्दस्य द्विवचनं क्षामेति] । क्षामे । द्वन्द्वस्य युगपदधिकरणवचनत्वात् परस्परापेक्षया

१ Cp °ऽस्रावे ।.

1 S′ द्यौ°. 2 S′ inserts च after °वेति.

उभयोरपि द्विवचनत्वम् ॥ । द्यावापृथिव्यौ । ह इति प्रसिद्धौ । प्रथमे ह मुख्ये खलु [सत्यवाचा] सत्यवाचौ सत्यस्तुतिके । सर्वदेवमनुष्याद्याश्रयत्वात् सर्वोपकारकत्वाच्च तद्विषया स्तुतिरूपा वाक् सर्वापि सत्यैव विद्यमानगुणैव । ते ऋतेन यज्ञेन निमित्तेन यज्ञार्थम् अभिश्रावे अभितः श्रूयेते इति अभिश्रावे स्तोतुः श्रवणयोग्ये भवतः । कदेति उच्यते । यत् यदा देवः द्योतमानोग्निः मर्तान् मनुष्यान् यजथाय यागाय यज्ञार्थं कृण्वन् कुर्वन् होता होमनिष्पादको देवानाम् आह्वाता वा प्रत्यङ् यजमानाभिमुखं स्वम् स्वीयम् असुम् प्रज्ञां यागविषयां बलं वा ज्वालालक्षणं यन् गच्छन् प्राप्नुवन् सीदत् निषीदति । तदा अभिश्रावे भवत इति संबन्धः ॥

दशमी ॥

देवो देवान् परिभूर्ऋतेन वहा नो हव्यं प्रथमश्चिकित्वान् ।
धूमकेतुः समिधा भाऋजीको मन्द्रो होता नित्यो वाचा यजीयान्
॥ ३० ॥ (३)

देवः । देवान् । परिऽभूः । ऋतेन । वह । नः । हव्यम् । प्रथमः । चिकित्वान् ।
धूमऽकेतुः । सम्ऽइधा । भाःऽऋजीकः । मन्द्रः । होता । नित्यः । वाचा ।
यजीयान् ॥ ३० ॥ (३)

हे अग्ने देवः द्योतमानः प्रकृष्टज्वालस्त्वम् ऋतेन यज्ञेन देवान् यष्टव्यान् परिभूः परिभवन् स्वाधीनान् कुर्वन् प्रथमः मुख्यः सन् चिकित्वान् एतेत्र यष्टव्या इति जानन् नः अस्माकं हव्यम् हविः वह प्रापय देवान् प्रति गमय । अथ अग्निं बहुधा प्रशंसति । धूमकेतुः धूमेन प्रज्ञायमानः समिधा समिन्धनसाधनेन काष्ठादिना भाऋजीकः भासमानदीप्तिः प्रकृष्टज्वालः मन्द्रः मोदमानः मादयिता वा होता देवानाम् आ-

१ ABK̈VDc भाऋचीको. We with CR. २ Cp वहानः ।. PP̈ वहानः ।. ३ P °ऋनीकः ।. Cp °ऋचीकः ।. ४ Cp नित्यः ।.

1 S′ श्रूयते. 2 S′ inserts देवः. 3 S′ पमय for प्रति गमय. 4 S′ प्रशंसन्ति.

ह्वाता नित्यः अविनाशी वाचा स्तुतिरूपया यजीयान् अतिशयेन यष्टा यष्टव्यो वा । उक्तमहिमोपेतः सन् हव्यं वहेति संबन्धः ॥

इत्यष्टादशकाण्डे प्रथमेनुवाके तृतीयं सूक्तम् ॥

चतुर्थसूक्ते प्रथमा ॥

अर्चामि वां वर्धायापो घृतस्नू[1] द्यावाभूमी शृणुतं रोदसी मे ।
अहा यद् देवा[2] असुनीतिमायन् मध्वा नो अत्र पितरा शिशीताम् ॥३१॥

अर्चामि । वाम् । वर्धाय[3] । अपः[4]* । घृतस्नू इति घृतऽस्नू । द्यावाभूमी इति । शृणुतम् । रोदसी[5] इति । मे ।
अहा । यत् । देवाः । असुऽनीतिम् । आयन् । मध्वा । नः । अत्र । पितरा । शिशीताम् ॥ ३१ ॥

हे घृतस्नू उदकस्य सारयित्र्यौ[1] द्यावापृथिव्यौ वाम् युवयोः अपः कर्म वर्धाय अभिवृद्धये । ▯वृधेर्घञन्तत्वाद् आद्युदात्तः▯ । अर्चामि स्तौमि । तदर्थम् हे द्यावाभूमी द्यावापृथिव्यौ रोदसी रोधयित्र्यौ द्यावापृथिव्योर्मध्ये सर्वेषां प्राणिनां निरोधात् । अथवा रोदयित्र्यौ वृष्टिफलयोः प्रतिबन्धेन । एवंरूपे द्यावापृथिव्यौ मे मम शृणुतम् । स्तुतिम् इति शेषः ॥ अथ परोक्षम् आह । यत् येषु अहा अहस्सु देवाः । दीव्यतिरत्र स्तुत्यर्थः । युवयोः स्तोतारः ऋत्विजः असुनीतिम् असूनां बलानां नयनम् [आयन्] अगच्छन् स्वकीयं बलं यज्ञार्थम् अकुर्वन् । अत्र एषु दिवसेषु पितरा पितरौ मातापितरौ द्यावापृथिव्यौ नः अस्माकं मध्वा । ▯द्वितीयार्थे तृतीया▯ । मधु उदकं शिशीताम् संस्कुरुतां[2] प्रयच्छताम् । यद्वा मध्वा मधुना उदकेन नः अस्मान् शिशीताम् संस्कुरुताम् । उदकप्रदानेन वर्धयताम्[3] इत्यर्थः । अग्निसाहचर्याद् अनयोः स्तुतिः । ▯शिशीताम् इति । शो तनूकरणे । लोटि छान्दसं रूपम्▯ ॥

१ B K̃ R घृतस्नु. Dc घृतस्नु corrected to घृतस्नू. We with C V. २ B दैवा. R देवा (=देंवा ?). V देंवा. Dc °देवा corrected to °देंवा. We with K C. ३ P अर्धाय ।. ४ P̃ P आपः ।. Cp आपः ।. ५ Cp रोदसी° ।.

1 S′ जारयित्र्यौ. 2 S′ सुस्वंस्कुरुताम्. 3 S′ वर्धयतम्.

द्वितीया ॥

स्वावृंग् देवस्यामृतं यदी गोरतो जातासो धारयन्त उर्वी ।
विश्वे देवा अनु तत् ते यजुर्गुर्दुहे यदेनी दिव्यं घृतं वाः ॥ ३२ ॥

स्वावृक् । देवस्य । अमृतम् । यदि । गोः । अतः । जातासः । धारयन्ते । उर्वी इति ।
विश्वे । देवाः । अनु । तत् । ते । यजुः । गुः । दुहे । यत् । एनी । दिव्यम् । घृतम् । वाः ॥ ३२ ॥

देवस्य द्योतमानस्य अग्नेः स्वावृक् सुष्ठु आवर्जकं सर्वप्राण्यावर्जकं स्वाधीनकर्तृ अमृतम् अमृतवद् उपकारकम् उदकं यदि यदा गोः रश्मेः सकाशाद् उत्पद्यते अतः अस्माद् अमृताद् वृष्ट्युदकात् जातासः जाता ओषधयः उर्वी उर्व्यौ महत्यौ द्यावापृथिव्यौ धारयन्ते अधारयन्त । भूमिष्ठानां द्युस्थानां च प्राणिनां तिलव्रीह्याद्योषध्युपजीवित्वात् तल्लोकनिवासिनां धारणेन तद्धारकत्वोपचारः । किं च यत् [यदा] एनी श्येता तव दीप्तिः । ॥"वर्णाद् अनुदात्तात्°" इति [एतशब्दात् ङीप् तकारस्य नकारश्च[2]]॥ । दिव्यम् दिवि भवं घृतम् क्षरद्[3] वाः सर्वलोकच्छादकम् उदकं दुहे दुग्धे हे अग्ने ते तव तद् यजुः । युज्यंत[4] इति यजुः कर्म तत् कर्मजनितम् उदकं विश्वे सर्वे देवा अनु गुः अनुगच्छन्ति । उदकाभिवृद्धानां व्रीह्यादीनाम् अनुगतिरेव उदकानुगतिरित्युच्यते । यद्वा इज्यत इति यजुः । ॥यजिरत्र दानार्थः॥ । तव तद् दानम् उदकविषयं विश्वे सर्वे देवाः । ॥दीव्यतिरत्र स्तुत्यर्थः॥ । स्तोतार ऋत्विजः अन्वगुः अनुयान्तीति व्याख्येयम् ॥

तृतीया ॥

किं स्विन्नो राजा जगृहे कदस्याति व्रतं चकृमा को वि वेद ।

---

१ K यजुंर्गुर्दुहे. We with A B C R V Dc. २ Cp वाः ।. ३ B जगृहे. We with A C R K V Dc.

---

1 S' धारयन्त धारयन्त. 2 S' has in place of this a blank for about ten letters. 3 S' has उदकं after क्षरद् also. 4 S' युज्येत.

मित्रश्चिद्धि[1] ष्मा जुहुराणो देवांच्छ्लोको[2] न यातामपि[3] वाजो अस्ति ॥ ३३ ॥

किम् । स्वित् । नः । राजा । जगृहे । कत् । अस्य । अति । व्रतम् । चकृम । कः । वि । वेद ।

मित्रः । चित् । हि । स्म । जुहुराणः । देवान् । श्लोकः । न । याताम्[4] । अपि । वाजः । अस्ति ॥ ३३ ॥

राजा देवेषु मध्ये क्षत्रियजातिर्यमो नः अस्माकं संबन्धि किंचिद्धविरादिकं किं स्वित् जगृहे गृह्णाति । कत् कदा अस्य यमस्य प्रीणनं व्रतम् कर्म यमप्रीतिकरं नित्यनैमित्तिकरूपं कर्म अति चकृम अतिक्रमं कृतवन्तः स्मः । को वि वेद तत् को जानाति । अविद्यमानं ज्ञातुं [कः शक्नोति] । यमविषयापराधपरिहारोस्तीत्याह । देवान् ह्वातव्यान् जुहुराणः आह्वयन् । ⌛ह्वृ कौटिल्ये । कानचि रूपम् । धातूनाम् अनेकार्थत्वाद् अत्र ह्वयत्यर्थः⌛ । मित्रः मित्रवद्धितकारी अग्निर्विद्यते । चित् हि स्म इति पादपूरणाः । सर्वं स एव परिहरिष्यतीत्यर्थः । यातान् देवानभिगच्छतो नः अस्मान् रक्षितुं श्लोको न । नेति उपमार्थे । श्लोकः स्तुतिः । स्तुतिर्यथास्ति एवं वाजोपि हविर्लक्षणम् अन्नं च विद्यते । अस्मान् रक्षितुं स्तुत्या हविषा च अग्निं परितोष्य तन्मुखाद् यमस्यापराधं परिहरिष्याम इत्यभिप्रायः ॥

चतुर्थी ॥

दुर्मन्त्वत्रामृतस्य नाम सलक्ष्मा यद् विषुरूपा भवाति ।
यमस्य यो मनवते सुमन्त्वग्ने तमृष्व पाह्यप्रयुच्छन् ॥ ३४ ॥

दुःऽमन्तु । अत्र । अमृतस्य । नाम । सऽलक्ष्मा । यत् । विषुऽरूपा । भवाति । यमस्य । यः । मनवते । सुऽमन्तु[5] । अग्ने । तम् । ऋष्व । पाहि[6] । अप्रऽयुच्छन् ॥ ३४ ॥

---

१ B मित्रश्चिद्धि. We with A C K^m R V Dc. २ B A C K^m V देवान्च्छ्लो°. We with R Dc. ३ K^m V Dc यातानपि. We with A B C R. ४ P यताम् ।. Cp यातान् ।. ५ P °मतु ।. ६ Cp पाहि ।.

पूर्वत्र "सलक्ष्मा यद् विषुरूपा भवाति" [२] इत्यत्र यमेन स्वसृभूताया यम्याः या संभोगप्रार्थना निराकृता तां स्मारयन्नाह । अत्र अस्मिन् । कृते सतीति शेषः । यद्वा अत्र यम्याः संभोगविषये अमृतस्य अमरणस्य यमस्य नाम नामधेयं दुर्मन्तु दुर्मननं दुर्वचम् । भवतीति शेषः । कथं भवतीत्याशङ्क्य तत्र कारणम् आह सलक्ष्मेति । यत् यस्मात् कारणात् यमस्य यमीम् इच्छतः । अथ वा यत् यस्मै संभोगम् अङ्गीकुर्वते यमाय इति व्याख्येयम् । सलक्ष्मा समानोदरा स्वसा यमी संभोगानन्तरं विषुरूपा भिन्नरूपा भार्यारूपा भवाति भवेत् । अतः स्वभगिनीभर्तेति यमस्य दुर्वचं नाम भवेद् इत्यर्थः ॥ तथा सति यश्च पुमान् यमस्य राज्ञो नाम सुमन्तु सुवचं नाम मनवते मनुते स्तौति[2] । ᳲ मनु अवबोधने । लेटि तनादित्वाद् उप्रत्ययः । "लेटोडाटौ" इति अडागमः । आगमस्य अनुदात्तत्वेन विकरणस्वरः ᳲ । तं स्तोतारम् हे ऋष्व दर्शनीय अग्ने त्वम् अप्रयुच्छन् अमाद्यन् विस्मरणम् अकुर्वाणः पाहि रक्ष । एवं यमस्य निन्दानुकीर्तनदोषपरिहारप्रार्थनारूपेण अग्नेः स्तुतिः ॥

पञ्चमी ॥

यस्मि॑न् दे॒वा वि॒दथे॑ मा॒दय॑न्ते वि॒वस्व॑तः॒ सद॑ने धा॒रय॑न्ते ।
सूर्ये॒ ज्योति॒रद॑धुर्मा॒स्य१॒॑क्तून् परि॑ द्यो॒तनिं॒ चर॑तो॒ अज॑स्रा ॥ ३५ ॥

यस्मि॑न् । दे॒वाः । वि॒दथे॑ । मा॒दय॑न्ते । वि॒वस्व॑तः । सद॑ने । धा॒रय॑न्ते ।
सूर्ये॑ । ज्योतिः॑ । अद॑धुः । मा॒सि । अ॒क्तून् । परि॑ । द्यो॒तनि॑म् । च॒र॒तः॒ ।
अज॑स्रा ॥ ३५ ॥

यस्मिन् अग्नौ सति यज्ञनिर्वर्तकत्वेन अग्नौ विद्यमाने सति देवा इन्द्राद्याः विदथे यज्ञे मादयन्ते माद्यन्ति । यस्मिन् सति मनुष्या विवस्वतः सूर्यस्य सदने स्थाने सूर्यलोके धारयन्ते वर्तन्ते । कर्मफलम् उपभुञ्जानाः सुखेन अवतिष्ठन्ते । येन[3] वा अग्निना देवाः सूर्ये ज्योतिः लो-

१ A R have no kampa. C °मास्यक्रून्परि॑. We with B K̄ V Dc. २ Cr मासि॒ ।.

1 S′ संभोगा°. 2 S′ has स्तो for स्तौति. 3 S′ एन.

मेधादिकं हिरण्यगर्भाद्युपासनं वा चक्रिरे कुर्वन्ति । एते येषु लोकेषु वर्तन्ते तेषु लोकेषु तांश्चिदेव तानेव तपस्विनः हे प्रेत अपि गच्छतात् अपिगच्छ ॥

सप्तमी ॥

ये युध्यन्ते प्रधनेषु शूरासो ये तनूत्यजः ।
ये वा सहस्रदक्षिणास्तांश्चिदेवापि गच्छतात् ॥ १७ ॥

ये । युध्यन्ते । प्रऽधनेषु । शूरासः । ये । तनूऽत्यजः ।
ये । वा । सहस्रऽदक्षिणाः । तान् । चित् । एव । अपि । गच्छतात् ॥१७॥

प्रधनेषु । प्रकीर्णानि अस्मिन् धनानि भवन्तीति प्रधनाः संग्रामाः । तेषु शूरासः शौर्यवन्तो ये युध्यन्ते शत्रून् संप्रहरन्ति । ये च तनूत्यजः शरीराणि तत्र[1] ये त्यक्तारो भवन्ति । ये वा ये च सहस्रदक्षिणाः सहस्रदक्षिणान् क्रतून् अनुष्ठितवन्तः तान् सर्वानेव हे प्रेत त्वम् इतो गच्छ । ते येषु उत्तमेषु लोकेषु निवसन्ति तं लोकं प्राप्नुहीत्यर्थः ॥

अष्टमी ॥

सहस्रणीथाः कवयो ये गोपायन्ति सूर्यम् ।
ऋषीन् तपस्वतो यम तपोजाँ अपि गच्छतात् ॥ १८ ॥

सहस्रऽनीथाः । कवयः । ये । गोपायन्ति । सूर्यम् ।
ऋषीन् । तपस्वतः । यम । तपःऽजान् । अपि । गच्छतात् ॥ १८ ॥

सहस्रणीथाः सहस्रनयनाः[2] कवयः क्रान्तदर्शिनो ये सूर्यम् आदित्यं गोपायन्ति रक्षन्ति तपस्वतः तपसा युक्तान् तपोजान् तपसः सकाशादेव उत्पन्नान् तान् ऋषीन् हे यम नियत शकटे बद्ध वा यमेन नीयमान वा हे प्रेत त्वम् अपि गच्छतात् अपि गच्छ ॥

नवमी ॥

स्योनास्मै भव पृथिव्यनृक्षरा निवेशनी ।

1 S' यत्रय for तत्र ये. 2 S' °नयवाः.

यच्छास्मै शर्म सप्रथाः ॥ १९ ॥

स्योना । अस्मै । भव । पृथिवि । अनृक्षरा । निऽवेशनी ।

यच्छ । अस्मै । शर्म । सऽप्रथाः ॥ १९ ॥

हे पृथिवि प्रथिते भूमे वेदिरूपे त्वम् अनृक्षरा अनाधिका निवेशनी निविशन्ति अत्रेति निवेशनी शयनार्हा सती अस्मै मुमूर्षवे जनाय अस्थिरूपप्रेताय वा स्योना सुखकरी भव । किं च अस्मै पूर्वोक्ताय सप्रथाः [प्रथः] प्रख्यानं विस्तीर्णता तत्सहिता त्वं शर्म सुखं यच्छ देहि । दाण् दाने । "पाघ्रा°" इत्यादिना यच्छादेशः ॥

दशमी ॥

असंबाधे पृथिव्या उरौ लोके नि धीयस्व ।

स्वधा याश्चकृषे जीवन् तास्ते सन्तु मधुश्चुतः ॥ २० ॥ (८)

असम्ऽबाधे । पृथिव्याः । उरौ । लोके । नि । धीयस्व ।

स्वधाः । याः । चकृषे । जीवन् । ताः । ते । सन्तु । मधुऽश्चुतः ॥ २० ॥

हे मुमूर्षो प्रेत वा असंबाधे । संबाधः संमर्दः । तद्रहिते उरौ विस्तीर्णे पृथिव्याः अग्निहोत्रवेदिलक्षणाया लोके लोक्यमाने स्थाने नि धीयस्व धापितो भव । दधातेः कर्मणि यक् । पूर्वं त्वं जीवन् जीवनवान् याः स्वधाः स्वम् आत्मानं दधाति पुणाति धिनोतीति स्वधा अन्नम् दैवानि हवींषि स्वधाकारेण दत्तानि पित्र्याणि हवींषि [च] चकृषे कृतवान् असि । करोतेर्लिटि क्रादिनियमाद् इडभावः । ताः स्वधाः ते तव मधुश्च्युतः मधुप्रवाहक्षारयित्र्यः सन्तु भवन्तु । उपलक्षणम् एतत् । मधुररसघृतसोमादिप्रवाहरूपा भवन्तु ॥

[इति] द्वितीयेनुवाके द्वितीयं सूक्तम् ॥

---

१ R जीवान्ता°. A B C V जीवंता°. Dc जीवान्ता° corrected to जीवंता°. K °कृषे जीवंता°. The emendation is mine. २ C Dc मधुश्च्युतः changed to मधुश्चुतः. R मधुश्च्युतः. ३ P P[2] स्वधा।. We with Cp. ४ Cp जीवन्।. P P[2] जीवन्।. ५ Cp °श्च्युतः।.

---

1 S′ जीवनवन्. 2 S′ °प्रवाहहार° for °प्रवाहक्षार°.

"ह्वयामि" [२१] इति आद्याया: "स्योनास्मै भव" [१९] इत्यनया सह उक्तो विनियोग: ॥

"उत् त्वा वहन्तु" [२२] इत्यनया चितेर्दक्षिणपार्श्वे अजं पशुं[1] [बध्नाति। यथा दह्यते[2]] तथा बध्नीयात् ॥

आहिताग्ने: संस्कारार्थं विहितेषु त्रिष्वग्निषु "अपेमम्" [२७] इत्यृचा आज्यं जुहुयात् ॥

पिण्डपितृयज्ञे बर्हिषि उदपात्रनिनयनानन्तरं "ये दस्यव:" [२८] इत्यृचा उभयत आ[दीप्तम् उल्मुकं निरस्येत्]। सूत्रितं हि। "यज्ञोपवीती ये दस्यव इत्युभयत आदीप्तम् उल्मुकं त्रि: प्रसव्यं परिहृत्य निरस्यति" इति [कौ॰ ११.८] ॥

पिण्डपितृयज्ञ एव "सं विशन्तु" [२९] इत्यनया आस्तीर्णे बर्हिषि तिलान् प्रकिरेत् ॥

तत्र प्रथमा ॥

ह्वयामि ते मनसा मन इहेमान् गृहाँ उप जुजुषाण एहि।
सं गच्छस्व पितृभि: सं यमेन स्योनास्त्वा वाता उप वान्तु शग्मा: ॥ २१ ॥

ह्वयामि। ते। मनसा। मन:। इह। इमान्[1]। गृहान्[1]। उप। जुजुषाण:। आ। इहि।
सम्। गच्छस्व। पितृऽभि:। सम्। यमेन। स्योना:। त्वा। वाता:। उप। वान्तु। शग्मा: ॥ २१ ॥

हे प्रेत पुरुष ते तव संबन्धि मन: अन्त:करणम् अस्मदीयेन मनसा इह अस्मिन् लोके ह्वयामि आह्वयामि। इमान् अस्मदीयान् गृहान् येषु त्वाम् उद्दिश्य औध्र्वदेहिकं कर्म क्रियते तान् जुजुषाण: सेवमान: प्रीयमाणो वा। ॥जुषी प्रीतिसेवनयो:। व्यत्ययेन श्लु:॥ उपैहि[3] उपागच्छ। उपेत्य च संस्कारोत्तरकालं पितृभि: पितृपितामहप्रपि-

१ P[2] इमाम्। गृहात्।. P इमाम्। गृहान्।. Cp इमान्। गृहां।.

1 S′ अजपशुं. 2 S′ has a lacuna for some nine letters here. The restoration is based upon the *Kes′avî*. 3 So S′.

तामहैः सं गच्छस्व सापिण्ड्यकरणेन संगतो भव । ⧗“समो गम्यृच्छि०” इति आत्मनेपदम्⧗ । यमेन तद्राजेन च संगतो भव । स्योनाः । ⧗षिवु तन्तुसंताने । अस्माद् औणादिको नप्रत्ययः । “च्छ्वोः शूडनुनासिके च” इति वकारस्य ऊडादेशः⧗ । पितृलोकगमनसमये तव अध्वजन्यश्रमम् अपनेतुं संतताः नैरन्तर्येण वर्तमानाः शग्माः सुखकराः शैत्यमान्द्यसौरभ्ययुक्ता वाताः वायवस्त्वा त्वाम् उप वान्तु उपगच्छन्तु । ⧗वा गतिगन्धनयोः । अदादित्वात् शपो लुक्⧗ ॥

द्वितीया ॥

उत् त्वा॑ वहन्तु म॒रुत॑ उदवा॒हा उ॑द॒प्रुतः॑ ।
अ॒जेन॑ कृ॒ण्वन्तः॑ शी॒तं व॒र्षेणो॑क्षन्तु॒ बालिति॑ ॥ २२ ॥

उत् । त्वा॒ । व॒ह॒न्तु॒ । म॒रुतः॑ । उ॒द॒ऽवा॒हाः । उ॒द॒ऽप्रुतः॑ ।
अ॒जेन॑ । कृ॒ण्वन्तः॑ । शी॒तम् । व॒र्षेण॑ । उ॒क्ष॒न्तु॒ । बाल् । इति॑ ॥ २२ ॥

हे प्रेत मरुतः मरुत्संज्ञका देवास्त्वा त्वाम् उद्वहन्तु ऊर्ध्वम् आकाशे वहन्तु धारयन्तु । यद्वा उदवाहसमभिव्याहारात् मरुच्छब्देन वायव उच्यन्ते । वायवस्त्वाम् उपरिलोकं प्रापयन्तु इत्यर्थः । अपि च उदवाहाः उदकं वहन्ति धारयन्तीति उदवाहा मेघाः । ⧗“पेषंवासवाह०” इति उदकशब्दस्य उदभावः⧗ । अत एव उदप्रुतः उदकैर्भूमिं प्लावयन्तः आर्द्रीकुर्वन्तः । शीतम् शैत्यगुणं कृण्वन्तः कुर्वन्तः एवंगुणविशिष्टा मेघाः समीपवर्त्तिना अजेन सहितं त्वां वर्षेण वर्षजलेन उक्षन्तु सिञ्चन्तु । इतिशब्दः बाल् इत्यस्य अनुकरणशब्दतां द्योतयति । उक्षणसमये बाल् इत्येवमात्मकः शब्दो यथा जायेत तथा उक्षन्तु इत्यर्थः । ⧗उक्ष सेचने⧗ ॥

तृतीया ॥

उद॑ह्व॒मायु॒रायु॑षे॒ क्रत्वे॒ दक्षा॑य जी॒वसे॑ ।

---

१ B K[m] उ॑द॒प्लुतः॑. V उ॑द॒ल्पुतः॑ (*sic*). Dc उ॑द॒प्रुतः॑ changed to उ॑द॒प्लुतः॑. We with A C Cp P R. २ P P[2] वहतु ।

---

1 S′ तद्राज्ञा for तद्राजेन. 2 S′ पिवि for पिवु.

स्वान् गच्छतु ते मनो अधा पितृँरुप द्रव ॥ २३ ॥

उत् । अह्वम् । आयुः । आयुषे । क्रत्वे । दक्षाय । जीवसे ।

स्वान् । गच्छतु । ते । मनः । अध । पितृन् । उप । द्रव ॥ २३ ॥

हे प्रेत ते त्वदीयम् आयुः उदह्वम् उच्चैःस्वरेण आह्वयामि । "छन्दसि लुङ्लङ्लिटः" इति लुङ् । "लिपिसिचिह्वश्च" इति ह्वेः अङ् आदेशः । किमर्थम् । आयुषे जीवनाय क्रत्वे क्रतवे यज्ञादिकर्मणे दक्षाय बलाय । यद्वा "प्राणो वै दक्षः । अपानः क्रतुः" इति [तै॰सं॰२.५.२.४] श्रुतेर्दक्षक्रतुशब्दाभ्यां प्राणापानावभिधीयेते[1] । क्रत्वे अपाननव्यापाराय दक्षाय प्राणनव्यापाराय । प्राणवायोर्नासारन्ध्राद् बहिर्निःसरणं प्राणनम् । अन्तराकर्षणम्[2] अपाननम् । जीवसे जीवनाय प्राणधारणाय । सर्वत्र तादर्थ्ये चतुर्थी । एतत् सर्वम् आयुषि सत्येव भवतीति तदाह्वानं क्रियत इत्यर्थः । ते त्वदीयं मनः स्वाम् स्वकीयां तनुं संस्कारजन्यम् अभिनवशरीरं गच्छतु । अध अथ शरीरप्राप्त्यनन्तरं पितृन् वस्त्रादिरूपान् उप द्रव उपलक्ष्य गच्छ । द्रु गतौ ॥

चतुर्थी ॥

मा ते मनो मासोर्माङ्गानां मा रसस्य ते ।

मा ते हास्त तन्वः किं चनेह ॥ २४ ॥

मा । ते । मनः । मा । असोः । मा । अङ्गानाम् । मा । रसस्य । ते ।

मा । ते । हास्त । तन्वः । किम् । चन । इह ॥ २४ ॥

हे प्रेत पुरुष ते तव मनः मानसम् इन्द्रियं मा हास्त त्वां मा परित्याक्षीत् । ओहाक् त्यागे । व्यत्ययेन आत्मनेपदम् । य-

---

१ So A B C K̆ᵐ R V Dc and not स्वां. २ B R गंछंतु. We with A C K̆ᵐ V Dc. ३ So we with A B C K̆ᵐ R V Dc. See Rw. ४ P P² स्वाम् ।. We with Cp which, however, actually reads स्वान् ।. ५ K̆ᵐ चनेह.

---

1 S′ °पानावित्यभिधीयेते. 2 S′ अनंतराकर्षणम्.

त्रा । ⌛ओहाङ् गतावित्यस्य रूपम्⌛ । मा गच्छतु त्वां विहाय इह मा तिष्ठतु । तथा असोस्त्वदीयस्य प्राणस्य किं चन किमपि रूपं मा हास्त । अङ्गानाम् अवयवानां हस्तपादादीनां किमपि मा हास्त । तथा ते तव देहसंबन्धिनो रसस्य रुधिरादेः किमपि मा हास्त । इह अस्मिन् लोके ते तव तन्वः शरीरस्य किं चन किमप्यङ्गं मा हास्त । लोकान्तरे मनःप्राणादिसर्वाङ्गसहितशरीरयुक्तो भवेत्यर्थः ॥

पञ्चमी ॥

मा त्वा वृक्षः सं बाधिष्ट मा देवी पृथिवी मही ।
लोकं पितृषु वित्त्वैधस्व यमराजसु ॥ २५ ॥

मा । त्वा । वृक्षः । सम् । बाधिष्ट । मा । देवी । पृथिवी । मही ।
लोकम् । पितृषु । वित्त्वा । एधस्व । यमराजऽसु ॥ २५ ॥

हे प्रेत त्वा त्वां वृक्षः त्वदाश्रयभूतो मा सं बाधिष्ट संबाधं हिंसनं मा कार्षीत् । ⌛बाधृ विलोडने । "माङि लुङ्"⌛ । तथा देवी द्योतमाना दानादिगुणयुक्ता वा मही महती पृथिवी त्वदाश्रयभूता भूमिस्त्वां मा सं बाधिष्ट । त्वं च यमराजसु यमो राजा ईश्वरो येषां ते यमराजानः तथाविधेषु पितृषु पितृदेवतासु लोकम् स्थानं वित्त्वा लब्ध्वा एधस्व वर्धस्व । ⌛विद्लृ लाभे । "समानकर्तृकयोः पूर्वकाले" इति क्त्वाप्रत्ययः । "एकाच उपदेशे°" इति इट्प्रतिषेधः⌛ ॥

षष्ठी ॥

यत् ते अङ्गमतिहितं पराचैरपानः प्राणो य उ वा ते परेतः ।
तत् ते संगत्य पितरः सनीडा घासाद् घासं पुनरा वेशयन्तु ॥ २६ ॥

---

१ R B Dc बाधिष्ट. K[m] बाधिष्टे. We with A C V. २ P P[2] यम । राजऽसु ।. ३ A B C उवातेपरेतः. K R उवातेपरेताः. Dc उवातेपरेताः changed to उवातेपरेतः. We with the corrected version of Dc. ४ A B K[m] V Dc सनीडाद्घासाद्घासं. We with C R.

---

1 S' om. °वित्यस्य रूपम् । मा गच्छतु त्वां विहाय इह मा तिष्ठतु, and has instead a lacuna for about fifteen letters. 2 S' त्वयाश्रय°. 3 S' बाध.

यत्। ते। अङ्गम्। अतिऽहितम्। पराचैः। अपानः। प्राणः। यः। ऊं इति। वा[1]। ते[1]। पराऽईतः[2]।

तत्। ते। सम्ऽगत्य। पितरः। सऽनीडाः। घासात्। घासम्। पुनः। आ। वेशयन्तु॥ २६॥

हे प्रेत ते तव यद् अङ्गम् शरीरं पराचैः पराङ्मुखम् अतिहितम् अतीत्य स्थितम्। अतिक्रम्य गतम् इत्यर्थः। तस्मिन् शरीरे वर्तमानः अपानः अपानवायुः प्राणः प्राणवायुः। उशब्दः अप्यर्थे। अपि वा ये* च अन्ये चक्षुःश्रोत्रादिरूपाः सप्तशीर्षण्याः प्राणास्ते त्वदीयाः परेताः* परागताः। अपुनरावृत्तये शरीरान्निर्गता इत्यर्थः। ते त्वदीयं तत् सर्वं सनीलाः* समाननिलयाः पितरः पितृदेवताः संगत्य संघीभूत्वा। ⌛सं-पूर्वाद् गमेः क्त्वो ल्यप्। "अनुदात्तोपदेश॰" इत्यादिना अनुनासिकलोपे "ह्रस्वस्य पिति॰" इति तुक्⌛। घासात्। अद्यते भुज्यते अस्मिन्निति घासः भोगायतनं शरीरम्। ⌛अद भक्षणे। अधिकरणे घञ्। "घञपोश्च" इति घस्लादेशः⌛। घासात् भोजनाधिकरणाच्छरीराद् घासम् भोजनाधिकरणम् अन्यच्छरीरं पुनरा वेशयन्तु अभिप्रापयन्तु॥

सप्तमी॥

अपेमं जीवा अरुधन् गृहेभ्यस्तं निर्वहत परि ग्रामादितः।

मृत्युर्यमस्यासीद् दूतः प्रचेता असून् पितृभ्यो गमयां चकार॥ २७॥

अप। इमम्। जीवाः। अरुधन्। गृहेभ्यः। तम्। निः। वहत। परि। ग्रामात्[3]। इतः।

मृत्युः। यमस्य। आसीत्। दूतः। प्रऽचेताः। असून्। पितृऽभ्यः। गमयाम्। चकार॥ २७॥

जीवाः जीवन्तः प्राणधारिणो बान्धवा इमं प्रेतं गृहेभ्यः सकाशाद्

---

१ P P[2] वा। ते।. Cp वा (*sic*)। ते। pointing to वा ते as the correct reading in the Saṁhitâ. २ None of our pada authorities have ॰इताः. ३ Cp क्रामत्।.

अपारुधन् । प्रेतशरीरम् अपागमयन्तु इत्यर्थः । रुधिर् आवरणे । "इरितो वा" इति ह्लेः अङ् आदेशः । तं प्रेतदेहम् इतः अस्माद् ग्रामात् । परिः पञ्चम्यर्थानुवादी । यद्वा परिहरणार्थः । हे बान्धवाः तं मृतदेहं परिहृत्य निर्वहत ग्रामाद् निर्गमयत । कुत इत्यत आह । मृत्युः मारकः पुरुषो यमस्य राज्ञो दूतः कर्मकर आसीत् अभवत् । प्रचेताः प्रकृष्टज्ञानः सः म्रियमाणस्य पुरुषस्य असून् प्राणान् पितृभ्यः पितॄन् अनुप्रवेशयितुम् । "क्रियार्थोपपदस्य [च] कर्मणि स्थानिनः" इति चतुर्थी । गमयां चकार प्रापयामास । गमेर्ण्यन्तात् "कास्प्रत्ययाद्°" इति आम् प्रत्ययः । कृञोऽनुप्रयोगश्च ॥

अष्टमी ॥

ये दस्यवः पितृषु प्रविष्टा ज्ञातिमुखा अहुतादश्चरन्ति ।
परापुरो निपुरो ये भरन्त्यग्निष्टानस्मात् प्र धमाति यज्ञात् ॥ २८ ॥

ये । दस्यवः । पितृषु । प्रऽविष्टाः । ज्ञातिऽमुखाः । अहुतऽअदः । चरन्ति । पराऽपुरः । निऽपुरः । ये । भरन्ति । अग्निः । तान् । अस्मात् । प्र । धमाति । यज्ञात् ॥ २८ ॥

ये दस्यवः उपक्षयकारिणो राक्षसा ज्ञातिमुखाः ज्ञातीनां मुखमिव मुखं येषां ते तथोक्ताः । ज्ञातिप्रतिरूपा इत्यर्थः । अत एव पितृषु पितृपितामहप्रपितामहेषु मध्ये प्रविष्टाः अहुतादः अहुतं लौकिकम् अन्नम् अदन्ति भक्षयन्तीति अहुतादः । यद्वा अहुतावस्थमेव हविर्मायया अदन्तीति अहुतादः । चरन्ति पितृषु मध्ये वर्तन्ते । परापुरः परापृणन्ति पिण्डान् ददतीति परापुरः पिण्डदातारः पुत्राः । [निपुरः] निपृणन्ति नियमेन पिण्डदानादिकं कुर्वन्तीति निपुरः पौत्राः । पृ पालनपूरणयोः । इत्यस्माद् उभयत्र कर्तरि क्विप् । "उदोष्ठ्यपूर्वस्य" इति उत्वम् । ये [च] राक्षसाः पिण्डोदकदानादिना पालयितॄन् पुत्रपौत्रादीन् भरन्ति ह-

१ CR दृस्यवः. We with A B K V Dc. २ CR ज्ञातिमुखा अहुता° (without any accent on ज्ञातिमुखा). We with B K V Dc Cp.

1 S' निर्वहेत. 2 S' om. °प्र°.

रन्ति। नाशयन्तीत्यर्थः। तान् मायाविनो राक्षसान् अग्निः अस्माद् यज्ञात् पितॄन् उद्दिश्य क्रियमाणात् प्र धमाति प्रधमतु प्रकर्षेण निर्गमयतु। ⌛ध्मा शब्दाग्निसंयोगयोः। अस्मात् लेटि आडागमः। "पाघ्रा०" इत्यादिना धमादेशः⌛॥

नवमी॥

सं विशन्त्विह पितरः स्वा नः स्योनं कृण्वन्तः प्रतिरन्त आयुः।
तेभ्यः शकेम हविषा नक्षमाणा ज्योग् जीवन्तः शरदः पुरूचीः॥२९॥

सम्। विशन्तु। इह। पितरः। स्वाः[2]। नः[2]। स्योनम्। कृण्वन्तः। प्रऽतिरन्तः[1]। आयुः।
तेभ्यः। शकेम। हविषा। नक्षमाणाः। ज्योक्। जीवन्तः। शरदः। पुरूचीः॥ २९॥

इह अस्मिन् यज्ञे नः अस्माकं स्वाः ज्ञातयो गोत्रजाः पितरः पितृपितामहप्रपितामहाः सं विशन्तु सम्यग् उपविशन्तु। उपविष्टास्ते स्योनम् सुखम् अस्माकं कृण्वन्तः कुर्वन्तः[1] आयुः जीवनं प्रतिरन्ते। ⌛प्रपूर्वस्तिरतिर्वर्धनार्थः⌛। प्रवर्धयन्तु। चिरकालम् अस्मान् जीवयन्तु इत्यर्थः। दक्षमाणाः* वर्धमाना वयं तेभ्यः पितृभ्यो हविषा चरुपुरोडाशादिलक्षणेन शकेम परिचरितुं शक्ता भूयास्म। ⌛शक्लृ शक्तौ इत्यस्माद् आशिषि लिङि "लिङ्याशिष्यङ्" इति अङ् प्रत्ययः⌛। पुरूचीः पुरु बहुलम् अञ्चन्ति गच्छन्तीति पुरूच्यः। ⌛अञ्चतेः "ऋत्विग्०" इत्यादिना क्विन्। "अनिदिताम्०" इति नलोपः। "अचः" इति अकारलोपे "चौ" इति दीर्घः। अञ्चतेश्चोपसंख्यानम्" इति ङीप्⌛। पुरूचीः बह्वीः शरदः संवत्सरान्। ⌛अत्यन्तसंयोगे

1 So we with A B C K^m R V Dc. Cp has प्रऽतिरन्ते।. P P^2 प्रऽतिरते।. Sâyaṇa प्रतिरंते. But the accent in the Saṁhitâ as well as the context doubtless suggest प्रऽतिरन्तः in the pada-pâṭha, which we accordingly adopt in spite of the pada-MSS. Prof. Whitney has rightly adopted the correction in his *Index Verborum* to his edition.
2 P P^2 स्वानः।, and Cp स्वानः। for स्वाः। नः।.

1 S' कृण्वंतः.

द्वितीया ⧗ । ज्योक् चिरकालं जीवन्तः पितृप्रसादाज्जीवितारो भवेम ॥

दशमी ॥

यां ते॑ धे॒नुं नि॑पृ॒णामि॒ यमु॑ ते क्षी॒र ओ॑द॒नम् ।

तेना॒ जन॑स्यासो भ॒र्ता योत्रा॑स॒दजी॑वनः ॥ ३० ॥ (९)

याम् । ते॒ । धे॒नुम् । नि॒ऽपृ॒णामि॑ । यम् । ऊं॒ इति॑ । ते॒ । क्षी॒रे । ओ॒द॒नम् ।

तेन॑ । जन॑स्य । अ॒स॒ः । भ॒र्ता । यः । अत्र॑ । अस॑त् । अजी॑वनः ॥ ३० ॥

हे प्रेत ते तुभ्यं यां धेनुम् दोग्ध्रीं गां निपृणामि प्रयच्छामि । ⧗ नि-पूर्वः पृणातिः पित्र्ये दाने वर्तते ⧗ । त्वाम् उद्दिश्य गां दत्तवान् अस्मीत्यर्थः । तथा क्षीरे पयसि पक्वं यम् उ यं च ओदनं ते तुभ्यं नि-पृणामि तेन धेनुसहितेन ओदनेन जनस्य जनिमतो लोकस्य भर्ता धा-रयिता पोषयिता वा असः भवेः । ⧗ डुभृञ् धारणपोषणयोः ⧗ । यो जनः अत्र अस्मिन् लोके अजीवनः जीवनरहितः असत् भवेत् । तस्य जनस्येति संबन्धः । यद्वा अस्मिन् लोके जीवनरहितः असत् । पुरुषव्य-त्ययः । स त्वम् इति संबन्धः । ⧗ अस इति । अस्तेर्लेटि अडा-[1]गमः । "इतश्च लोपः परस्मैपदेषु" इति इकारलोपः ⧗ ॥

इति द्वितीयेनुवाके तृतीयं सूक्तम् ॥

पितृमेधे "अश्वावतीम्" [ ३१ ] इत्यृचा शवदाहानन्तरं स्नानं कृत्वा नदीं तरतोऽ[2]नुमन्त्रयेत । पिण्डपितृयज्ञे "ये निखाताः" [ ३४ ] इति द्वाभ्यां द्वे समिधावादध्यात् । "शं तप" [ ३६ ] इत्यृचा प्रेतशरीरे पुत्रेण दत्तम् अग्निं पुत्रो गोत्रिणो वा दीपयेयुः । "ददामि" [ ३७ ] इत्यनया का-म्पीलशाखया दहनस्थानं संप्रोक्षेत् । "इमां मात्रां मिमीमहे" [ ३९ ] इत्यादिभिः सप्तभिः श्मशानदेशं प्रतिदिशं मिमीते[3] । दिष्टिवितस्त्यादिभिः

१ K<sup></sup>m C °त्रांसद°. We with A B R V Dc. २ Cp ओ॒द॒ने ।.

1 S' आडागमः. 2 S' नदीतरोनु° for नदीं तरतोनु° which is conjectural. *Kaus'ika* has: अश्वावतीमिति नदीं तारयते ।. Kes'ava: अश्वावतीत्यृचा नदीतरंतामनुमंत्रयते ।. 3 S' मिमीत.

प्रमाणैः सप्त दक्षिणतो मिमीते । सप्त उत्तरतः । पञ्च पुरस्तात् । पञ्च पश्चात् इत्यादिक्रमेणेत्यर्थः ॥

तत्र प्रथमा ॥

अश्वावतीं प्र तर या सुशेवार्क्षाकं वा प्रतरं नवीयः ।

यस्त्वा जघान वध्यः सो अस्तु मा सो अन्यद् विदत भागधेयम् ॥३१॥

अश्वऽवतीम् । प्र । तर । या । सुऽशेवा । ऋक्षाकम्[1] । वा । प्रऽतरम् । नवीयः ।

यः । त्वा । जघान । वध्यः[2] । सः । अस्तु । मा । सः । अन्यत् । विदत ।

भागऽधेयम् ॥ ३१ ॥

हे प्रेत अश्वावतीम् अश्वा अस्यां सन्तीति अश्वावती अश्वानाम् आ[1]करभूता नदी । ॥"[मन्त्रे] सोमाश्वेन्द्रिय°" इति मतौ दीर्घः॥ । संज्ञाशब्दोयम् । एतत्संज्ञां नदीं प्र तरय[*] प्रकर्षेण तारय उत्तारय । सा च नदी सुशेवा अस्मभ्यं सुसुखा भवतु । तथा ऋक्षाकं वा । वाशब्दश्चार्थे । ऋक्षाकम् ऋक्षैः भल्लूकैरुपेतं दुष्टमृगनिषेवितं नवीयः नवतरम् अदृष्टपूर्वम्[2] अरण्यमपि प्रतरम् प्रकर्षेण तरामि । हे प्रेत त्वा त्वां यः पुरुषः जघान स वध्यः वधार्हः अस्तु भवतु । स घातकः पुरुषः अन्यद् भागधेयम् पूर्वम् उपभुक्ताद् अन्यद् उपभोग्यं वस्तु मा विदत मा लभताम् । निर्धनो भवत्वित्यर्थः । ॥विद्लृ लाभे । अस्मात् माङि लुङि आत्मनेपदैकवचने लृदित्वात् च्लेः अङ् आदेशः॥ ॥

द्वितीया ॥

यमः परोवरो[3] विवस्वान्[3] ततः परं नाति पश्यामि किं चन ।

यमे अध्वरो अधि मे निविष्टो भुवो[4] विवस्वानन्वाततान ॥ ३२ ॥

---

१ Cp ऋक्षाकाम् ।. २ P Cp बध्यः ।. ३ A K[m] C R परोवरो विव°. Dc यमः परोवरो विवस्वान् changed to यमः परोवरो विवस्वान्. Cp यमः । परः । अवरः । विवस्वान् ।. B V यमः परोवरो विवस्वान्. We with B V Dc. ४ C भुवो विवस्वान्°. We with A B K[m] R V.

---

1 S′ अकार° for आकर°. 2 S′ अदृष्टपूर्वेरण्युमपि.

यमः । परः । अवरः । विवस्वान् । ततः । परम् । न । अति । पश्यामि । किम् । चन ।

यमे । अध्वरः । अधि । मे । निऽविष्टः । भुवः । विवस्वान् । अनुऽआतताान ॥ ३२ ॥

यमः विवस्वतः पुत्रः परः तेजसा अधिकोभवत्[1] । विवस्वान् यमस्य पिता आदित्यः अवरः तेजसा निकृष्टोभवत्[2] । यमस्तेजसा पितुरपि अधिकोभवद् इत्यर्थः । ततः[3] तस्माद् यमात् परम् उत्कृष्टं किं चन किमपि प्राणिजातं नाति पश्यामि अतिक्रान्तं न जानामि । तस्मिन् सर्वोत्कृष्टे यमे मे मदीयः अध्वरो यज्ञः अधि निविष्टः अधिकम् अवस्थितः । तत्प्रीतिकरो वर्तत इत्यर्थः । यज्ञस्य[4] सिद्ध्ये विवस्वान् तत्पिता सूर्यः भुवः भूप्रदेशान् अन्वाततान स्वकिरणैर्विस्तारितवान् । ॥ तनु विस्तारे ॥ ॥

तृतीया ॥

अपागूहन्नमृतां[1] मर्त्येभ्यः कृत्वा सवर्णामदधुर्विवस्वते ।
उताश्विनावभरद् यत् तदासीदजहादु द्वा मिथुना सरण्यूः ॥ ३३ ॥

अप । अगूहन्[2] । अमृताम् । मर्त्येभ्यः । कृत्वा । सऽवर्णाम् । अदधुः । विवस्वते ।

उत । अश्विनौ । अभरत् । यत् । तत् । आसीत् । अजहात् । ऊं इति । द्वा । मिथुना । सरण्यूः[3] ॥ ३३ ॥

"त्वष्टा दुहित्रे" [१.५३] इत्यत्र इतिहासोभिहितः । सोत्र ऋगर्थप्रतिपत्तये पुनः स्मार्यते । त्वष्टुर्दुहिता सरण्युर्नाम विवस्वत आदित्याद् यमौ मिथुनौ जनयांचकार । तौ च यमलौ यमश्च यमी चेत्याहुरैतिहासिकाः । माध्यमिकोग्निर्माध्यमिकः वाक् चेति नैरुक्ताः । ततः[5] सर-

१ R °मृतान् for °मृतां. Dc °मृतान् changed to °मृतां. P P अमृताम् ।. Cp अमृतां ।. We with A B C K. २ P अगूहम् ।. Cp गूहन् (sic) ।. ३ Cp सरण्यूः ।.

1 S′ अधिकोभवतु. 2 S′ निकृष्टोभवतु. 3 S′ अतः. 4 S′ has यज्ञस्य repeated. 5 S′ has त for ततः.

ण्युस्तत्तेजः असहमाना स्वसमानरूपाम् अन्यां प्रतिनिधाय आश्वं रूपं कृत्वा प्रदुद्राव । सोपि विवस्वान् तज्जानन् आश्वमेव रूपं कृत्वा तां समभवत् । ततः अश्विनौ जज्ञाते । प्रतिनिहितायां सवर्णायां विवस्वत आदित्याद् मनुर्जज्ञ इत्ययम् अर्थोत्र प्रतिपाद्यते ॥ मर्त्येभ्यः मरणधर्मभ्यो मनुष्येभ्यः अमृतान् * मरणधर्मरहितान् आत्मनः देवा अपागूहन् तिरोहितान् अकुर्वन् । अमृतत्वप्रापकं स्वकीयं रूपं देवा मनुष्येभ्यः प्राच्छादयन्[1] । ⌛गुहू संवरणे⌛ । तथा सवर्णाम् समानरूपाम् अन्यां स्त्रियं कृत्वा विवस्वते आदित्याय अदधुः अधारयन् । प्रायच्छन्नित्यर्थः । उत अपि च सरण्युवा यद् आश्वं रूपं तदानीं स्वीकृतम् आसीत् तत् अश्विनौ अभरत् समभरत् । उदपादयद् इत्यर्थः । यद्वा अश्वभूतयोः सरण्युविवस्वतोर्यद् रेत आसीत् तद् अश्विनावजनयद् इत्यर्थः । सा च सरण्यूस्त्वष्टुदुहिता निर्गमनसमये द्वा द्वौ मिथुना मिथुनौ स्त्रीपुंसात्मकौ अजहात् पर्यत्यजत् । ⌛ओहाक् त्यागे⌛ । उशब्दः अवधारणे । ⌛द्वा मिथुनेत्यत्र[2] "वा छन्दसि" इति पूर्वसवर्णदीर्घः⌛ ॥

चतुर्थी ॥

ये निखा॑ता॒ ये परो॑प्ता॒ ये द॒ग्धा ये चोद्धि॑ताः ।
सर्वा॑स्ता॒नग्न॒ आ व॑ह पि॒तॄन् ह॒विषे॒ अत्त॑वे ॥ ३४ ॥

ये । नि॒ऽखा॑ताः । ये । परा॑ऽउप्ताः । ये । द॒ग्धाः । ये । च॒ । उद्धि॑ताः[1] ।
सर्वा॑न् । तान् । अ॒ग्ने॒ । आ । व॒ह॒ । पि॒तॄन् । ह॒विषे॑ । अत्त॑वे ॥ ३४ ॥

ये पितरः भूमौ निखाताः निखननसंस्कारेण संस्कृताः । ⌛खनु अवदारणे । कर्मणि निष्ठा । "जनसनखनां सञ्झलोः" इति आत्वम्⌛ । ये च पितरः परोप्ताः परावपनं दूरदेशे काष्ठवत्परित्यागः । तेन संस्कृताः । ये च दग्धाः अग्निना संस्कृताः । ये च उद्धिताः संस्कारोत्तरकालम् ऊर्ध्वदेशे पितृलोके स्थिताः । एवं बहुविधाव-

---

१ P P̊ उदिताः ।. We with Cp.

1 S' प्रच्छादयन् for प्राच्छादयन्. 2 S' om. °नेत्यत्र वा छन्दसि इति पू° and has a lacuna for ten letters instead.

स्थितान् तान् सर्वान् पितॄन् हविषे अत्तवे अस्माभिर्दत्तं हविर्भक्षयितुम् हे अग्ने आ वह आनय । "क्रियाग्रहणं कर्तव्यम्" इति कर्मणः संप्रदानत्वात् हविःशब्दाच्चतुर्थी । अद भक्षणे इत्यस्मात् "तुमर्थे सेसेन्०" इति तवेन् प्रत्ययः ॥

पञ्चमी ॥

ये अ॒ग्निद॑ग्धा॒ ये अन॑ग्निदग्धा॒ मध्ये॑ दि॒वः स्व॒धया॑ मा॒दय॑न्ते ।

त्वं तान् वे॑त्थ॒ यदि॑ ते जा॑तवेदः स्व॒धया॑ य॒ज्ञं स्वधि॑तिं जुषन्ताम् ॥३५॥

ये । अ॒ग्नि॒ऽद॒ग्धाः । ये । अन॑ग्निऽदग्धाः । मध्ये॑ । दि॒वः । स्व॒धया॑ । मा॒दय॑न्ते ।

त्वम् । तान् । वे॒त्थ॒ । यदि॑ । ते॑ । जा॒त॒ऽवे॒दः॒ । स्व॒धया॑ । य॒ज्ञम् । स्वऽधि॑तिम् । जु॒ष॒न्ता॒म् ॥ ३५ ॥

ये पितरः अग्निदग्धाः अग्निना संस्कृताः । ये च अनग्निदग्धाः अग्निदाहरहितेन खननादिसंस्कारेण संस्कृता दिवः द्युलोकस्य मध्ये स्वधया । अन्ननामैतत् । पुत्रादिभिर्दत्तेन पिण्डरूपेण हविषा । यद्वा स्वधाकारोपलक्षितेन पिण्डपितृयज्ञादिकर्मणा मादयन्ते हृष्टास्तृप्ता वर्तन्ते हे जातवेदः जातानां वेदितरग्ने त्वं तान् सर्वान् पितॄन् यदि वेत्थ जानासि । "यदि वेदाः प्रमाणं स्युः" इतिवद् निश्चये यदिशब्दः । त्वमेव तान् निश्चयेन जानासीत्यर्थः । ते सर्वे स्वधायाः संबन्धिनम् अस्मदीयं यज्ञं स्वधितम् । स्वधा संजाता यस्य स तथोक्तः । तारकादित्वाद् इतच् प्रत्ययः । यद्वा स्वैर्ज्ञातिभिः पुत्रपौत्रादिभिः हितं विहितं कृतम् ईदृशं यज्ञं जुषन्ताम् सेवन्ताम् ॥

षष्ठी ॥

शं त॑प॒ माति॑ तपो॒ अग्ने॒ मा त॒न्वं१॒ तपः॑ ।

वने॑षु॒ शुष्मो॑ अस्तु ते पृथि॒व्याम॑स्तु॒ यद्धरः॑ ॥ ३६ ॥

१ CB यदि॑ ते जातवेदः. Cp ते॒।. Dc यदि॒ ते जा॑तवेदः changed to यदि॑ ते जातवेदः. We with AKR. २ Cp अग्निऽद॑ग्धाः. We with the Saṁhitâ. ३ ABCKRDc त॒न्वं॒१ तपः॑. Cp तपः॑. Only V recites: त॒न्वं तपः. The latter is the correct accent, but requires further confirmation.

शम्। तप। मा। अति। तपः। अग्ने। मा। तन्वम्। तपः।
वनेषु। शुष्मः[2]। अस्तु। ते। पृथिव्याम्। अस्तु। यत्। हरः॥ ३६॥

हे अग्ने शम् सुखं यथा भवति तथा प्रेतशरीरं तप दह। मा अति तपः अतितापं मा कार्षीः। अतिदहने हि अस्थीन्यपि भस्मीभवन्ति तेषां संचयनादिसंस्कारेण प्रतिविधानाद् अतिदाहो निषिध्यते। तथा तन्वः* शरीराणि अस्मत्संबन्धीनि मा तपः मा धाक्षीः। तथा ते त्वदीयः शुष्मः शोषको ज्वालासमूहो वनेषु अरण्येषु अस्तु भवतु। हरः रसहरणशीलं यत् त्वदीयं तेजस्तत् पृथिव्याम् भूम्याम् अस्तु भवतु॥

सप्तमी॥

ददाम्यस्मा अवसानमेतद् य एष आगन् मम चेदभूदिह।
यमश्चिकित्वान् प्रत्येतदाह ममैष राय उप तिष्ठतामिह॥ ३७॥

ददामि। अस्मै। अवऽसानम्। एतत्। यः। एषः। आऽअगन्। मम। च। इत्। अभूत्[3]। इह।
यमः। चिकित्वान्। प्रति[4]। एतत्। आह। मम। एषः। राये। उप। तिष्ठताम्। इह॥ ३७॥

यमो ब्रूते। अस्मै मृताय पुरुषाय अवसानम्। अवस्यन्ति निवसन्ति अस्मिन्निति अवसानम् आवासस्थानम्। एतत् स्थानं ददामि[1] [यत्*[2] यस्मात् कारणात् एष पु]रुषः आगन् मत्समीपम् अगमत्। ☒ गमेर्लुङि "मन्त्रे घस०" इति च्लेर्लुक्। "मो नो धातोः" इति नत्वम् ☒। स च आगतः पुरुषः इह अस्मिन् लोके मम संबन्धी अभूच्चेत्। यदि मत्संबन्धी मत्परिचरणशीलो भवेद् इत्यर्थः। तदा अस्मै आगतायेति पूर्वेण संबन्धः। एवं चिकित्वान् जानन् यमो मृतं पुरुषं प्रति एतद् वाक्यम् आह ब्रवीति। एषः मत्समीपम् आगतः पुरुषः

१ See foot-note ३ on the previous page. २ Cp शुग्मः।. ३ Cp अभूत्।. ४ Cp अति।.

1 S′ has ददाम for ददामि and then a lacuna for about ten letters. 2 This यत् is supplied from Sâyaṇa's text which reads यदेष instead of य एष.

रायः । ॥ रै शब्दे ॥ । रायति स्तौतीति रायः मम स्तोता भूत्वा इह अस्मिन् मदीये लोके उप तिष्ठताम् सेवताम् ॥

अष्टमी ॥

इमां मात्रां मिमीमहे यथापरं न मासातै ।

शते शरत्सु नो पुरा ॥ ३८ ॥

इमाम् । मात्राम् । मिमीमहे । यथा । अपरम् । न । मासातै ।

शते । शरत्ऽसु । नो इति । पुरा ॥ ३८ ॥

इमाम् इति इदंशब्देन सूत्रोक्ता मात्रा अभिनयेन प्रदर्श्यते । इमाम् एतावतीं श्मशानदेशस्य मात्राम् परिमाणं मिमीमहे अरत्निप्रादेशादिमितेन दण्डेन परिच्छेदयामः । ॥ माङ् माने ॥ । यथा येन प्रकारेण अपरम् अन्यत् श्मशानकर्म मां मां न आसातै नासीत न प्राप्नुयात् । ॥ आस उपवेशने । अस्मात् लेटि आडागमः । "वैतोन्यत्र" इति ऐकारः ॥ । तथा मिमीमह इति संबन्धः । श्मशानकर्मप्राप्तेरवधिम् आह शते शरत्स्विति । शतसंख्याकेषु संवत्सरेषु अस्माकं जीवनं ब्रह्मणा परिकल्पितम् ततः पुरा शतसंवत्सरमध्ये नो नैव अस्मान् श्मशानकर्म प्राप्नोतु । अकालमृतिरस्माकं मा भूद् इत्यर्थः ॥ एवम् उत्तरे षण्मन्त्रा व्याख्येयाः ॥

नवमी ॥

प्रेमां मात्रां मिमीमहे यथापरं न मासातै ।

शते शरत्सु नो पुरा ॥ ३९ ॥

प्र । इमाम् । मात्राम् । मिमीमहे । यथा । अपरम् । न । मासातै ।

शते । शरत्ऽसु । नो इति । पुरा ॥ ३९ ॥

प्रेत्येतावान् अत्र विशेषः । प्रकर्षेण मिमीमहे इति श्मशानदेशमानस्य प्रकर्षगुणः प्रतिपाद्यते । अन्यत् पूर्ववत् ॥

---

१ Cp मासंतै.

---

1 S′ स्मशान°. 2 S′ एतावान् for प्रेत्येतावान्.

दशमी ॥

अपेमां मात्रां मिमीमहे यथापरं न मासातै ।
शते शरत्सु नो पुरा ॥ ४० ॥ (१०)

अप । इमाम् । मात्राम् । मिमीमहे । यथा । अपरम् । न । मासातै ।
शते । शरत्ऽसु । नो इति । पुरा ॥ ४० ॥ (१०)

अत्र[1] अप इत्युपसर्गेण अपगतदोषता मानस्य प्रतिपाद्यते । तद्दोषाश्च श्मशानलक्षणे[2] निषिध्यन्ते । यथाह भारद्वाजः । "दहनदेशं जोषयते दक्षिणाप्रत्यक्प्रवणम् अनिरिणम् असुषिरम् अनूषरम् अभङ्गुरम्" इत्यादिना । अन्यत् पूर्ववत् ॥

[इति] द्वितीयेनुवाके चतुर्थं सूक्तम् ॥

"वीमां मात्रां मिमीमहे" इति आदितश्चतसृणाम् ऋचां श्मशानप्रमाणकरणे विनियोग उक्तः ॥

"अमासि मात्राम्"[४५] इति तिसृभिः पूर्वोक्तप्रकारेण मितं श्मशानप्रदेशम् अनुमन्त्रयेत ॥

"उदन्वती"[४८] इति द्वाभ्यां प्रेतम् उत्थाप्य शकटे शयने वा निदध्यात् ॥

"ये नः पितुः पितरः"[४९] इति द्वाभ्यां प्रेतशरीरे संदीपितेऽग्नौ याम्यहोमं[3] कुर्यात् ॥

"इदमिद् वा"[५०] इति तिसृभिः श्मशानदेशं[2] विषमसंख्याकाभिः शलाकाभिः इष्टकाभिर्वा प्रसव्यं चिनुयात् ॥

तत्र प्रथमा ॥

वीऽमां मात्रां मिमीमहे यथापरं न मासातै ।
शते शरत्सु नो पुरा ॥ ४१ ॥

वि । इमाम् । मात्राम् । मिमीमहे । यथा । अपरम् । न । मासातै ।
शते । शरत्ऽसु । नो इति । पुरा ॥ ४१ ॥

1 S' तत्र. 2 S' समशान°. 3 S' यम्य°.

अत्र वीत्युपसर्गेण श्मशानदेशमानस्य[1] विशिष्टगुणयोगः प्रदर्शितः । अन्यत् पूर्ववत् ॥

द्वितीया ॥

निरिमां मात्रां मिमीमहे यथापरं न मासातै ।
शते शरत्सु नो पुरा ॥ ४२ ॥

निः । इमाम् । मात्राम् । मिमीमहे । यथा । अपरम् । न । मासातै ।
शते । शरत्ऽसु । नो इति । पुरा ॥ ४२ ॥

अत्र[2] निरित्युपसर्गेण निर्गतदोषता मानस्य प्रतिपाद्यते । अन्यत् समानं पूर्वेण ॥

तृतीया ॥

उदिमां मात्रां मिमीमहे यथापरं न मासातै ।
शते शरत्सु नो पुरा ॥ ४३ ॥

उत् । इमाम् । मात्राम् । मिमीमहे । यथा । अपरम् । न । मासातै ।
शते । शरत्ऽसु । नो इति । पुरा ॥ ४३ ॥

उद् इत्युपसर्गेणात्र मानस्य उत्कर्षगुणोभिधीयते । गतम् अन्यत् ॥

चतुर्थी ॥

समिमां मात्रां मिमीमहे यथापरं न मासातै ।
शते शरत्सु नो पुरा ॥ ४४ ॥

सम् । इमाम् । मात्राम् । मिमीमहे । यथा । अपरम् । न । मासातै[१] ।
शते । शरत्ऽसु । नो इति । पुरा ॥ ४४ ॥

इमां श्मशानदेशस्य[1] मात्रां सं मिमीमहे । उदीरितगुणयोगेन सम्यग् मिमीमहे[3] । अत्र प्रत्यृचं यथापरं न मासातै इत्यादिरावर्त्यते । तस्यायम् अभिप्रायः । पुनःपुनःप्रार्थनया आदरातिशयद्योतिन्या प्रार्थ्यमानोऽर्थः सर्वथा सिध्यतीति । गतम् अन्यत् ॥

---

१ Cp मासंतै ।.

---

1 S′ स्मशान°. 2 S′ तत्र. 3 S′ om. °महे । अत्र प्रत्यृचं यथा° and has instead a lacuna for about twelve letters.

पञ्चमी ॥

अमासि मात्रां स्वरगामायुष्मान् भूयासम् ।
यथापरं न मासातै शते शरत्सु नो पुरा ॥ ४५ ॥

अमासि । मात्राम् । स्वः । अगाम् । आयुष्मान् । भूयासम् ।
यथा । अपरम् । न । मासातै । शते । शरत्ऽसु । नो इति । पुरा ॥ ४५ ॥

मात्राम् श्मशानदेशस्य परिमाणम् अमासि परिच्छेदितवान् अस्मि । उदीरितरीत्या समीचीनं मानम् अकृषीत्यर्थः । माङ् माने इत्यस्मात् लुङि उत्तमैकवचने रूपम् । तेन मानेन स्वः अगाम् स्वर्गं लोकं गतोस्मि । भाविस्वर्गलोकप्राप्तिस्तस्य मानस्य फलम् इत्यर्थः । यद्वा । अन्तर्भावितण्यर्थे एतिर्वर्तते । अगाम् अगमयम् इत्यर्थः । "इणो गा लुङि" इति गादेशः । तेन च मानकर्मणा अहम् आयुष्मान् शतसंवत्सरपरिमितेन आयुषा युक्तो भूयासम् । यथापरं न मासातै इत्यादि प्रागुक्तार्थम् ॥

षष्ठी ॥

प्राणो अपानो व्यान आयुश्चक्षुर्दृशये सूर्याय ।
अपरिपरेण पथा यमराज्ञः पितॄन् गच्छ ॥ ४६ ॥

प्राणः । अपानः । विऽआनः । आयुः । चक्षुः । दृशये । सूर्याय ।
अपरिऽपरेण । पथा । यमऽराज्ञः । पितॄन् । गच्छ ॥ ४६ ॥

मुख्यप्राणस्य तिस्रो वृत्तयः प्राणाद्याः । मुखनासिकाभ्यां बहिर्निःसरन् वायुः प्राणः । अन्तर्गच्छन् अपानः । मध्यस्थः सन् अशितपीतादिकं विविधम् आनिति कृत्स्नदेहं व्यापयतीति व्यानः । आयुः जीवनं शतसंवत्सरपरिमितम् । चक्षुः नीलपीतादिदर्शनसाधनम् इन्द्रियम् । एतच्च उपलक्षणम् अन्येषाम् इन्द्रियाणाम् । सर्वम् एतद् अनुक्रान्तं सू-

---

१ Cp मासंतै. २ P P यथा ।. Cp यथा. The Saṁhitâ MSS. all give पथा and not यथा.

---

1 S' मुख्य°.

र्याय । षष्ठ्यर्थे चतुर्थी । सूर्यस्य दृशये दर्शनाय भवतु । प्राणादिभिः सहिताः सूर्यं पश्यन्तश्चिरकालम् अवतिष्ठेमहीत्यर्थः[1] ॥ हे मृतपुरुष त्वं यमराज्ञः यमश्चासौ राजा यमराजा तस्य स्वभूतेन अपरिपरेण । परिपरिणः पर्यवस्थातारश्चोराः । तद्रहितेन पथा मार्गेण पितॄन् गच्छ प्राप्नुहि ॥

सप्तमी ॥

ये अ॒ग्रवः॑ शशमा॒नाः प॑रे॒युर्हि॒त्वा द्वेषां॒स्यन॑पत्यवन्तः ।

ते द्यामु॒दित्या॑विदन्त लो॒कं नाक॑स्य पृ॒ष्ठे अधि॒ दीध्या॑नाः ॥ ४७ ॥

ये । अ॒ग्रवः॑ । श॒श॒मा॒नाः । प॒रा॒ऽई॒युः । हि॒त्वा । द्वेषां॑सि । अन॑पत्यऽवन्तः । ते । द्याम् । उ॒त्ऽइत्य॑ । अ॒वि॒द॒न्त॒ । लो॒कम् । नाक॑स्य । पृ॒ष्ठे । अधि॑ । दीध्या॑नाः ॥ ४७ ॥

शशमानाः । शशमानः शंसमान इति यास्कः [नि॰ ६. ८] । यद्वा शश प्लुतगतौ । ताच्छीलिकश्चानश् । प्लुतगमनशीला अग्रवः अग्रगामिनो ये पितरः अनपत्यवन्तः अपत्यरहिता द्वेषांसि द्वेषणीयानि पापानि हित्वा त्यक्त्वा परेयुः पराजग्मुः । अमृषतेत्यर्थः । ते पितरो द्याम् अन्तरिक्षम् उदित्य उद्गत्य ऊर्ध्वं गत्वा नाकस्य दुःखसंस्पर्शरहितस्य स्थानस्य पृष्ठे उपरिभागे । अधिः सप्तम्यर्थानुवादी । अधिकं वा दीध्यानाः दीप्यमाना लोकम् सुकृतफलोपभोगस्थानम् अविदन्त अलभन्त । विद्लृ लाभे । लृदित्वाद् आत्मनेपदेपि व्यत्ययेन च्लेः अङ् आदेशः । यद्वा लङि "अनित्यम् आगमशासनम्" इति नुमभावः ॥

अष्टमी ॥

उ॒द॒न्व॑ती॒ द्यौर॑व॒मा पी॑लु॒मती॒ति॑ मध्य॒मा ।

तृ॒तीया॑ ह प्र॒द्यौरि॑ति॒ यस्यां॑ पि॒तर॒ आस॑ते ॥ ४८ ॥

१ C R अग्रवः. Dc अग्रवः corrected to अग्रवः. We with B K^m V Cp. २ Cp अविदन्त ।. ३ A C R उदन्वती. Dc उदन्वती corrected to उदन्वती. Cp उदन्ऽवती ।. We with B K^m V Dc.

1 S' अवतिष्ठतही° for अवतिष्ठेमही°.

उदन्ऽवती । द्यौः । अवमा । पीलुऽमती । इति । मध्यमा ।
तृतीया । ह । प्रऽद्यौः । इति । यस्याम् । पितरः । आसते ॥ ४८ ॥

पितृलोकस्य सर्वोत्कृष्टतां वक्तुं दिवस्त्रैविध्यं प्रतिपाद्यते । अवमा अधःकक्ष्यां गता द्यौः उदन्वती उदकवती यस्याम् अवस्थिता मेघाः प्रवर्षन्ति । तस्या उदन्वतीति संज्ञेत्यर्थः ॥ मध्यमा मध्यकक्ष्यां[1] गता द्यौः पीलुमती इत्युच्यते । पालयन्तीति पीलवः ग्रहनक्षत्रा[दयः । ते यस्यां सन्तीति पीलुमती । तृतीया ह । ह]शब्दः[2] प्रसिद्धौ । प्रद्यौरिति प्रसिद्धा । प्रकृष्टफलोपेता द्यौः प्रद्यौः । यस्यां तृतीयस्यां दिवि नाकपृष्ठाख्ये स्थाने पितरः पितृदेवता आसते निवसन्ति ॥

नवमी ॥

ये नः पितुः पितरो ये पितामहा य आविविशुरुर्व१न्तरिक्षम् ।
य आक्षियन्ति पृथिवीमुत द्यां तेभ्यः पितृभ्यो नमसा विधेम ॥ ४९ ॥

ये । नः । पितुः । पितरः । ये । पितामहाः । ये । आऽविविशुः । उरु ।
अन्तरिक्षम् ।
ये । आऽक्षियन्ति । पृथिवीम् । उत । द्याम् । तेभ्यः । पितृऽभ्यः । नमसा ।
विधेम ॥ ४९ ॥

नः अस्माकं पितुस्तातस्य ये पितरः जनकाः । ये च पितामहास्तज्जनकाः । पूजार्थे बहुवचनम् । ये च अन्ये उरु विस्तीर्णम् अन्तरिक्षम् आविविशुः आविष्टवन्तः । ये च पृथिवीम् आक्षियन्ति अभिनिवसन्ति । पृथिव्यां वर्तन्त इत्यर्थः । उतशब्दः अप्यर्थे । ये च द्याम् स्वर्गलोकम् आक्षियन्ति आश्रित्य निवसन्ति । इत्थं लोकत्रयं व्याप्य वर्तन्त इत्यर्थः । तेभ्यः सर्वेभ्यः पितृभ्यः । ꣸ तादर्थ्ये चतुर्थी ꣸ । नमसा । नम इति अन्ननाम । हविर्लक्षणेन अन्नेन नमस्कारेण वा विधेम परिचरेम । ꣸ विधतिः परिचरणकर्मा ꣸ ॥

१ See foot-note २ on the previous page.

1 S′ मध्यकक्षा°. 2 S′ has a lacuna of about seventeen letters here.

दशमी ॥

इदमिद् वा उ नापरं दिवि पश्यसि सूर्यम् ।
माता पुत्रं यथा सिचाभ्येनं भूम ऊर्णुहि ॥ ५० ॥ (११)

इदम् । इत् । वै । ऊं इति । न । अपरम् । दिवि । पश्यसि । सूर्यम् ।
माता । पुत्रम् । यथा । सिचा । अभि । एनम् । भूमे । ऊर्णुहि ॥ ५० ॥

हे मृतपुरुष इदम् इद् वा उ इदमेव खलु तव जीवनम् यद् अस्माभिः श्राद्धेषु दीयते । अपरम् अन्यद् न किंचिद् अस्ति । अत्रैव श्मशानदेशे निवसन् सूर्यं दिवि आकाशे पश्यसि ॥ उत्तरोर्धर्चः परोक्षकृतः । यथा येन प्रकारेण माता जननी सिचा चेलाञ्चलेन स्वकीयं पुत्रम् अभिवृणोति आच्छादयति हे भूमे पृथिवि एनं श्मशानस्थं मृतम् अभ्यूर्णुहि स्वतेजसा प्रच्छादय । शीतवातोष्णादिकं यथैनं न प्राप्नोति तथा त्वत्स्वरूपे अन्तर्भावयेत्यर्थः ।　　ऊर्णुञ् छादने ॥

[इति] द्वितीयेनुवाके पञ्चमं सूक्तम् ॥

"इदमिद् वै" इति ऋचोराद्ययोः श्मशानदेशे शलाकाभिश्चयनकर्मणि विनियोग उक्तः ॥

"अग्नीषोमा पथिकृता" [५३] इति तिसृभिः प्रेतम् उत्थाप्य दहनाय शकटे निदध्यात् ॥

"इमौ युनज्मि" [५६] इत्यनया समेते शकटे वृषभद्वयम् अभिमन्त्र्य युञ्ज्यात् ॥

"एतत् त्वा वासः" [५७] इत्यनया वासोऽभिमन्त्र्य प्रेतं प्रच्छादयेत् ॥

"अग्नेर्वर्म" [५८] इत्यनया सप्तच्छिद्रया गो[वपया] प्रेतमुखं प्रच्छादयेत् ॥

"दण्डं हस्तात्" [५९] इत्यनया प्रेतब्राह्मणहस्ताद् वेदयष्टिं पुत्रो गृह्णीयात् ॥

"धनुर्हस्तात्" [६०] इत्यनया प्रेतक्षत्रियहस्ताद् धनुर्गृह्णीयात् ॥

---

१ C सिचा अभ्येनं. We with A B R Dc.　२ Cp पश्यंसि ।.

---

1 S' स्मशान°.

तत्र प्रथमा ॥

इदमिद् वा उ नापरं जरस्यन्यदितोपरम् ।
जाया पतिमिव वाससाभ्येनं भूम ऊर्णुहि ॥ ५१ ॥

इदम् । इत् । वै । ऊं इति । न । अपरम् । जरसि । अन्यत् । इतः । अपरम् ।
जाया । पतिम्ऽइव । वाससा । अभि । एनम् । भूमे । ऊर्णुहि ॥ ५१ ॥

जरसि जरायां जीर्यदवस्थायां यद् अन्नादिकम् उपभुक्तम् इदम् इद् वा उ इदमेव खलु परिशिष्टम् नापरम् अन्यद् भोक्तव्यम् अस्ति । इ-तः अस्मात् श्मशानदेशाद्[1] अन्यत् स्थानमपि अस्य न विद्यते अपरं कार्यजातमपि अस्य न संभवति । इत्थं श्मशाने[1] परित्यक्तम् एनम् हे भूमे जाया भार्या पतिं वाससेव अभ्यूर्णुहि अभिप्रच्छादय ॥

द्वितीया ॥

अभि त्वोर्णोमि पृथिव्या मातुर्वस्त्रेण भद्रया ।
जीवेषु भद्रं तन्मयि स्वधा पितृषु सा त्वयि ॥ ५२ ॥

अभि । त्वा । ऊर्णोमि । पृथिव्याः । मातुः । वस्त्रेण । भद्रया ।
जीवेषु । भद्रम् । तत् । मयि । स्वधा । पितृषु । सा । त्वयि ॥ ५२ ॥

मातुः सर्वजनन्याः भद्रया । ॥षष्ठ्यर्थे तृतीया॥ । भद्रायाः कल्याण्याः पृथिव्याः भूम्याः संबन्धिना वस्त्रेण वाससा हे मृतपुरुष त्वा त्वाम् अभि प्रोर्णोमि[2] अभिच्छादयामि । जीवेषु प्राणधारिषु जीवद-वस्था[वत्सु मनुष्येषु मध्ये यद्] दानाय [भद्रम्] शोभनं वस्त्वस्ति तन्मयि संस्कर्तरि भवतु । पितृषु पितृदेवतासु या स्वधा विद्यते । स्वधेति अ-न्ननाम । स्वधाकारेण हूयमानं हविर्लक्षणम् अन्नं यद् अस्ति सा स्वधा त्वयि मृतपुरुषे भवतु । यद्वा स्वैर्ज्ञातिभिर्धीयते विधीयत इति स्वधा पिण्डोदकदानादिरूपा पितृतृप्तिकरी क्रिया स्वधा । सा त्वयि भव-त्वित्यर्थः ॥

1 S′ स्मशान°. 2 So S′. The text in S′ is अभि प्रोर्णोमि and not अभि त्वोर्णोमि.

तृतीया ॥

अग्नीषोमा पथिकृता स्योनं देवेभ्यो रत्नं दधथुर्वि लोकम् ।
उप प्रेष्यन्तं पूषणं यो वहात्यञ्जोयानैः पथिभिस्तत्र गच्छतम् ॥ ५३ ॥

अग्नीषोमा । पथिऽकृता । स्योनम् । देवेभ्यः । रत्नम् । दधथुः । वि । लोकम् ।
उप । प्र । ईष्यन्तम् । पूषणम् । यः । वहाति । अञ्जःऽयानैः । पथिऽभिः ।
तत्र । गच्छतम् ॥ ५३ ॥

अग्नीषोमा अग्निश्च सोमश्च अग्नीषोमौ । ⧗ "सुपां सुलुक्°" इति पूर्वसवर्ण आकारः ⧗ । पथिकृता पन्थानं पुण्यलोकगमनसाधनं मार्गं कुरुत इति पथिकृतौ । ⧗ तेनैव सूत्रेण विभक्तेराकारः ⧗ । एवंगुणविशिष्टावग्नीषोमौ स्योनम् सुखकरं रत्नम् रमणीयं यद्वा रत्नवद् उत्कृष्टं लोकम् स्वर्गाख्यं देवेभ्यः । ⧗ तादर्थ्ये चतुर्थी ⧗ । देवानाम् अर्थे वि दधतुः चक्रतुः । ⧗ "छन्दसि परेपि" इति उपसर्गस्य परत्र प्रयोगः ⧗ । यद्वा । पुरुषव्यत्ययः । हे पथिकृतावग्नीषोमौ देवेभ्यः देवार्थं देवान् उद्दिश्य होतुं रत्नम् रमणीयं लोकम् स्थानं वि दधथुः युवां कृतवन्तौ स्थः । श्रूयते हि । "राजानौ वा एतौ देवतानां यद् अग्नीषोमौ । अन्तरा देवता इज्येते देवतानां विधृत्यै" इति [तै° सं° २. ६. २. २] । यो लोकः उप समीपे प्रेष्यन्तम् प्रगच्छन्तं पूषणम् पूषाख्यं देवम् यद्वा सर्वप्राणिनां पोषकं सूर्यं वहाति वहति धारयति तत्र तस्मिन् लोके अञ्जयानैः अञ्जसा आर्जवेन यान्ति

१ R दधतु°. Dc दधतु° corrected to दधथु°. We with A B C K[m] P P[2] V Dc. २ A B C K[m] R V प्रेष्यन्तं. Dc reads उपप्रेष्यंतं corrected from उपप्रेष्यंतं. ३ V वहात्यञ्जायानैः. K वहात्यजौयानैः (*sic*). B C R वहात्यंजोयानैः. Dc वहात्यंजोयानैः corrected to वहात्यंजायानैः, where it must doubtless have been intended to cancel not only the ॓ but the ा also from the जो, but where the ा appears to have remained intact by oversight. If this conjecture is right the reading of V must be the result of a similar incomplete correction of a MS. A, Sâyaṇa and Sâyaṇa's text have वहात्यंजयानैः. ४ P P[2] प्र । ईष्यंतम् ।. Cp प्र । ईष्यतम् ।. The accent on ईष्यंन्तम् is mine.

1 S' °प्राणानां for °प्राणिनां.

गच्छन्ति एभिरिति अञ्जयानाः । तैः पथिभिर्गच्छतम् इमं प्रेतं गमयतम् । ॥ प्रयोज्यव्यापारवाचिना प्रयोजकव्यापारो लक्ष्यते ॥ ॥

चतुर्थी ॥

पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः ।
स त्वैतेभ्यः परि ददत् पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः ॥ ५४ ॥

पूषा । त्वा । इतः । च्यवयतु । प्र । विद्वान् । अनष्टऽपशुः । भुवनस्य । गोपाः । सः । त्वा । एतेभ्यः । परि । ददत् । पितृऽभ्यः । अग्निः । देवेभ्यः । सुऽविदत्रियेभ्यः ॥ ५४ ॥

हे प्रेत त्वा त्वां विद्वान् जानन् पूषा एतत्संज्ञको देवः इतः अस्मात् स्थानात् प्र च्यावयतु निर्गमयतु । कीदृशः पूषा । अनष्टपशुः अनष्टा अहताः पशवो येन स तथोक्तः । स खलु गवादिपशूनां पोषयिता । "पूषा पोषयतु" [तै° ब्रा° १. ६. २. २] "पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः" इत्यादिश्रुतेः [ऋ° ६. ५४. ५] । भुवनस्य भूतजातस्य गोपाः गोपायिता । ॥ गुपू रक्षणे । "गुपूधूपविच्छि°" इति आयप्रत्ययः । क्विपि अतो लोपे यलोपविधिं प्रति न स्थानिवद् भवतीति तस्य स्थानिवत्त्वनिषेधात् "लोपो व्योर्वलि" इति यकारलोपः ॥ । स पूषा त्वा त्वाम् एतेभ्यः पितृभ्यः । एतच्छब्देन संनिहितार्थवाचिना मृतपुरुषसंबन्धिनः पितरः परामृश्यन्ते । त्वदीयेभ्यः पितृपितामहप्रपितामहेभ्यः परि ददात् परिददातु । रक्षणार्थं दानं परिदानम् । ॥ तद्योगे चतुर्थी विभक्तिर्भवति । "अग्नये त्वा परिददामि" [कौ° ७. ७] इत्यादौ तथा दर्शनात् । परिपूर्वाद् ददातेर्लेटि आडागमः । "इतश्च लोपः°" इति इकारलोपः ॥ । तथा अग्निर्देवः दहनसंस्कारेण त्वा सुविदत्रियेभ्यः । सुविदत्रं शोभनविज्ञानम् यद्वा सुखेन लब्धव्यं धनं सु-

१ A K[m] °पितृभ्यो अग्नि°. C °पितृभ्यो अग्नि° ( for °पितृभ्योऽग्नि° ? ). We with B R V Dc. २ Cp प्रऽविद्वान् ।. P P[2] प्र । विद्वान् ।.

1 S′ लोप°. 2 S′ प्रतिवस्थानि° for प्रति न स्थानि°

विदत्रम् सुष्ठु विशेषेण दानं वा । ꣸आह च यास्कः । सुविदत्रं धनं भवति विन्दतेर्वैकोपसर्गाद् ददातेर्[र्वा स्याद् द्व्युपसर्गात् । इति नि० ७. ९ ꣸ । तदर्हाः सुविदत्रियाः । तेभ्यो देवे]भ्यः परि ददातु ॥

पञ्चमी ॥

आयुर्विश्वायुः परि पातु त्वा पूषा त्वा पातु प्रपथे पुरस्तात् ।
यत्रासते सुकृतो यत्र त ईयुस्तत्र त्वा देवः सविता दधातु ॥ ५५ ॥

आयुः । विश्वऽआयुः । परि । पातु । त्वा । पूषा । त्वा । पातु । प्रऽपथे ।
पुरस्तात् ।
यत्र । आसते । सुऽकृतः । यत्र । ते[1] । ईयुः । तत्र । त्वा । देवः । सविता ।
दधातु ॥ ५५ ॥

आयुः [एतन्नामको जीवनाभिमानी देवः त्वा त्वां परि पासति*[1] परि-पातु । कीदृश आयुः । विश्वायुः सर्वजीवनवान् । तथा पूषा] जीवपोषको देवः पुरस्तात् पूर्वस्यां दिशि प्रपथे पथो गमनमार्गस्य प्रारम्भे त्वा त्वां पातु रक्षतु । यत्र यस्मिन् स्वर्गे[3] लोके सुकृतः पुण्यकृतः आसते उपविशन्ति ते सुकृतो यत्र यस्मिन् स्वर्गसंबन्धिनि देशे नाकपृष्ठाख्ये ईयुः जग्मुः तत्र देशे देवः दानादिगुणयुक्तः सविता सर्वप्रेरक एतत्संज्ञकः हे प्रेत त्वा त्वां दधातु धारयतु स्थापयतु ॥

षष्ठी ॥

इमौ युनज्मि ते वह्नी असुनीताय वोढवे ।
ताभ्यां यमस्य सादनं समितीश्चाव गच्छतात् ॥ ५६ ॥

इमौ । युनज्मि[2] । ते । वह्नी इति । असुऽनीताय । वोढवे ।
ताभ्याम् । यमस्य । सदनम् । सम्ऽइतीः । च । अव । गच्छतात्[3] ॥ ५६ ॥

हे मृतपुरुष वह्नी वोढारौ इमौ अनड्वाहौ ते तव वहनाय युनज्मि

---

१ Cp ते । २ P P[2] युनय्मि । Cp युनय्मि । ३ P[2] गछताम् ।

1 So the text in S'. All our MSS. and vaidikas read पातु. 2 S' पयोगमन°. 3 S' सर्वे.

अनसि संयोजयामि । किमर्थम् । असुनीताय[1] असवः प्राणा नीता यस्मात् सः असुनीतो गतप्राणो देहः [तस्मै] । "क्रियाग्रहणं कर्तव्यम्" इति कर्मणः संप्रदानत्वाच्चतुर्थी । त्यक्तप्राणं शरीरं वोढवे वोढुम् । यद्वा सुष्ठु नेतव्यः सुनीतः न सुनीतः असुनीतः । दुर्वह इत्यर्थः । तादृशं शवं वोढुम् । वहेः "तुमर्थे सेसेन्॰" इति तुमर्थे तवेन् प्रत्ययः । ताभ्याम् अनडुद्भ्यां यमस्य संबन्धि सदनम् गृहम् इति अनेन प्रकारेण सम् अव गच्छतात् सम्यग्जानीहि[2] ॥

सप्तमी ॥

एतत् त्वा वासः प्रथमं[1] न्वागन्नपैतदूह यदिहाबिभः पुरा ।
इष्टापूर्तमनुसंक्राम विद्वान् यत्र ते दत्तं बहुधा विबन्धुषु ॥ ५७ ॥

एतत् । त्वा । वासः । प्रथमम् । नु । आ । अगन् । अप । एतत् । ऊह । यत् । इह । अबिभः । पुरा[2] ।
इष्टापूर्तम् । अनुऽसंक्राम । विद्वान् । यत्र । ते । दत्तम् । बहुऽधा । विऽबन्धुषु ॥ ५७ ॥

एतत् इदं संनिहितं प्रथमम् मुख्यं वासस्त्वा त्वां नु अद्य आगन् आगमत् प्राप्नोत् । गमेर्लुङि "मन्त्रे घस॰" इति च्लेर्लुक् । "मो नो धातोः" इति नत्वम् । एतद् वासः अपोह परित्यज । इह अस्मिन् भूलोके पुरा पूर्वस्मिन् जीवनकाले यद् वासः अबिभः अधारयः । एतत् इति पूर्वेण संबन्धः । बिभर्तेर्लङि सिपि "भृञामित्" इति अभ्यासस्य इत्त्वम् । विद्वान् जानन् मोहरहितो भूत्वा इष्टापूर्तम् इष्टम् श्रुतिचोदितम् अग्निहोत्रदर्शपूर्णमासादि कर्म पूर्तम् स्मृत्युदितं[3] वापीकूपतटाकादिनिर्माणम् तद् उभयं स्वात्मना कृतम् अनुलक्ष्य संक्राम गच्छ संप्राप्नुहि । यत्र यस्मिन्निष्टापूर्ते क्रियमाणे बन्धुषु बान्धवज-

१ A B K[m] C प्रथम॰. Dc प्रथमं corrected to प्रथम॰. We with R V. २ P[2] पुरां ।.

1 S′ असुनीथाय for असुनीताय. Sâyaṇa's text too has असुनीथाय. 2 S′ समज्जानीहि. 3 S′ omits the anusvâra in स्मृत्युदितं.

नेषु बहुधा बहुप्रकारं ते त्वया विशेषेण[1] धनं दत्तम् दक्षिणात्वेन वितीर्णम् । अभवद् इत्यर्थः । तादृशम् इष्टापूर्तम् इति संबन्धः ॥

अष्टमी ॥

अग्नेर्वर्म परि गोभिर्व्ययस्व सं प्रोर्णुष्व मेदसा पीवसा च ।
नेत् त्वा धृष्णुर्हरसा जर्हृषाणो दधृग् विधक्षन् परीङ्खयातै ॥ ५८ ॥

अग्नेः । वर्म । परि । गोभिः । व्ययस्व । सम् । प्र । ऊर्णुष्व । मेदसा । पीवसा । च ।
न । इत् । त्वा । धृष्णुः । हरसा । जर्हृषाणः । दधृक् । विऽधक्षन् । परिऽईङ्खयातै ॥ ५८ ॥

हे प्रेत गोभिः । अवयवेषु अवयविशब्दः । अनुस्तरण्या गोः संबन्धिभिरवयवैः अग्नेः दाहकस्य वह्नेः वर्म वारकं कवचं परि व्ययस्व परितः [ संवृणु । यथाग्नेर्ज्वालाभिर्दग्धो न भवसि[2] ] तथा गोसंबन्धिभिरवयवैः संवृतो भवेत्यर्थः । ※व्येञ् संवरणे । संव्यानक्रियाफलस्य आत्मगामित्वात् "स्वरितञितः०" इति व्ययतेरात्मनेपदम्※ । उक्त एवार्थो विव्रियते । पीवसा पीवरेण स्थूलेन मेदसा मेदोधातुरूपया वपया सं प्रोर्णुष्व । यद्वा मेदसा वपया [पीवसा] अन्येन च पीवरेणाङ्गेन सं प्रोर्णुष्व हे प्रेत आत्मानं सम्यक् प्रच्छादय । प्रच्छादनाभावे भीतिं दर्शयति नेद् इति । धृष्णुः धर्षकः अभिभवनशीलो हरसा रसहरणशीलेन तेजसा जर्हृषाणः अत्यर्थं हृष्यन् दधृक् प्रगल्भः एवंगुणविशिष्टोग्निः त्वा त्वां विधक्षन् विशेषेण दग्धुम् इच्छन् परि* परितः नेत् ईङ्खयातै ईङ्खनं चलनं दाहासहिष्णुतया इतस्ततः पतनम् तन्नैव कुर्यात् । महाभीतिकरम् ईङ्खनं तव मा भूद् इत्यर्थः । ※नेत् इति निपातः प-

१ B नत्वा for नेत् त्वा. We with A C K[m] R V Dc. २ B K[m] V °धक्ष्यन्°. Dc °धक्षन्परी° changed to °धक्ष्यन्परी°. We with A C R. ३ C R °परींखयातै. We with B K[m] V. ४ Cp विऽधक्ष्यन् ।. P P[2] विऽधक्षन् ।.

1 S′ विश for विशेषेण. 2 S′ has a lacuna for some sixteen letters here.

रिभये[1] वर्तते । उक्तं हि यास्केन । अथापि नैत्येष इद् इत्येतेन संप्रयुज्यते परिभये [नि०१.१०] इति । ईङ्खतिर्गत्यर्थः । उख उखि वख वखि इत्यादिषु गत्यर्थेषु इख इखि ईखि इति पठितत्वात् । तस्मात् लेटि आडागमः । "वैतोन्यत्र" इति ऐकारः ॥

नवमी ॥

दण्डं हस्तादाददानो गतासोः सह श्रोत्रेण वर्चसा बलेन ।
अत्रैव त्वमिह वयं सुवीरा विश्वा मृधो अभिमातीर्जयेम ॥ ५९ ॥

दण्डम् । हस्तात् । आऽददानः । गतऽअसोः । सह । श्रोत्रेण । वर्चसा । बलेन । अत्र । एव । त्वम् । इह । वयम् । सुऽवीराः । विश्वाः । मृधः । अभिऽमातीः । जयेम ॥ ५९ ॥

समावर्तनप्रभृति समन्त्रकं दण्डधारणं ब्राह्मणस्य विहितम् । स दण्डः अस्मिन् काले पुत्रादिना धारणाय स्वीकार्य इति प्रतिपाद्यते । गतासोः गता असवः प्राणा यस्मात् स तथोक्तः तथाविधस्य ब्राह्मणशवस्य हस्ताद् वैणवं दण्डम् आददानः स्वीकुर्वन्नहं श्रोत्रेण शब्दश्रवणसाधनेन्द्रियजनितेन वर्चसा श्रुताध्ययनसंभूतेन तेजसा तत्कृतेन बलेन च सह । भवामीति शेषः ॥ अत्र अस्मिन् दहनदेश एव हे प्रेत त्वम् भव वर्तस्व । वयं तु इह अस्मिन् भूलोके सुशेवाः सुसुखाः सन्तः विश्वाः सर्वा मृधः संग्रामान् अभिमातीः अभिमन्यमानान् हिंसकान् शत्रून् जयेम अभिभवेम ॥

दशमी ॥

धनुर्हस्तादाददानो मृतस्य सह क्षत्रेण वर्चसा बलेन ।
समागृभाय वसु भूरि पुष्टमर्वाङ् त्वमेह्युप जीवलोकम् ॥ ६० ॥ (१२)

धनुः । हस्तात् । आऽददानः । मृतस्य । सह । क्षत्रेण । वर्चसा । बलेन ।

१ R समागृभाय. Cp सम्ऽआगृभाय।. We with A B C K^m V Cp Dc. २ K^m R त्वमेह्युपं. Dc त्वमेह्युपं corrected to त्वमेह्युप. We with A B C V Dc.

1 S' परिभवे.

सम्ऽआगृभाय । वसु । भूरि । पुष्टम् । अर्वाङ् । त्वम् । आ । इहि । उप । जीवऽलोकम् ॥ ६० ॥ (१२)

मृतस्य त्यक्तप्राणस्य क्षत्रियस्य हस्ताद् धनुश्चापम् आददानः गृह्णन्नहं क्षत्रेण[1] क्षतात् त्रायत इति क्षत्रम् क्षत्रजातेरसाधारणं तेजः तेन तेजसा [वर्चसा] पराभिभवसमर्थेन वीर्येण तत्कृतबलेन च सह युक्तो भवामि ॥ भूरि बहुलं पुष्टम् पोषकं वसु धनम् अस्मभ्यं दातुं समागृभाय सम्यग् अभिमुखं गृहाण आदत्स्व । ग्रह उपादाने । "छन्दसि शायजपि" इति हल उत्तरस्य श्नाप्रत्ययस्य शायजादेशः ॥ एवं धनं गृहीत्वा जीवलोकम् जीवानां लोकं भूलोकम् उपलक्ष्य अर्वाङ् अस्मदभिमुखः सन् त्वम् एहि आगच्छ । आगत्य अस्मभ्यम् इष्टधनादिकं प्रयच्छेत्यर्थः ॥

[इति] द्वितीयेनुवाके षष्ठं सूक्तम् ॥

अष्टादशकाण्डस्य द्वितीयोनुवाकः ॥

तृतीयेनुवाके सप्त सूक्तानि । [तत्र[2] प्रथम]सूक्तस्य आद्यया चितौ भार्यां[3] प्रेतेन सह संवेशयेत् । ऋक्पाठस्तु

[प्रथमा] ॥

इयं नारी पतिलोकं वृणाना नि पद्यत उप त्वा मर्त्य प्रेतम् ।
धर्मं पुराणमनुपालयन्ती[1] तस्यै प्रजां द्रविणं चेह धेहि ॥ १ ॥

इयम् । नारी । पतिऽलोकम् । वृणाना । नि । पद्यते । उप । त्वा । मर्त्य । प्रऽइतम् ।
धर्मम् । पुराणम् । अनुऽपालयन्ती । तस्यै । प्रऽजाम् । द्रविणम् । च । इह । धेहि ॥ १ ॥

१ See note १ on the previous page. २ A B K V °पादयंती. Dc °पादयंती, the द being changed from some other letter. We with C R. ३ B धेहि. We with A C K R V Dc. ४ P °पादयंती ।. Cp °पादयंती ।.

1 S′ क्षत्रियेण. 2 S′ has a lacuna for twelve letters in place of तत्र प्रथम°. 3 S′ भार्याः.

इयं पुरोवर्तिनी नारी स्त्री। "नृनरयोर्वृद्धिश्च" इति शार्ङ्गरवादिषु पाठात् ङीन् प्रत्ययः। "ञ्नित्यादिर्नित्यम्" इति आद्युदात्तत्वम्। पतिलोकम् पत्युर्लोकः पतिलोकः पत्या अनुष्ठितानां यागदानहोमादीनां फलभूतं[1] स्वर्गादि स्थानम् तं पतिलोकं वृणाना सहधर्मचारिणीत्वेन संभजमाना। वृङ् संभक्तौ। लटः शानच्। क्र्यादित्वात् श्ना प्रत्ययः। "चितः" इति अन्तोदात्तत्वम्। एवंभूता स्त्री हे मर्त्य मरणधर्मन् मनुष्य प्रेतम् प्रकर्षेण गतम् अस्माद् भूलोकाद् विनिर्गतं त्वा त्वाम् उप नि पद्यते समीपे नितरां गच्छति। अनुमरणार्थं प्राप्नोतीत्यर्थः। पद गतौ। दिवादित्वात् श्यन् प्रत्ययः। कस्माद्धेतोरित्याह। पुराणम् पुरातनम् अनादिशिष्टाचारसिद्धं स्मृतिपुराणादिप्रसिद्धं वा। "पुराणप्रोक्तेषु°" इत्यत्र पुराणेति निपातनात् तुडभावः। धर्मम् सुकृतम् अनुपालयन्ती। आनुपूर्व्येण संप्रदायाविच्छेदेन परिपालनम् अनुपालनम्। तत् कुर्वती। "लक्षणहेत्वोः क्रियायाः" इति हेतौ शतृप्रत्ययः। स्मृतिपुराणादिप्रसिद्धधर्मस्य अनुमरणजन्यस्य अनुपालनाद्धेतोरित्यर्थः। स्मर्यते हि।

भर्तारम् उद्धरेन्नारी प्रविष्टा सह पावकम्।
व्यालग्राही यथा सर्पं बलाद् उद्धरते बिलात्।

इति। तस्यै तथाविधायै अनुमरणं कृतवत्यै स्त्रियै इह अस्मिन् भूलोके जन्मान्तरे लोकान्तरेपि प्रजाम्। प्रजायत इति प्रजा। "उपसर्गे च संज्ञायाम्" इति जनेर्डप्रत्ययः। तां पुत्रपौत्रादिरूपां द्रविणम् धनं च धेहि प्रयच्छ। अनुमरणप्रभावाज्जन्मान्तरेपि स एव तस्याः पतिर्भवतीत्यर्थः[2]। डुधाञ् दानधारणयोः। "घ्वसोरेद्धावभ्यासलोपश्च" इति एत्वाभ्यासलोपौ॥

उपनिपद्यमाना सा यदि इह लोके पुनर्जीवितुम् इच्छेत् तदा "उदीर्ष्व" इत्यनया द्वितीययर्चा प्रेतेन सह संविष्टां ताम् अभिमन्त्र्य उत्थापयेत्॥ पाठस्तु

---

1 S′ फलभुवं for फलभूतं. 2 S′ inserts स्मर्यते हि after °भवतीत्यर्थः, but quotes no smriti. Sâyaṇa might have intended to fill in but probably never filled in the blank by a suitable quotation.

[ द्वितीया ] ॥

उदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुप शेष एहि ।
हस्तग्राभस्य दधिषोस्तवेदं पत्युर्जनित्वमभि सं बभूथ ॥ २ ॥

उत् । ईर्ष्व । नारि । अभि । जीवऽलोकम् । गतऽअसुम् । एतम् । उप । शेषे । आ । इहि ।
हस्तऽग्राभस्य । दधिषोः । तव । इदम् । पत्युः । जनिऽत्वम् । अभि । सम् । बभूथ ॥ २ ॥

हे नारि धर्मपत्नि जीवलोकम् जीवानां जीवतां प्राणधारिणां लोकः । लोक्यते अनुभूयते जन्मान्तरकृतधर्माधर्मफलं सुखदुःखात्मकम् अस्मिन्निति लोकः भूलोकः । "उभाभ्यामेव मनुष्यलोकम्" इति श्रुतेः । तथाविधं जीवलोकम् अभिलक्ष्य उदीर्ष्व उद्गच्छ । पत्युः सकाशाद् उत्तिष्ठ । ईर गतौ कम्पने च । "अदिप्रभृतिभ्यः शपः" इति शपो लुक् । गतासुम् गता असवः प्राणा यस्मात् स तथोक्तः तथाविधम् एतं पतिम् उप शेषे उपेत्य तेन सार्धं शयनं करोषि[1] । शीङ्[1] स्वप्ने । अदादित्वात् शपो लुक् । अयम् अर्थः । पूर्वम् अदृष्टार्थम् अनुगमनम् उक्तम् । इदानीं शास्त्राविरोधिदृष्टफलानुरोधेन तत उत्थानं प्रतिपाद्यते । दृष्टफलाभावप्रतिपत्त्यर्थं गतासुम् इति विशेषणम् । [2]उपशयने दृष्टप्रयोजनं नास्तीत्यतः एहि पत्युः सकाशाद् आगच्छ ॥ जीवनावस्थायामेव पतिसकाशात् सर्वम् ऐहिकं पुत्रादिलक्षणम् अभिप्राप्तम् अतोपि हेतोरागच्छेति प्रतिपाद्यते हस्तग्राभस्येति । हस्तं गृह्णातीति हस्तग्राभः पाणिग्रहणकर्ता [तस्य] । ग्रह उपादाने इत्यस्मात् "कर्मण्यण्" इति अण् प्रत्ययः । "हृग्रहोर्भश्छन्दसि" इति भत्वम् । दधिषोः धारयितुः तव पत्युः इदं जनित्वम् अपत्यादि-

१ V $K^m$ दिधिषो°. Dc दधिषो° changed to दिधिषो°. P $\mathring{P}$ दिधिषोः ।. Cr दिधिषोः ।. We with C R.

1 S′ has a lacuna of four letters in place of करोषि । शी°. 2 S′ has a lacuna for about fifteen letters before उपशमने.

रूपेण जन्मत्वम् अभि सं बभूय अभिसंप्राप्तासि । "बभूयाततन्थ जगृभ्म ववर्थेति निगमे" इति इडभावो निपात्यते ॥

"अपश्यं युवतिम्" इति द्वाभ्याम् ऋग्भ्यां चितौ पार्श्वतः परिणीयमानां गाम् अनुमन्त्रयते । तत्र आद्या

सूक्ते तृतीया ॥

अपश्यं युवतिं नीयमानां जीवां मृतेभ्यः परिणीयमानाम् ।
अन्धेन यत् तमसा प्रावृतासीत् प्राक्तो अपाचीमनयं तदेनाम् ॥ ३ ॥

अपश्यम् । युवतिम् । नीयमानाम् । जीवाम् । मृतेभ्यः । परिऽनीयमानाम् ।
अन्धेन । यत् । तमसा । प्रावृता । आसीत् । प्राक्तः । अपाचीम् । अनयम् ।
तत् । एनाम् ॥ ३ ॥

युवतिम् यौवनावस्थोपेतां नीयमानाम् शवसमीपं प्राप्यमाणां जीवाम् जीवन्तीं मृतेभ्यः । तादर्थ्ये चतुर्थी । त्यक्तप्राणेभ्यः पुरुषेभ्यः मृतपुरुषार्थं परिणीयमानाम् दारुचित्यग्न्यादिसहितं शवं परितः प्रसव्यं नीयमानां गाम् अनुस्तरण्याख्याम् अपश्यम् पश्यामि अवलोकयामि । "छन्दसि लुङ्लङ्लिटः" इति वर्तमाने लङ् । जीवदवस्थापन्नाया युवतेर्गोः शवपरिणयनम् अयुक्तम् इति जानामीत्यभिप्रायः । अनुस्तरणी सा गौः यत् यस्माद् अन्धेन दृष्ट्युपघातकेन[1] गाढेन तमसा तमिस्रेण अज्ञानलक्षणेन प्रावृता प्रकर्षेण वेष्टिता आसीत् । हिताहितविभागं स्वयं न[2] जानातीत्यर्थः । तत् तस्माद्धेतोः एनां गां प्राक्तः पूर्वदेशात् शवसमीपाद् अपाचीम् अपाङ्मुखीं शवात् पराङ्मुखीम् अस्मदभिमुखीम् अनयम् प्रापयामि । पूर्ववत् लङ् ॥

चतुर्थी ॥

प्रजानत्यघ्न्ये जीवलोकं देवानां पन्थामनुसंचरन्ती ।

---

१ P P̊ R जीवामृतेभ्यः. We with C K̊ V Dc. २ Cp. युवतीम् ।. ३ P P̊ जीवाम् । ऋतेभ्यः ।. ४ K̊ प्रज्ञानत्यघ्न्ये. We with A B C R V Dc.

1 S′ °घातेन for °घातकेन. 2 S′ य for न.

अयं ते गोपतिस्तं जुषस्व स्वर्गं लोकमधि रोहयैनम् ॥ ४ ॥

प्रऽजानती । अघ्न्ये । जीवऽलोकम् । देवानाम् । पन्थाम् । अनुऽसंचरन्ती । अयम् । ते । गोऽपतिः । तम् । जुषस्व । स्वःऽगम् । लोकम् । अधि । रोहय । एनम् ॥ ४ ॥

हे अघ्न्ये । गोनामैतत् । अहन्तव्ये हे गौः जीवलोकम् जीवानां लोको जीवलोकः भूलोकः । तं प्रजानती प्रकर्षेण जानाना । ज्ञा अवबोधने इत्यस्मात् लटः शत्रादेशः । "ज्ञाजनोर्जा" इति जादेशः । "श्नाभ्यस्तयोरातः" इति आल्लोपः । "उगितश्च" इति ङीप् । "शतुरनुमः°" इति नद्या उदात्तत्वम् । तथा देवानाम् इन्द्रादीनां पन्थाम् पन्थानं मार्गं यज्ञलक्षणम् अनुसंचरन्ती अनुलक्ष्य गच्छन्ती क्षीरदध्यादिहविर्निष्पादयन्ती । त्वम् आगच्छेति शेषः । ते तव अयं गोपतिः गोस्वामी । तं जुषस्व सेवस्व । एनं मृतं पुरुषं स्वर्गं लोकम् अधि रोहय प्रापय ॥

पितृमेधे चतुर्थेऽहनि[1] संचयनाख्ये कर्मणि "उप द्यामुप वेतसम्" इति पञ्चमीषष्ठीभ्यां मन्त्रोक्ता[2] ओषधीरभिमन्त्र्य ताभिः क्षीरेण ब्राह्मणस्य अस्थीनि अवसिञ्चेत्[3] । तांश्च[4] ओषधयः वेतसाश्च कर्णी [च] नदीफेनं च अवका च गर्हका च बृहद्दूर्वा च मण्डूकपर्णी चेत्येवमाद्याः[5] ॥

पञ्चमी ॥

उप द्यामुप वेतसमवत्तरो नदीनाम् ।
अग्ने पित्तमपामसि ॥ ५ ॥

---

१ $\overset{m}{K}$ R वेतस॒°. We with C V. Dc वेतस॒° changed to वेत॒स°. २ B $\overset{m}{K}$ V Dc पित्त॒म्°. We with A C R.

---

1 S′ चतुर्थ्यें इति for चतुर्थेऽहनि. 2 So Kes′ava too: उपद्यामुप वेतसमिति द्वे शं ते नीहार इत्येका । एताभिर्ऋग्भिर्मन्त्रोक्तानाम् ओषधीनाम् उदकं क्षीरं चैकत्र कृत्वा अभिमन्त्र्य ब्राह्मणस्यास्थीनि निषिञ्चति । मन्त्रोक्ता ओषधय उच्यन्ते । वेतसश्च कर्णश्च नदीफेनश्च अवका च गरुहेरुका च बृहद्दूर्वा च आकाशफेनश्च मण्डूकपर्णी च श्वक्तिका च । एता मन्त्रोक्ता ओषधयः ॥ (XI-3). 3 After this S′ has a lacuna for about sixteen letters and omits the text of the next (fifth) verse giving merely the commentary. 4 S′ omits चे°. 5 This portion is in S′ mixed up with the commentary on verse 5.

उप । द्याम् । उप । वेतसम् । अवत्ऽतरः । नदीनाम् ।
अग्ने । पित्तम् । अपाम् । असि ॥ ५ ॥

नदीनाम् नदनशीलानाम् अपाम् । नदनान्नद्य इति यास्कः [नि॰ २.२४] । मन्त्रवर्णश्च भवति । "अहावनदता हते । तस्मादा नद्यो नाम स्थ" इति [३.१३.१] । पचादिषु नदट् इति पाठात् "टिड्ढाणञ्॰" इत्यादिना ङीप् । नदनशीलानाम् अपां संबन्धिनीं द्याम् उप । [अत्र द्योशब्दः अवकावाची] । जलस्योपरि प्ररूढा भूसंस्पर्शरहिता अवका उच्यन्ते । तत्समीपे । तथा वेतसम् उप । वेतसो नदीतीरगतो वृक्षविशेषः । तस्य समीपे । यद्वा सप्तम्यर्थप्रतिपादकावुपशब्दौ । अवकासु वेतसे चेत्यर्थः । अवत्तरः अतिशयेन अवन् रक्षणसमर्थः सारभूतांशो विद्यते । वेतसस्य च अवकानां च अप्सारत्वं तैत्तिरीये समाम्नायते । "अपां वा एतत् पुष्पं यद् वेतसः । अपां शरोऽवका । वेतसशाखया चावकाभिश्च विकर्षति" इति [तै॰सं॰ ५.४.४.२] । हे अग्ने त्वमपि अपां पित्तम् अप्संबन्धी पित्तधातुरसि । "शुचिरप्पित्तम् और्वस्तु" इति अभिधानकारः । यतस्त्वम् अपां संबन्ध्यसि अतस्त्वाम् अप्संबन्धिनीभिः अवकावेतसशाखानदीफेनबृहद्दूर्वाद्योषधीभिः शमयामीति शेषः । ओषधयः केशवेन पद्धतिकारेण परिगणिताः । वेतसाश्च कर्णौ[३] [च] नदीफेनं चावका च बर्हिका[४] च बृहद्दूर्वा च मण्डूकपर्णी चेति । अवत्तर इति । अव रक्षणे इत्यस्मात् लटः शत्रादेशः । ततः प्रकर्षार्थे तरप् ॥

षष्ठी ॥

यं त्वमग्ने समदहस्तमु निर्वापया पुनः ।

१ Cp वेतसम् ।. २ Cp अवऽत्तरः ।. ३ Cp पित्वम् ।. P[2] पित्वम् ।. P पित्तम् ।.

1 In S' the words from ताश्च to मण्डूकपर्णीत्येवमाद्याः in the introductory paragraph of the comment on this verse are found in place of the words [अत्र द्योशब्दः अवकावाची] which we have restored from guess. 2 S' om. ओषध॰. 3 S' कर्नौ. Kes'ava कर्णश्च. 4 Kes'ava गरुहेरुका.

क्याम्बूरत्र रोहतु शाण्डदूर्वा व्यल्कशा ॥ ६ ॥

यम् । त्वम् । अग्ने । सम्ऽअदहः । तम् । ऊं इति । निः । वापय । पुनः ।
क्याम्बूः । अत्र । रोहतु । शाण्डऽदूर्वा । विऽअल्कशा ॥ ६ ॥

हे अग्ने त्वं यं पुरुषं समदहः सम्यग् दग्धवान् असि तमु तं खलु त्वं पुनर्निर्वापय निर्वृतं सुखितं कुरु । दाहजनितौष्ण्यपरिहारेणेत्यर्थः । एतदर्थमेव हि पूर्वम् अपां पित्तम् असीति अग्नेरप्कार्यत्वम् उक्तम् । ♒ निरुपसृष्टाद् "वा गतिगन्धनयोः" इत्यस्मात् णिचि "०आतां पुङ्गौ" इति पुगागमः ♒ । दाहनिर्वापणस्य परां काष्ठाम् आह क्याम्बूरित्युत्तरार्धेन । अत्र अस्मिन् दहनप्रदेशे क्याम्बूः ओषधिविशेषः रोहतु प्ररोहतु उत्पद्यताम् । तथा शाण्डदूर्वा जलसमीपे उत्पद्यमाना अण्डाकृतिमूलसहिता दीर्घकाण्डा वा दूर्वा शाण्डदूर्वा सा बृहद्दूर्वेत्युच्यते । सा व्यल्कशा अल्काः शाखाः । ♒ शो[2] मत्वर्थीयः ♒ । विविधशाखोपेता । रोहत्विति संबन्धः ॥

"इदं त एकम्" इत्यनया सप्तम्या आहिताग्नेः प्रेतस्याग्रे अग्नित्रयं धारयित्वा अनुमन्त्रयते ॥ तत्पाठस्तु

[ सप्तमी ] ॥

इदं त एकं पर ऊं त एकं तृतीयेन ज्योतिषा सं विशस्व ।
संवेशने तन्वा३ चारुरेधि प्रियो देवानां परमे सधस्थे ॥ ७ ॥

इदम् । ते । एकम् । परः । ऊं इति । ते । एकम् । तृतीयेन । ज्योतिषा ।
सम् । विशस्व ।
सम्ऽवेशने । तन्वा । चारुः । एधि । प्रियः । देवानाम् । परमे । सधऽस्थे ॥ ७ ॥

१ BKV व्यल्कशा. Dc व्यल्कशा. Cp विऽअल्कशा ।. We with AK^m CR. २ BC संवेशने. Cp सम्ऽवेशते ।. PP^2 सम्ऽवेशने ।. We with AK^m RVDc. ३ KK^m V तन्व१श्चा°. Dc तन्वा३चारु° changed to तन्व१श्चारु°. We with ABCR.

1 S' परिहारेत्यर्थः. 2 S' शो.

हे प्रेत ते तव परलोकगमनाय इदम् एकम् गार्हपत्याख्यं ज्योतिः। तथा परः परस्तात् ते तव। उशब्दः अप्यर्थे। अन्वाहार्यपचनाख्यमपि एकं ज्योतिः। तृतीयेन त्रित्वसंख्यापूरकेण ज्योतिषा आहवनीयाख्येन सं विशस्व [1]संगतो भव। साकल्येन आत्मानम् आहवनीयं गमयेत्यर्थः। इत्थम् अग्निसंवेशने सति तन्वा संस्कारजनितेन देवशरीरेण चारुः शोभनः एधि भव। ॥अस भुवीत्यस्माल्लोटि "घ्वसोरेद्धा[वभ्यासलोपश्च" इति अ]कारस्य एत्वम्। तस्य "असिद्धवद् अत्रा भात्" इति असिद्धत्वात् "हुझल्भ्यः°" इति हेर्धित्वम्॥। ततः परमे उत्कृष्टे सधस्थे सहस्थाने देवलोके देवानाम् इन्द्रादीनां प्रियः प्रीतिविषयो भव। ॥सह तिष्ठन्ति अस्मिन्निति सधस्थः। "घञर्थे कविधानम्" इति अधिकरणे तिष्ठतेः कप्रत्ययः। "सध मादस्थयोश्छन्दसि" इति सहस्य सधादेशः॥। यद्वा [2]अग्निसंस्कारजनितदेवशरीरेण चारुर्भूत्वा देवलोके देवानां प्रिय एधीत्येक[3]वाक्यता॥

"उत्तिष्ठ प्रेहि" इत्यष्टम्या "प्र च्यवस्व" इति नवम्या च दहनप्रदेशं नेतुं प्रेतम् उत्थापयेत्॥

तत्र अष्टमी॥

उत्तिष्ठ प्रेहि प्र द्रवौकः कृणुष्व सलिले सधस्थे।
तत्र त्वं पितृभिः संविदानः सं सोमेन मदस्व सं स्वधाभिः॥ ८॥

उत्। तिष्ठ। प्र। इहि। प्र। द्रव। ओकः। कृणुष्व। सलिले। सधऽस्थे। तत्र। त्वम्। पितृऽभिः। सम्ऽविदानः। सम्। सोमेन। मदस्व। सम्। स्वधाभिः॥ ८॥

हे प्रेत त्वम् उत्तिष्ठ अस्मात् स्थानाद् ऊर्ध्वं तिष्ठ। ॥"उदोनूर्ध्वकर्मणि" इति पर्युदासात् तिष्ठतेरात्मनेपदाभावः॥। उत्थानानन्तरं प्रेहि प्रगच्छ। ततः प्र द्रव प्रकर्षेण धाव। शीघ्रं गच्छेत्यर्थः। सलिले। अन्तरिक्षनामैतत्। अन्तरिक्षे सधस्थे सहस्थाने अलौकिके ओ-

1 S′ has a blank space for some eight letters before संगतो. 2 S′ inserts a दे before अग्नि°. 3 S′ °वावद्धता for °वाक्यता.

कः गृहं कृणुष्व कुरु । ⌛कृवि हिंसाकरणयोश्च । “धिन्विकृण्व्योर च” इति उप्रत्ययः⌛ । तत्र तस्मिन् लोके त्वं पितृभिः बर्हिषद्ग्निष्वात्ताख्याभिः पितृदेवताभिः संविदानः संजानानः ऐकमत्यं[1] गतः सन् सोमेन सं मदस्व । ⌛मद तृप्तियोगे⌛ । सोमपानेन तृप्तो भवेत्यर्थः । सोमयागेषु हि नाराशंसाख्यः सोमरसस्य भागः पितृणाम् अस्ति । तदुपभोगेन आत्मानं हर्षयेति भावः । यद्वा सोमेन राज्ञा पितृणाम् अधिपतिना सह मदस्वेत्यर्थः । तथा स्वधाभिः स्वधाकारसहितैः श्राद्धैः पुत्रादिभिः कृतैः सं मदस्व । ⌛संविदान इति । विद ज्ञाने । “समो गम्यृच्छि°” इत्यादिना आत्मनेपदम्⌛ ॥

“प्र च्यवस्व” इत्यनया प्रेतस्य गात्राणि इतस्ततश्च व्याकुलीकुर्यात् ॥ तत्पाठस्तु

[नवमी] ॥

प्र च्यवस्व तन्वं१ सं भरस्व मा ते गात्रा वि हायि मो शरीरम् ।
मनो निविष्टमनुसंविशस्व यत्र भूमेर्जुषसे तत्र गच्छ ॥ ९ ॥

प्र । च्यवस्व । तन्वम् । सम् । भरस्व । मा । ते । गात्रा । वि । हायि । मो इति । शरीरम् ।

मनः । निऽविष्टम् । अनुऽसंविशस्व । यत्र । भूमेः । जुषसे । तत्र । गच्छ ॥ ९ ॥

हे प्रेत त्वं प्र च्यवस्व अस्मात् स्थानात् प्रच्युतो भव । तदर्थं तन्वम् शरीरं हस्तपादादिसहितं[2] सं भरस्व संभृतम् एकीभूतं कुरु । ते तव गात्रा गात्राणि हस्तपादादीनि मा वि हायि परित्यक्तानि मा भूवन् । तथा शरीरम् अवयविभूतो मध्यदेहश्च मो मैव त्याक्षीः । यत्र यस्मिन् स्थाने त्वदीयं मनो निविष्टम् अवस्थितं मनसो विषयभूतं तत् स्वर्गादिलक्षणम् अनुसंविशस्व संप्रविष्टो भव । तथा यत्र यस्यां भूमौ भूप्रदेशे जुषसे प्रीयसे । ⌛जुषी प्रीतिसेवनयोः⌛ । तत्र गच्छ । तं भूप्रदेशं प्राप्नुहीत्यर्थः ॥

---

१ P P[2] भूमे ।. Cp भूमेः ।.

---

1 S' एकमत्यं. 2 S' °पाण्यादि°.

पिण्डपितृयज्ञे "वर्चसा माम्" इति दशम्या उत्तरसूक्तस्य आद्यया च आचामेत् । "वर्चसा माम् इत्याचामति" इति हि सूत्रितम् [कौ° ११.२] ॥

दशमी ॥

वर्चसा मां पितरः सोम्यासो अञ्जन्तु देवा मधुना घृतेन ।
चक्षुषे मा प्रतरं तारयन्तो जरसे मा जरदष्टिं वर्धन्तु ॥ १० ॥ (१३)

वर्चसा । माम् । पितरः । सोम्यासः । अञ्जन्तु । देवाः । मधुना । घृतेन ।
चक्षुषे । मा । प्रऽतरम् । तारयन्तः । जरसे । मा । जरत्ऽअष्टिम् । वर्धन्तु ॥ १० ॥ (१३)

पितरः पितृदेवताः सोम्यासः सोम्याः सोमार्हाः । "सोमम् अर्हति यः" इति सोमशब्दाद् अर्हार्थे यप्रत्ययः । "आज्जसेरसुक्" । तथाविधाः पितरो मां यजमानं वर्चसा तेजसा अञ्जन्तु अक्तं संश्लिष्टं कुर्वन्तु । तथा देवाः विश्वे देवा मधुना माधुर्योपेतेन घृतेन दीप्तिकरेण आज्येन माम् अञ्जन्तु । अपि च चक्षुषे दर्शनाय मा मां प्रतरम् प्रकृष्टतरं तारयन्तः प्लावयन्तः । दीर्घकालदर्शनार्थं रोगादिभ्यो मां व्यावर्तयन्त इत्यर्थः । तथा जरसे जरायै मा मां जरदष्टिम् जरती जीर्णा अष्टिः अशनं यस्य । जॄष् वयोहानौ । "जीर्यतेरतृन्" इति भूतेर्थे अतृन् प्रत्ययः । "जराया जरस् अन्यतरस्याम्" इति जराशब्दस्य जरस् आदेशः । तादर्थ्ये चतुर्थी । जरार्थम् यावता कालेन जरा भवति तावत्कालपर्यन्तं मां जरदष्टिं कृत्वा वर्धन्तु वर्धयन्तु ॥

[इति] अष्टादशकाण्डस्य तृतीयेनुवाके प्रथमं सूक्तम् ॥

"वर्चसा माम्" इति आद्याया ऋचः पूर्वया ऋचा सह उक्तो विनियोगः । तत्पाठस्तु

[प्रथमा] ॥

वर्चसा मां समनक्त्वग्निर्मेधां मे विष्णुर्न्यनक्त्वासन् ।

---

१ R अजंतु. PP[2] अजंतु ।. Cp अजंतु ।.

रयिं मे विश्वे नि यच्छन्तु देवाः स्योना मापः पवनैः पुनन्तु ॥ ११ ॥

वर्चसा । माम् । सम् । अनक्तु । अग्निः । मेधाम् । मे । विष्णुः । नि । अनक्तु । आसन् ।

रयिम् । मे । विश्वे । नि । यच्छन्तु । देवाः । स्योनाः । मा । आपः । पवनैः । पुनन्तु ॥ ११ ॥

अग्निः अङ्गनादिगुणयुक्तो देवः मा मां वर्चसा तेजसा समनक्तु संयोजयतु । अञ्जू व्यक्तिम्लक्षणगतिषु । रुधादित्वात् श्नम् । "श्नान्नलोपः" इति नलोपः ॥ तथा विष्णुः मे मम आसन् आसनि आस्ये मुखे मेधां नि अनक्तु नितरां संयोजयतु । "पद्दन्°" इत्यादिना आस्यशब्दस्य आसन् आदेशः । "सुपां सुलुक्°" इति सप्तम्या लुक् ॥ तथा विश्वे देवाः स्योनाम्* सुखकरीं रयिम् धनं मे मह्यं नि यच्छन्तु नियतां कुर्वन्तु । यम उपरमे । "इषुगमियमां छः" इति छत्वम् । यद्वा नियमेन ददतु । दाण् दाने इत्यस्य "पाघ्रा°" इत्यादिना यच्छादेशः ॥ तथा आपः उदकानि पवनैः शोधनसाधनैः स्वांशैः [मा] मां पुनन्तु पूतं शुद्धं कुर्वन्तु ॥

"मित्रावरुणा परि माम्" इति द्वितीयया ऋचा पिण्डपितृयज्ञे पाणी कर्ता प्रक्षालयेत् । तत्पाठस्तु

[द्वितीया] ॥

मित्रावरुणा परि मामधातामादित्या मा स्वरवो वर्धयन्तु ।
वर्चो म इन्द्रो न्यनक्तु हस्तयोर्जरदष्टिं मा सविता कृणोतु ॥ १२ ॥

मित्रावरुणा । परि । माम् । अधाताम् । आदित्याः । मा । स्वरवः । वर्धयन्तु ।

वर्चः । मे । इन्द्रः । नि । अनक्तु । हस्तयोः । जरत्ऽअष्टिम् । मा । सविता । कृणोतु ॥ १२ ॥

१ Cp स्योना ।. २ B C K[m] R मित्रावरुणा. Dc मित्रावरुणा corrected to मित्रावरुणा. We with **A K V Dc**.

मित्रावरुणा मित्रश्च वरुणश्च मित्रावरुणौ । "देवताद्वन्द्वे च" इति पूर्वपदस्य आनङ् आदेशः । "सुपां सुलुक्°" इति पूर्वसवर्णदीर्घः । अहरभिमानी देवो मित्रः । वरुणो रात्र्यभिमानी । तावुभौ मां पर्यधाताम् परितो धारयताम् । यद्वा वस्त्रादिना परिहितं कुरुताम् ॥ तथा आदित्याः अदितेः पुत्रा अन्ये देवाः स्वरवः । स्वृ शब्दोपतापयोः । शृस्वृस्निहीत्यादिना [उ° १. १०] उप्रत्ययः । स्वरवः शोभनशब्दं कुर्वाणाः यद्वा अस्मच्छत्रुविषयम् उपतापं कुर्वन्तो मा मां वर्धयन्तु ॥ अपि च इन्द्रो देवः मे मम हस्तयोर्वर्चः बलं नि अनक्तु नियोजयतु । बाहुजातत्वाद् इन्द्रस्य बाहुबलं त[1]त्प्रसादाल्लभ्यम् इत्यभिप्रायः ॥ सविता सर्वस्य प्रसविता देवो मा मां जरदष्टिम् जीर्यदवस्थभोजनं दीर्घायुषं कृणोतु करोतु ॥

तृतीया ॥

यो मुमार प्रथमो मर्त्यानां यः प्रेयाय प्रथमो लोकमेतम् ।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा सपर्यत ॥ १३ ॥

यः । ममार । प्रथमः । मर्त्यानाम् । यः । प्रऽई[1]याय । प्रथमः । लोकम् । एतम् ।
वैवस्वतम् । समऽगमनम् । जनानाम् । यमम् । राजानम् । हविषा । सपर्यत ॥ १३ ॥

यो यमो राजा मर्त्यानाम् मरणधर्मणां मनुष्याणां मध्ये स्वयमपि एकः सन् प्रथमः प्रथमभूतो ममार [मरणं प्राप्तवान् । मृङ् प्राण]त्यागे । "म्रियतेर्लुङ्लिङोश्च" इति नियमात् लिटः परस्मैपदम् । एतं लोकं यो यमो राजा प्रथमः प्रथमभूतः प्रेयाय प्रगतवान् । प्रथमं मरणम् पश्चात् लोकान्तरप्राप्तिः इत्युभयं यमोपज्ञम् आसीद् इत्यर्थः । अत एव यमस्य मनुष्यवत् कामयितृत्वादिकं यागाद्

१ P P[2] °ईयाय ।. Cp °इयाय.

1 S' त्वत्प्रसादा°.

राज्यप्राप्तिश्च आम्नायते । "यमो वा अकामयत पितृणां राज्यम् अभिजयेयम्[1] इति । स एतं यमायापभरणीभ्यश्चरुं निरवपत्" इति [तै॰ ब्रा॰ ३. १. ५. १४] । इत्थं यः यमो राजा मरणपूर्वकं प्रथमं प्रेयाय अस्माल्लोकात् प्रगतो बभूव तं वैवस्वतम् विवस्वान् आदित्यः तस्य पुत्रं जनानाम् जनिमतां प्राणिनां संगमनम् संगच्छन्ते अस्मिन्निति संगमनः । ♊अधिकरणे ल्युट्♊ । जनिमद्भिः सर्वैः प्राणिभिः संप्राप्यम् इत्यर्थः । एवंगुणविशिष्टं यमं राजानम् ईश्वरम् । प्राणिकृतसुकृतदुष्कृतानुरूपेण शिक्षाकरम् इति यावत् । हविषा आज्यपुरोडाशादिना सपर्यत पूजयत । हे ऋत्विज इति शेषः । ♊सपर पूजायाम् । "कण्ड्वादिभ्यो यक्" इति यक् प्रत्ययः♊ ॥ अथ वा प्रथमः प्रथमभावी कल्पादौ वर्तमानो यो जनः प्राणी ममार यश्च जनः प्रथमः कल्पादौ वर्तमानः एतं लोकं यमस्य स्वभूतं प्रेयाय प्रगतवान् । तदाप्रभृति वर्तमानानां सर्वेषां जनानां संगमनम् संप्राप्यं राजानम् इत्यादि पूर्ववत् ॥

पिण्डपितृयज्ञे "परा यात" इति चतुर्थ्या ऋचा पितॄन् विसर्जयेत् । तत्पाठस्तु

[चतुर्थी] ॥

परा यात पितर आ च यातायं वो यज्ञो मधुना समक्तः ।
दत्तो अस्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं दधात ॥ १४ ॥

परा । यात । पितरः । आ । च । यात । अयम् । वः । यज्ञः । मधुना । सम्ऽअक्तः ।
दत्तो इति । अस्मभ्यम् । द्रविणा । इह । भद्रम् । रयिम् । च । नः । सर्वऽवीरम् । दधात ॥ १४ ॥

हे पितरः पितृदेवताः अस्माभिः कृतेन पितृयज्ञरूपेण कर्मणा संतुष्टाः सन्तः परा यात परागच्छत । पराङ्मुखाः स्वस्थानं गच्छतेत्यर्थः ।

1 S' °अभिजयेदिति.

पुनर्यागार्थम् अस्माभिराहूताः सन्तः आ यात च आगच्छत च ॥ इदानीं परागमने कारणम् आह । वः युष्मभ्यं मधुना मधुरेण आज्येन । "एतद् वै मधु दैव्यं यद् आज्यम्" इति हि ऐतरेयकम् [ऐ॰ ब्रा॰ २.२] । समक्तः सम्यक् संसिक्तः अयं यज्ञः अस्माभिर्दत्तः ॥ तं स्वीकृत्य अस्मभ्यम् अस्मदर्थं भद्रम् कल्याणं द्रविणा द्रविणं धनम् इह अस्मिन् गृहे दधात धारयत ॥ तथा सर्ववीरम् वीर्याज्जायन्त इति वीराः पुत्रपौत्रादिरूपाः प्रजास्तैः सर्वैरुपेतं रयिम् प्रजापश्वादिरूपं धनं नः अस्माकं दधात धारयत । ऽ"तप्तनप्तनथनाश्च" इति तस्य तबादेशः । पित्त्वेन ङित्त्वाभावाद् आल्लोपाभावःऽ ॥

पञ्चमी ॥

कण्वः कक्षीवान् पुरुमीढो अगस्त्यः श्यावाश्वः सोभर्यर्चनानाः ।
विश्वामित्रोयं जमदग्निरत्रिरवन्तु नः कश्यपो वामदेवः ॥ १५ ॥

कण्वः । कक्षीवान् । पुरुऽमीढः । अगस्त्यः । श्यावऽअश्वः । सोभरी । अर्चनानाः ।
विश्वामित्रः । अयम् । जमत्ऽअग्निः । अत्रिः । अवन्तु । नः । कश्यपः । वामऽदेवः ॥ १५ ॥

कण्वादयो द्वादशसंख्याका ऋषयो नः अस्मान् अवन्तु रक्षन्तु । कणतिः शब्दार्थः । ऽअशूप्रुषिलटिकणिखटिविशिभ्यः क्वन् [उ॰ १.१४९] इति क्वन् प्रत्ययःऽ । [नित्त्वाद् आद्युदात्तः][1] कण्वशब्दः । कक्ष्या रज्जुरश्वस्य कक्षं सेवते [नि॰ २.२] इति यास्कः । तद्वान् कक्षीवान् । ऽ"आसन्दीवद् अष्ठीवच्चक्रीवत् कक्षीवत्॰" इति मतुपि निपात्यतेऽ । पुरुमीढः । ऽमिह सेचने इत्यस्मात् कर्मणि[2] निष्ठाऽ । पुरूणि मीढानि सिक्तानि अपत्यानि यस्य स तथोक्तः । यद्वा मीढम् इति धननाम । पुरूणि मीढानि धनानि यस्य स तथोक्तः । बहुधन इत्यर्थः । अगस्त्यः प्रसिद्धः । श्यावाश्वः श्यावाः कृष्णवर्णा

1 S′ has a lacuna for about ten letters, after which it reads यान्तः कण्वशब्दः.
2 S′ om. ॰णि निष्ठा । पुरूणि मीढानि.

अश्वा यस्य स तथोक्तः । सोभरी प्रसिद्धः । अर्चनानाः अर्चनम् अर्चनीयम् अनः शकटं यस्य स तथोक्तः । संज्ञाशब्दोयम् । स च अत्रीणां प्रवरमध्ये पठ्यते । “आत्रेयार्चनानसश्यावाश्वेति । श्यावाश्ववद् अर्चनानसवद् [अत्रिवत्]” इति । विश्वामित्रः । विश्वं सर्वं जगत् मित्रं यस्य स तथा । “मित्रे चर्षौ” इति विश्वशब्दस्य दीर्घः । अयम् इति इदंशब्देन पुरोवर्तिवस्तुवाचिना सर्वजनसंनिहितत्वेन सर्वमित्रत्वम् उपपाद्यते । जमदग्निः । जमतिर्ज्वलतिकर्मा । जमन्तो ज्वलन्तः अग्नयो यस्य स तथोक्तः । अत्रिः । आध्यात्मिकाधिदैविकाधिभौतिकभेदभिन्नास्त्रिविधा दुःखानुभवा यस्य न विद्यन्ते स तथा । अत एव यास्को निरवोचत । तस्माद् अत्रिर्न त्रय इति [नि॰ ३.१७] । कश्यपः । आद्यन्तवर्णविपर्ययः । सर्वं जगत् सर्वदा सौक्ष्म्येण पश्यतीति कश्यपः । श्रूयते हि । “कश्यपः पश्यको[1] भवति यत् सर्वं परिपश्यतीति सौक्ष्म्यात्” इति [तै॰ आ॰ १.८.८] । वामदेवः । वामो वननीयो देवो द्योतकोस्ति[2] तत्त्वविषये बोधो यस्य स तथा । स खलु गर्भावस्थ एव सन् उत्पन्नतत्त्वज्ञानः स्वस्य सार्वात्म्यम् अनुसंदधौ । श्रूयते हि । “अहं मनुरभवं सूर्यश्च” इति । [ऋ॰ ४.२६.१] ॥

षष्ठी ॥

विश्वामित्र जमदग्ने वसिष्ठ भरद्वाज गोतम वामदेव ।

शर्दिर्नो[1] अत्रिरग्रभीन्नमोभिः सुसंशासः[2] पितरो मृडता नः ॥ १६ ॥

विश्वामित्र । जमत्ऽअग्ने । वसिष्ठ । भरत्ऽवाज । गोतम । वामऽदेव[3] ।

शर्दिः[4] । नः । अत्रिः । अग्रभीत् । नमःऽभिः । सुऽसंशासः । पितरः । मृडत । नः ॥ १६ ॥

१ B C V शर्दिर्नो. Dc शर्दि॰ changed to शर्दि॰. We with A K^m R. २ K^m सुसंशासः. A B R V सुसंशासः पितरो. C सुशंशासः पितरो. Dc सुसँशासः पितरो corrected to सुसँशासः पितरो. Cp सुऽसंशासः । पितरः ।. We with A B R V Cp. ३ Cp वामऽदेव ।. ४ Cp शर्दिः ।.

1 S′ पश्यकः. 2 S′ द्योतकनास्त for द्योतकोऽस्ति.

पूर्वार्धेन षट्संख्याका ऋषयः संबोध्यन्ते । तत्र वसिष्ठो वसुमत्तमः एतन्नामा ऋषिः । भरणाद् भारद्वाज इति यास्कः [नि° ३. १७] । अन्ये शब्दा उक्तार्थाः । मृडता नः इत्येतद् वक्ष्यमाणं पदद्वयम् अत्रापि संबध्यते । हे विश्वामित्रादय ऋषयः नः अस्मान् मृडत सुखयत । अत्रिः एतत्संज्ञो महर्षिर्नः अस्माकं शर्दिः छर्दिः । गृहनामैतत् । ⌛उछृदिर् दीप्तिदेवनयोः इत्यस्माद् अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः [उ° २. १०७] इति इसिप्रत्ययः । वर्णव्यत्ययः⌛ । नः अस्मदीयं गृहम् अग्रभीत् अग्रहीत् । रक्षणार्थं गृहीतवान् इत्यर्थः । ⌛ग्रह उपादाने । "हृग्रहोर्भः°" इति भत्वम्⌛ । यद्वा शर्दतिर्बलकर्मा[1] । शर्दयति[2] बलयतीति शर्दिः । एवंगुणविशिष्टः अत्रिर्नः अस्मान् अग्रहीत् आत्मीयत्वेन गृहीतवान् । अथ वा शर्दिर्नाम कश्चिद् ऋषिः । अन्यत् पूर्ववत् । तथा नमोभिः नमस्कारैः । यद्वा अन्ननामैतत् । दीयमानैरन्नैः कव्यरूपैर्हेतुभिः[3] हे पितरः पितृदेवताः यूयं सुशंसासः सुष्ठु शंसितुं स्तोतुं शक्याः । ⌛शंसु स्तुतौ इत्यस्मात् "ईषद्दुःसुषु°" इति कर्मणि खल् प्रत्ययः । "आज्जसेरसुक्"⌛ । सुष्टुताः सं[4][स्तुताः सन्तः नः मृडत अस्मान् सुखयत । ⌛मृडत । मृड] सुखने⌛ ॥

शवदहनदिवसे रात्रौ रिक्तकलशभञ्जनकर्ता[5] "कस्ये मृजानाः" इति सप्तमीम् ऋचं जपेत् । ऋक्पाठस्तु

[सप्तमी] ॥

कस्ये[1] मृजाना[1] अति यन्ति रिप्रमायुर्दधानाः प्रतरं नवीयः ।
आप्यायमानाः प्रजया धनेनाध स्याम सुरभयो गृहेषु ॥ १७ ॥

कस्ये[1] । मृजानाः[1] । अति । यन्ति । रिप्रम् । आयुः[2] । दधानाः । प्रऽतरम् । नवीयः ।

१ A B C R V have कस्ये मृजाना. Dc कस्ये मृजाना changed to कस्ये मृजाना. Cp कस्ये । मृजानाः ।. P P[2] कस्ये । मृजानाः ।. K कस्ये मृजाना. २ Cp आयुः ।.

1 S′ शर्धति°. 2 S′ शर्धयति. 3 S′ omits र्हे in °र्हेतुभिः. 4 S′ has after सं a lacuna for about sixty letters at the end of which occurs सुखयते instead of सुखने. 5 S′ रिक्तकलशभंजन ——— कर्ता. Neither *Kaus′ika* nor the *Kes′avî* throws light on the passage.

आऽप्यायमानाः । प्रऽजया । धनेन । अध । स्याम । सुरभयः । गृहेषु ॥ १७ ॥

कसः कीकसः । कीशब्दलोपश्छान्दसः । कसम् अर्हतीति कस्यो दहनदेशः तस्मिन् मृजानाः बान्धवमृतिजनितं दुःखम् उपलिपन्तः[1] । परित्यजन्त इत्यर्थः[2] । रिप्रम् । पापनामैतत् । शवसंस्पर्शजनितं पापम् । रपो रिप्रम् इति पापनामनी भवतः इति हि निरुक्तम् [नि० ४, २१] । मरणनिमित्तं पापम् अति यन्ति अतीत्य गच्छन्ति । इति प्रथमः पादः परोक्षकृतः । यद्वा पुरुषव्यत्ययः । अतीमः । अतीत्य गच्छाम इत्यर्थः । इण् गतौ । अदादित्वात् शपो लुक् । "इणो यण्" इति यण् आदेशः । यतो वयम् उक्तरीत्या दुःखम् अतिक्रान्तास्ततो हेतोः नवीयः अतिशयेन नवम् उत्कृष्टम् आयुः जीवितं प्रतरम् प्रकृष्टतरं दधानाः । दीर्घकालजीवनं धारयन्त इत्यर्थः । एवम् अनेन द्वितीयपादेन चिरकालजीवनं प्रार्थितम् ॥ जीवत एव पुरुषस्य प्रजापश्वाद्यपेक्षेति तृतीयेन पादेन प्रतिपाद्यते । प्रजया पुत्रपौत्रादिरूपया धनेन कनकरजतादिलक्षणं गवाश्वादिकं च धनम् तेन आप्यायमानाः वर्धमाना भवेम ॥ अध अथ अनन्तरं गृहेषु सुरभयः शोभनगन्धोपेताः श्लाघ्यगुणयुक्ताः स्याम भवेम ॥

पिण्डपितृयज्ञे "अञ्जते व्यञ्जते" इति ऋचा पिण्डेषु घृतेन अभिघारणं कुर्यात् । सैषा सूक्ते

अष्टमी ॥

अञ्जते व्यञ्जते समञ्जते क्रतुं रिहन्ति मधुनाभ्यञ्जते ।
सिन्धोरुच्छ्वासे पतयन्तमुक्षणं हिरण्यपावाः पशुमासु गृह्णते ॥ १८ ॥

अञ्जते । वि । अञ्जते । सम् । अञ्जते । क्रतुम् । रिहन्ति । मधुना । अभि । अञ्जते ।

---

१ P P² अधास्याम । for अध । स्याम ।.

---

1 So S′. Should not we rather read अपलिपन्तः ? 2 S′ इता for इत्यर्थः.

सिन्धोः । उत्ऽश्वासे । पतयन्तम् । उक्षणम् । हिरण्यऽपावाः । पशुम् । आसु । गृह्णते ॥ १८ ॥

पितृत्वं प्राप्ताः कर्मिणो जना धूमादिमार्गेण चन्द्रलोकं प्राप्य तत्र यागहोमादिसुकृतजनितं फलं भुञ्जत इति स सोमः अनया स्तूयते । सोमयागं [1]प्रवर्तयन्तः प्रथमम् ऋत्विजः[1] अञ्जते यजमानम् अञ्जनेन संस्कुर्वन्ति । तथा च ऐतरेयकम् । “आञ्जन्त्येनम् । तेजो वा एतद् अक्ष्योर्यद् आञ्जनम् । सतेजसमेवैनं तत् कृत्वा दीक्षयन्ति” इति [ऐ° ब्रा° १.३] । अञ्जू व्यक्तिम्लक्षणगतिषु । “श्नसोरल्लोपः” इति अकारलोपः । तस्याञ्जनस्य लौकिकाद् वैशिष्ट्यं प्रतिपाद्यते व्यञ्जत इति । विविधम् अञ्जते । लौकिकाद् अञ्जनाद् अन्येन प्रकारेण यजमानस्याक्ष्णोरञ्जनं कुर्वन्तीत्यर्थः । तत्प्रकारश्च तैत्तिरीये समाम्नायते । “दक्षिणं पूर्वम् आङ्क्ते । सव्यं हि पूर्वं मनुष्या आञ्जते” [तै° सं° ६.१.१.६] इत्यादिना । तथा समञ्जते सम्यग् अक्तं कुर्वन्ति । उक्तस्याञ्जनस्य सम्यक्त्वविशेषणप्रतिपादनाय पुनरनुवादः । तथा क्रतुं रिहन्ति । क्रतुः सोमयागसंकल्पः । तं लिहन्ति आस्वादयन्ति । लिह आस्वादने । कपिलकादित्वात् लत्वविकल्पः । सोमेन यक्ष्य इत्येवमात्मकं वचो[2] यजमानम् उच्चारयन्तीत्यर्थः । मधुना माधुर्योपेतेन नवनीतेन अभ्यञ्जते अभ्यक्तशरीरं[3] कुर्वन्ति । तथा च ऐतरेयकम् । “नवनीतेनाभ्यञ्जन्ति[4] । स्वेनैवैनं तद् भागधेयेन समर्धयन्ति” [ऐ° ब्रा° १.३] इति ॥ यद्वा अञ्जनादिसंस्कारैः सोम एव स्तूयते । [5]सोमयागे प्रवृत्ता[5] ऋत्विग्यजमानाः सोमम् अञ्जते दीक्षणीयादिषु हूयमानेनाज्येन सोममेव अञ्जन्ति । संस्कुर्वन्तीत्यर्थः ॥ तथा व्यञ्जते दण्डकृष्णाजिनादिदीक्षाव्यञ्जनद्रव्येण यजमानद्वारा तमेव सोमं संस्कुर्वन्तीत्यर्थः ॥ तथा समञ्जते सोमयागोपयुक्तं यूपं सम्यग् आमूलाग्रम् अञ्जते[6] । तेन च समञ्जनेन यूपद्वारा सोम एव संस्कृतो भवतीत्यर्थः ॥

1 S′ वर्त प्रथममृजः for प्रवर्तयन्तः प्रथमम् ऋत्विजः. 2 S′ वाचा. 3 S′ अभ्यक्तंशरीरं. 4 S′ has a blank space for about nine letters in place of °ञ्जन्ति । स्वेनैवैनं तद्. 5 S′ सोमयागप्रवृत्य. 6 S′ अञ्जति.

क्रतुं रिहन्ति । यूपवान् यागः क्रतुः । अत्र तत्साधनभूतः सोमो लक्ष्यते । क्रतुम् सोमं लिहन्ति क्रयाभिषवादिसंस्कारपूर्वकं सोमम् अग्नौ हुत्वा हुतशेषं लिहन्ति । आस्वादयन्तीत्यर्थः । मधुना माधुर्योपेतेन क्षीरादिना श्रयणद्रव्येण तं सोमम् अभ्यञ्जते अभितः अक्तं संयुक्तं संस्कृतं कुर्वन्तीत्यर्थः ॥ दिवि स्थितश्चन्द्र एव लतारूपसोमात्मना पृथिव्याम् अवस्थित इति प्रतिपादयति[1] सिन्धोरुच्छ्वास इति । सिन्धोः स्यन्दनशीलस्य समुद्रस्य [उच्छ्वासे] । उच्छ्वास उद्गमः अभिवृद्धिः । तस्मिन् समये पतयन्तम् गच्छन्तम् । उद्यन्तम् इत्यर्थः । ⌛पत गतौ । चुरादिरदन्तः । अतो लोपस्य स्थानिवत्त्वाद् उपधावृद्ध्यभावः⌛ । उक्षणम् सेक्तारम् अमृतमयैः किरणैरभिषिञ्चन्तम् । यद्वा सिन्धोः स्यन्दनशीलस्य वसतीवरीजलस्य उच्छ्वासे उद्गमे सति अभिषवकाले पतयन्तम् गच्छन्तम् । अभिषवसंस्कारेण द्रवीभवन्तम् इति यावत् । उक्षणम् सेक्तारं सर्वजगदुत्पत्तेः आहुतिद्वारा बीजभूतम् इत्यर्थः । स्मर्यते हि ।

अग्नौ प्रास्ताहुतिः[2] सम्यग् आदित्यम् उपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ।

इति [म० ३.७६] । तथा पशुम् । पश्यति सर्वं जगत् स्वकिरणैः प्रकाशयतीति पशुश्चन्द्रमाः । ⌛पशुः पश्यतेरिति यास्कः [नि० ३.१६.]⌛ । एवंगुणविशिष्टं सोमं रसात्मना अवस्थितं हिरण्यपावाः हिरण्येन पावयन्तीति हिरण्यपावाः अभिषोतार ऋत्विजः । अभिषवपावनादिषु तेषां हिरण्यपाणित्वं भगवता आपस्तम्बेनोक्तम् । "हिरण्यपाणिरभिषुणोति गृह्णाति जुहोतीत्यत्यन्तप्रदेशः" इति [आप० १२.७.१२] । आसु स्थालीषु । सोमयागे हि प्रधानभूतानाम् आग्रयणादीनां ग्रहाणां ग्रहणाय चतस्रः स्थाल्यो विहिताः[3] । तासु गृभ्णंते गृह्णते । उपलक्षणम् एतत् । स्थाल्युपलक्षितग्रहचमसपात्रेषु सोमरसग्रहणेन संस्कुर्वन्तीत्यर्थः ॥

एवं पितृदेवताभूतसोमाञ्जनलिङ्गात् पिण्डाभिघारणे विनियोग उपपन्नः ॥

---

1 S' प्रतिपादयितु. 2 S' प्रस्थाहुतिः and omits °ग् आदित्य°. 3 S' has हिताः for विहिताः and leaves a blank space for four letters after स्थाल्यो.

नवमी ॥

यद् वो मुद्रं पितरः सोम्यं च तेनो सचध्वं स्वयशसो हि भूत ।
ते अर्वाणः कवय आ शृणोत सुविदत्रा विदथे हूयमानाः ॥ १९ ॥

यत् । वः । मुद्रम् । पितरः । सोम्यम् । च । तेनो इति । सचध्वम् । स्वऽयशसः । हि । भूत ।

ते । अर्वाणः । कवयः । आ । शृणोत । सुऽविदत्राः । विदथे । हूयमानाः ॥१९॥

हे पितरः वः युष्माकं संबन्धि मुद्रम् मोदकं हर्षजनकम् । मुद हर्षे इत्यस्मात् स्फायितञ्चीत्यादिना [उ° २. १३] रक् । यद्वा मुदम् हर्षं राति ददातीति मुद्रम् । "आतोनुपसर्गे कः" इति कप्रत्ययः । प्रीतिकरं यद् धनम् सोम्यम् सोमार्हं च विद्यते तेनो [तेनैव धनेन सह यूयं] सचध्वम् अस्माभिः संगता भवत । षच समवाये । तादृग् धनम् अस्मभ्यं प्रयच्छतेत्यर्थः ॥ तत्र हेतुरुच्यते । हि यस्माद् यूयं स्वयशसः स्वायत्तयशस्का [भूत] भवथ । तस्माद् इष्टफलदानं भवतां युक्तम् इत्यर्थः ॥ ते यूयम् अर्वाणो गन्तारः कवयः क्रान्तदर्शनाः सुविदत्राः शोभनज्ञानाः शोभनधना वा विदथे यज्ञे हूयमानाः अस्माभिराहूयमाना आ शृणोत अस्मदाह्वानं शृणुत । श्रु श्रवणे । लोटि तस्य तबादेशः ॥

दशमी ॥

ये अत्रयो अङ्गिरसो नवग्वा इष्टावन्तो रातिषाचो दधानाः ।
दक्षिणावन्तः सुकृतो य उ स्थासद्यास्मिन् बर्हिषि मादयध्वम् ॥ २० ॥(१४)

ये । अत्रयः । अङ्गिरसः । नवऽग्वाः । इष्टऽवन्तः । रातिऽसाचः । दधानाः ।

---

१ C $\overset{m}{K}$ R P $\overset{2}{P}$ Dc भूतम्. We with B V. २ B C $\overset{m}{K}$ R V Dc सुविदत्रा. Cp सुऽविदत्राः ।. There is no manuscript or Vaidika authority for the necessary correction to सुविदत्रां. See Rw. ३ Cp पितरः ।. ४ Cp भूत ।. P $\overset{2}{P}$ भूतम् ।. ५ R B V अत्रयोंगि°. Dc ये अत्रयो अंगि° changed to ये अत्रयोंगि°. We with A C $\overset{m}{K}$.

1 S′ चाति. 2 S′ तनोतन and then a lacuna for some ten letters in place of तेनो [तेनैव धनेन सह यूयं].

दक्षिणाऽवन्तः । सुऽकृतः । ये । ऊं इति । स्थ । आऽसद्य । अस्मिन् । बर्हिषि । मादयध्वम् ॥ २० ॥ (१४)

ये पितरो यूयम् अत्रयः अत्रिगोत्रोत्पन्नाः । ये वा अङ्गिरसः अङ्गिरोगोत्रजाः । यद्वा अत्रिमहर्षिरूपेण अङ्गिरोरूपेणावस्थिताः । नवग्वाः अभिनवगमनाः । अथ वा अङ्गिरसो हि केचन सत्त्रयागं कुर्वाणा नवभिर्मासैः [स्वर्गं] गतास्ते नवग्वा उच्यन्ते । अपरे दशभिर्मासैर्गतास्ते दशग्वाः । तथा चाम्नायते । "नवग्वासः सुतसोमास इन्द्रं दशग्वासो अभ्यर्चन्त्यर्कैः" इति [ऋ० ५, २९, १२] । इष्टावन्तः इष्टाः दर्शपूर्णमासादियागास्तद्वन्तः इष्टावन्तः । रातिषाचः रातिर्दानम् तत् सचन्ते समवयन्तीति दक्षिणादानयुक्तक्रिया रातिषाच इत्युच्यन्ते । ता दधानाः धारयन्तः । ये च अन्ये हे पितरो यूयं दक्षिणावन्तः दक्षिणादानयुक्ताः सुकृतः पुण्यकृतः स्थ भवथ । उशब्दः अप्यर्थे । अस्मिन् बर्हिषि यज्ञे आस्तीर्णे दर्भे वा आसद्य उपविश्य ते सर्वे यूयं मादयध्वम् अस्मदीयेन हविषा तृप्ता भवत ॥

[इति] अष्टादशकाण्डे तृतीयेनुवाके द्वितीयं सूक्तम् ॥

"अधा यथा नः" इति आदितश्चतसृणाम् ऋचां प्रेतोपस्थाने विनियोग उक्तः ॥

तत्र प्रथमा ॥

अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशशानाः ।
शुचीदयन् दीध्यत उक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन् ॥ २१ ॥

अध । यथा । नः । पितरः । परासः । प्रत्नासः । अग्ने । ऋतम् । आऽशशानाः ।
शुचि । इत् । अयन् । दीध्यतः । उक्थऽशंसः । क्षाम । भिन्दन्तः । अरुणीः । अप । व्रन् ॥ २१ ॥

---

१ P °शासः ।. २ P क्षामा ।.

1 S' सत्रयोगं.

अध अथ अनन्तरम् । यद्वा अप्यर्थः अधेति निपातः । अपि च यथा येन[1] प्रकारेण नः अस्माकं पितरः पितृपितामहाः । यद्वा अस्माकं पितृभूता अङ्गिरसः परासः । परशब्दः उत्कृष्टवाची । "आज्जसेरसुक्" । परा उत्कृष्टाः प्रत्नासः पुराणाः हे अग्ने त्वत्प्रसादाद् ऋतम् यज्ञम् आशशानाः व्याप्नुवन्तः । अशू व्याप्तौ इत्यस्मात् कानचि रूपम् । एवंभूतास्ते शुचि दीप्तं स्थानं नाकपृष्ठाख्यम् अयन् अगच्छन् । इच्छब्दः अवधारणे । इण् गतौ । अस्मात् लङि पूर्वम् "इणो यण्" इति यणि कृते तस्य असिद्धवद्भावेन प्राप्तस्य आटश्छान्दसत्वाद् निवृत्तौ अडागम एव भवति । दीध्यतः दीप्यमानाः । दीधीङ् दीप्तिदेवनयोः इत्यस्मात् लट् । व्यत्ययेन शत्रादेशः । उक्थशासः । उक्थानि शस्त्राणि । तेषां शंसितारः एवंगुणविशिष्टास्ते पितरः क्षमा रात्रिः तत्संबन्धि तमः क्षाम शार्वरं तमो भिन्दन्तः स्वतेजसा निवर्तयन्तः अरुणीः[2] अरुणवर्णा उषसः उषःकालान् अप व्रन् अपावृण्वन् प्रकाशयन्[3] ॥ यद्वा पणिनामानोऽसुरा अङ्गिरसां यज्ञसाधनभूता गा अपहृत्य भूम्यां बिलं प्रावेशयन् अङ्गिरस-[4]स्त[ज्जानन्तः इन्द्रसहाया बिलं वि]वृत्य ता गा अलभन्तेत्याख्यायिका । तद् एतद् उच्यते । क्षाम क्षमां भूमिं भिन्दन्तः विदारयन्तः अरुणीः अरुणवर्णा गा अप व्रन् अपावृण्वन् बिलद्वारापवरणेन अलभन्तेत्यर्थः ॥

द्वितीया ॥

सुकर्माणः सुरुचो देवयन्तो अयो न देवा जनिमा धमन्तः ।
शुचन्तो अग्निं ववृधन्त इन्द्रमुर्वीं गव्यां परिषदं नो अक्रन् ॥ २२ ॥

सुऽकर्माणः । सुऽरुचः । देवऽयन्तः । अयः । न । देवाः । जनिम । धमन्तः । शुचन्तः । अग्निम् । ववृधन्तः । इन्द्रम् । उर्वीम् । गव्याम् । परिऽसदम् । नः । अक्रन् ॥ २२ ॥

सुकर्माणः शोभनकर्माणः सुरुचः सुदीप्तयो देवयन्तः देवान् आत्मन

1 So S′. No correlative follows. 2 S′ अरुणाः. 3 S′ प्रकाशयन्. 4 S′ अंगिरसस्तपायन् and then a lacuna for some eleven letters.

इच्छन्तः अयो न । नेति उपमार्थे । यथा अयस्कारा अयो धमन्ति धमनेन परिशुद्धं कुर्वन्ति एवं स्वकीयं जनिम जन्म धमन्तस्तपसा शोधयन्तो देवाः देवत्वं प्राप्ताः अग्निम् गार्हपत्यादिकं शुचन्तः दीपयन्तः सामिधेनीभिः प्रज्वालयन्तः इन्द्रं ववृधन्तः स्तुतिभिर्वर्धयन्तः उर्वीम् महतीं गव्याम् गवां समूहम् । "खलगोरथात्" इति समूहार्थे यप्रत्ययः । नः अस्माकं परिषदम् परितः सीदन्तीम् अक्रन् अकार्षुः । डुकृञ् करणे । "मन्त्रे घस°" इत्यादिना च्लेर्लुक् ॥

तृतीया ॥

आ यूथेव क्षुमति[1] पश्वो अख्यद् देवानां जनिमान्त्युग्रः[2] ।

मर्तासश्चिदुर्वशीरकृप्रन् वृधे चिदर्य उपरस्यायोः ॥ २३ ॥

आ । यूथाऽइंव । क्षुंऽमति । पश्वः । अख्यत्[3] । देवानाम् । जनिम । अन्ति । उग्रः ।

मर्तासः । चित् । उर्वशीः । अकृप्रन् । वृधे । चित् । अर्यः । उपरस्य । आयोः ॥ २३ ॥

उग्रः उद्गूर्णबलोयमग्निः देवानाम् यष्टव्यानाम् इन्द्रादीनां जनिम जन्म प्रादुर्भावम् अन्ति अन्तिके समीपे । "कादिलोपो बहुलम् इति वक्तव्यम्" इति अन्तिकशब्दस्य कादिलोपः । आ अख्यत् अभिपश्यति । आभिमुख्येन ज्ञातुं शक्नोतीत्यर्थः । यूथेव क्षुमति पश्व इति तत्र दृष्टान्तः । यूथा इव । सप्तम्याः पूर्वसवर्णदीर्घः । यूथे समूहे क्षुमति शब्दवति गवां संघे पश्वः पशून् आत्मीयान् गवादीन्[1] यथा

१ **ABCR** यूथेव क्षुमतिं. **K̈V** यूथेवं क्षुमतिं. **Dc** यूथेव क्षुमतिं corrected to यूथेवं क्षुमतिं which we adopt. **P** क्षुम् । अपि ।. **P̈** क्षुम् । अति ।. **Cp** क्षुम् । अतिं ।. There can be no doubt that the older *Atharva*-reading was यूथेव क्षुमतिं i. e. यूथाऽइंव । क्षुम् । अतिं ।, and that it was afterwards corrected to यूथेवं क्षुमतिं in conformity with the *Rigveda* (IV. 2. 18). २ **B** °मान्त्युग्र. **K̈CV** °मान्त्युंग्रः. **AR** °मान्त्युंग्र. **P** उग्रा ।. **Cp** उग्रः ।. **P̈** उग्रः ।. **Dc** corrects °मान्त्युंग्र to °मान्त्युग्रः. The MSS. oscillate between the उग्र of the *Rigveda* and उग्रः peculiar to the *Atharva-veda*. ३ **P̈** अक्षत् ।.

1 S′ गवादीयान्.

स्वामी पश्यति तद्वत् । अयं देवसंघे यष्टव्यान्[1] जानातीत्यर्थः ॥ यद्वा दारुकोग्निः संबोध्यः । हे अग्ने त्वया दह्यमानोऽयं यजमानस्त्वत्प्रसादाद् उग्रः उज्जूर्णबलः क्षुमति शब्दवति पशुसंघे पश्वः पशूनां यूथा यूथानीव देवानां जनिम आख्यत् अभिपश्यतीति । देवलोकं गतस्य तस्य देवा अन्तिके प्रादुर्भवन्तीत्यर्थः ॥ मर्तासश्चित् मर्त्या अपि मनुष्यजातीया अपि त्वत्प्रसादाद् उर्वशीः उर्वश्याद्या[2] अप्सरसः अकृप्रन् अकल्पयन् । उपभोक्तुं समर्था भवन्तीत्यर्थः[3] । ⌛कृपू सामर्थ्ये इत्यस्मात् लुङि च्लेः अङ् आदेशः । "बहुलं छन्दसि" इति रुडागमः⌛ । ततश्च त्वत्प्रसादाद् देवत्वं प्राप्तः अर्यः स्वामी भूत्वा उपरस्य उप्तस्य गर्भाशये निषिक्तस्य आयोः मनुष्यस्य गर्भावस्थस्य वृधे चित् वर्धनाय च । भवतीति शेषः । पितृप्रसादात् पुत्रपौत्राद्यभिवृद्धिरिति भावः ॥

चतुर्थी ॥

अकर्म ते स्वपसो अभूम ऋतमवस्रन्नुषसो विभातीः ।
विश्वं तद् भद्रं यदवन्ति देवा बृहद् वदेम विदथे सुवीराः ॥ २४ ॥

अकर्म । ते । सुऽअपसः । अभूम । ऋतम् । अवस्रन्[2] । उषसः । विऽभातीः । विश्वम् । तत् । भद्रम् । यत् । अवन्ति । देवाः । बृहत् । वदेम । विदथे । सुऽवीराः ॥ २४ ॥

हे अवस्वन्[4] अवनवन् पालक अग्ने ते तुभ्यम् अकर्म परिचरणम् अकार्ष्म । ⌛"मन्त्रे घस°" इत्यादिना च्लेर्लुक्⌛ । अतस्त्वत्प्रसादात् स्वपसः शोभनकर्माणः अभूम अस्माभिः कृतानि यागहोमदानादीनि कर्माणि शोभनानि फल[युक्तानि[5] येषां तथोक्ता अभवाम । अस्मत्कर्माणि फलयुक्तानि भवन्ति[5]]त्यर्थः ॥ तथा विभातीः विभात्यः व्युच्छन्त्य उषसश्च ऋतम् । सत्यनामैतत् । सत्यं यागदानादिकर्मफलम् । कुर्वन्तु इति शेषः ॥ यत् शास्त्रविहितं कर्म देवा अवन्ति रक्षन्ति तद् वि-

१ B K R A V Dc अभूमर्तम°. We with C. २ Cp अवस्रन् ।.

1 S' य इष्टव्यान्. 2 S' उर्वश्याःद्या for उर्वश्याद्या. 3 S' भवती°. 4 S' अवनस्वन्.
5 S' has here a lacuna for some fifteen letters.

श्वम् सर्वं भद्रम् कल्याणं भवति । वयमपि सुवीराः शोभनपुत्रादियुक्ताः सन्तो विदथे यज्ञे बृहत् महत् स्तोत्रं वदेम ब्रूयाम ॥

"इन्द्रो मा मरुत्वान्" इत्यादिभिः एकादशभिर्ऋग्भिः श्मशानचयनकर्मणि आज्यं जुहुयात् ॥

तथा "इन्द्रो मा मरुत्वान्" इत्यादिपञ्चभिर्ऋग्भिः प्रेतशरीरे अग्निदानानन्तरम् आज्येन सारस्वतहोमान् कुर्यात् ॥

पञ्चमी ॥

इन्द्रो॑ मा म॒रुत्वा॑न् प्राच्या॑ दि॒शः पा॑तु बाहु॒च्युता॑ पृथि॒वी द्यामि॑वोपरि॑ ।
लो॒क॒कृत॑ः पथि॒कृतो॑ यजामहे॒ ये दे॒वानां॑ हुतभा॑गा इ॒ह स्थ ॥ २५ ॥

इन्द्रः॑ । मा॒ । म॒रुत्वा॑न् । प्राच्याः॑ । दि॒शः । पा॒तु॒ । बा॒हु॒ऽच्युता॑ । पृथि॒वी । द्याम्ऽइ॑व । उ॒परि॑ ।
लो॒क॒ऽकृत॑ः । प॒थि॒ऽकृत॑ः । य॒जा॒म॒हे॒ । ये । दे॒वाना॑म् । हु॒तऽभा॑गाः । इ॒ह । स्थ[1] ॥ २५ ॥

मरुत्वान् मरुद्भिः एकोनपञ्चाशत्संख्याकैर्देवैः सहितः इन्द्रो मा मां संस्कर्तारं प्राच्या दिशः प्राचीदिक्संबन्धिभयहेतोः पातु रक्षतु । तत्र दृष्टान्तः । बाहुच्युता[1] बाहुभ्यो दातृसंबन्धिभ्यश्च्युता विनिर्गता । यद्वा बाहुषु प्रतिग्रहीतृसंबन्धिषु च्युता प्राप्ता । उदकपूर्वं दत्तेत्यर्थः । तादृशी दातृसात्कृता पृथिवी द्यामिव यथा द्याम् दिवं स्वर्गं भूदानप्राप्यम् उपरि आगामिनि काले दातृप्रतिग्रहीतृभ्याम् उपभोग्यं लोकं पाति तद्वत् । मां पात्विति संबन्धः ।

भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति ।
उभौ तौ पुण्यकर्माणौ नियतौ स्वर्गगामिनौ ।

इति ॥ अपि च लोककृतः लोकस्य पुण्यफलभूतस्य स्वर्गादेः कर्तॄन् पथिकृतः तत्प्राप्त्युपायभूतस्य मार्गस्य कर्तॄन् यजामहे हविषा पूजयामः ।

---

१ Cp स्थ॒ ।.

---

1 S′ बाहुच्युताः.

हे देवाः [ये] यूयं देवानाम् इन्द्रादीनां मध्ये हुतभागाः हुतः स्वाहा-कारवषट्काराभ्याम् अग्नौ प्रक्षिप्तो हविर्भागः अंशो येषां ते हुतभागा इह अस्मिन् पितृमेधकर्मणि स्थ भवथ । तान् देवान् लोककृत इति पूर्वेण संबन्धः ॥

षष्ठी ॥

धाता मा निर्ऋत्या दक्षिणाया दिशः पातु बाहुच्युता पृथिवी द्यामिवोपरि ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ २६ ॥

धाता । मा । निःऽऋत्याः । दक्षिणायाः । दिशः । पातु । बाहुऽच्युता । पृथिवी । द्याम्ऽइव । उपरि ।
लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ २६ ॥

धाता सर्वस्य जगतो विधाता धारयिता वा एतत्संज्ञो देवः निर्ऋत्याः । निर्ऋतिः आर्तिकरी पापदेवता । तद्युक्ताया दक्षिणाया दिशो मा मां पातु दक्षिणदिगवस्थिताद् रक्षःपिशाचादेर्मां संस्कर्तारं रक्षतु ॥ बाहुच्युतेत्यादेः पूर्ववद् योजना ॥

सप्तमी ॥

अदितिर्मादित्यैः प्रतीच्या दिशः पातु बाहुच्युता पृथिवी द्यामिवोपरि ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ २७ ॥

अदितिः । मा । आदित्यैः । प्रतीच्याः । दिशः । पातु । बाहुऽच्युता । पृथिवी । द्याम्ऽइव । उपरि ।
लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ २७ ॥

अदितिः अदीना देवमाता । सा आदित्यैः स्वपुत्रैः सह प्रतीच्या

1 S' प्रक्षिप्तं.

दिशः सकाशात् मा मां पातु प्रत्यग्दिगवस्थितरक्षःपिशाचादेर्मां रक्षत्वित्यर्थः ॥ अन्यद् उक्तार्थम् ॥

अष्टमी ॥

सोमो मा विश्वैर्देवैरुदीच्या दिशः पातु बाहुच्युता पृथिवी द्यामिवोपरि ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ २८ ॥

सोमः । मा । विश्वैः । देवैः । उदीच्याः । दिशः । पातु । बाहुऽच्युता । पृथिवी । द्याम्ऽइव । उपरि ।
लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ २८ ॥

विश्वैः सर्वैः [देवैः] सह सोमः [एतन्नामको देवः] मा माम् उदीच्या दिशः पातु उत्तरदिगवस्थिताद् राक्षसादेः श्मशानवासिनः सकाशाद् रक्षतु ॥

नवमी ॥

धर्ता ह त्वा धरुणो धारयाता ऊर्ध्वं भानुं सविता द्यामिवोपरि ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ २९ ॥

धर्ता । ह । त्वा । धरुणः । धारयातै । ऊर्ध्वम् । भानुम् । सविता । द्याम्ऽइव । उपरि ।
लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ २९ ॥

धरुणः[3] सर्वस्य जगतो धारयिता धर्ता एतत्संज्ञक ऊर्ध्वदिगभिमानी देवः हे प्रेत त्वा त्वाम् ऊर्ध्वम् ऊर्ध्वदिगवस्थितं लोकान्तरं गन्तुम् उद्यतम् ऊर्ध्वमुखं वा धारयातै धारयतु । ♉ "लेटोडाटौ" इति आडागमः । "वैतोन्यत्र" इति ऐकारः ♉ । तत्र दृष्टान्तः । स-

1 S′ has here a space for about five letters. 2 S′ स्मशान°. 3 S′ inserts उपरि हे ऊर्ध्वायां दिशि before धरुणः.

विता सर्वप्रेरकः सूर्यः भानुम् दीप्तां द्याम् द्युलोकं यथा उपरि धारयति तद्वद् इत्यर्थः ॥ लोककृत इत्यादि पूर्ववद् व्याख्येयम् ॥

दशमी ॥

प्राच्यां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युतां पृथिवी द्यामिवोपरि ।

लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ ३० ॥ (१५)

प्राच्याम् । त्वा । दिशि । पुरा । सम्ऽवृतः । स्वधायाम् । आ । दधामि । बाहुऽच्युता । पृथिवी । द्यामऽइव । उपरि ।

लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ ३० ॥ (१५)

प्राच्यां दहनदेशात् पूर्वस्यां दिशि पुरा पूर्वं संवृतः संछादितः कम्बलेन आवेष्टितोहम् यद्वा पूः शरीरम् तेन संवृतः सशरीर एव सन् हे प्रेत त्वा त्वां स्वधायाम् पितॄणां तृप्तिकरी देवता स्वधा तस्याम् आ दधामि स्थापयामि । संस्कारकर्मणा प्रेतत्वप्रच्युतिपूर्वकं[1] पितृदेवतात्वं गमयामीत्यर्थः । बाहुच्युता दातृबाहुभिः प्रच्युता ब्राह्मणेभ्यो दत्ता पृथिवी उपरि उपरिष्टाद्देशस्थितां द्याम् दिवं नाकपृष्ठाख्यं स्थानं यथा पालयति । यद्वा उपरि आगामिनि काले भूदानप्राप्यां दिवं यथा दत्ता पृथिवी पालयति तथा त्वां सैव पृथिवी पालयत्वित्यर्थः ॥

[इति] तृतीयेनुवाके तृतीयं सूक्तम् ॥

"दक्षिणायां त्वा दिशि" इत्यादितः पञ्चानाम् आज्यहोमे अभिमन्त्रणे च विनियोग उक्तः ॥

तत्र प्रथमा ॥

दक्षिणायां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युतां पृथिवी द्यामिवोपरि ।

1 S' °पूर्वक° for °पूर्वकं.

लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ ३१ ॥

दक्षिणायाम् । त्वा । दिशि । पुरा । सम्ऽवृतः । स्वधायाम् । आ । दधामि । बाहुऽच्युता । पृथिवी । द्याम्ऽइव । उपरि ।

लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ ३१ ॥

हे प्रेत त्वा त्वां दक्षिणायां दिशि दक्षिणदिग्भागे पुरा पूर्वमेव संवृतः आत्मरक्षार्थं[1] कम्बलादिना प्रावृतः स्वधायाम् पितृदेवतायाम् आ दधामि स्थापयामि । स्वधाकारभाजं करोमीत्यर्थः ॥ अन्यद् व्याख्यातम् ॥

द्वितीया ॥

प्रतीच्यां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युता पृथिवी द्यामिवोपरि ।

लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ ३२ ॥

प्रतीच्याम् । त्वा । दिशि । पुरा । सम्ऽवृतः । स्वधायाम् । आ । दधामि । बाहुऽच्युता । पृथिवी । द्याम्ऽइव । उपरि ।

लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ ३२ ॥

दहनदेशात् पश्चिमायां दिशि पुरा संवृत इत्यादि पूर्ववत् ॥

तृतीया ॥

उदीच्यां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युता पृथिवी द्यामिवोपरि ।

लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ ३३ ॥

उदीच्याम् । त्वा । दिशि । पुरा । सम्ऽवृतः । स्वधायाम् । आ । दधामि । बाहुऽच्युता । पृथिवी । द्याम्ऽइव । उपरि ।

---

1 S′ omits the anusvâra in °रक्षार्थं.

लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ ३३ ॥

उदीच्याम् उत्तरस्यां दिशि ॥ अन्यत् पूर्ववत् ॥

चतुर्थी ॥

ध्रुवायां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युता पृथिवी द्यामिवोपरि ।

लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ ३४ ॥

ध्रुवायाम् । त्वा । दिशि । पुरा । सम्ऽवृतः । स्वधायाम् । आ । दधामि । बाहुऽच्युता । पृथिवी । द्यामऽइव । उपरि ।

लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ ३४ ॥

ध्रुवा स्थिरा अधरा दिक् । तस्यां दिशि ॥ गतम् अन्यत् ॥

पञ्चमी ॥

ऊर्ध्वायां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युता पृथिवी द्यामिवोपरि ।

लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ ३५ ॥

ऊर्ध्वायाम् । त्वा । दिशि । पुरा । सम्ऽवृतः । स्वधायाम् । आ । दधामि । बाहुऽच्युता । पृथिवी । द्यामऽइव । उपरि ।

लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ[1] ॥ ३५ ॥

ऊर्ध्वायाम् उपरितन्यां दिशि हे प्रेत त्वा त्वां स्वधायाम् स्वधाकारे आ दधामि स्थापयामि पुरा पूर्वमेव संवृतः प्रावृतोऽहम् ॥ बाहुच्युता पुण्यकृतां बाहुभिर्दत्ता पृथिवी च त्वां पातु । उपर्यवस्थितां द्यामिव दा-

[1] Cp स्थ ।.

नफलभूतं स्वर्गं यथा सा पालयति तद्वत् ॥ लोककृतः स्वर्गादिलोकस्य कर्तॄन् यजामहे हविर्भिः पूजयामः । देवानाम् हविर्भुजां मध्ये हे देवाः ये यूयम् इह अस्मिन् लोके हुतभागाः स्थ भवथ ॥

षष्ठसप्तमौ द्वौ यजुर्मन्त्रौ ॥

धर्तासि धरुणोसि वंसगोसि ॥ ३६ ॥

धर्ता । असि । धरुणः । असि । वंसगः । असि ॥ ३६ ॥

उदपूरसि मधुपूरसि वातपूरसि ॥ ३७ ॥

उदऽपूः । असि । मधुऽपूः । असि । वातऽपूः । असि ॥ ३७ ॥

हे अग्ने त्वं [1]धर्तासि सर्वेषां धारयितासि । धरुणः । धार्यत इति धरुणः । ॥धारेर्णिलुक् च [उ° ३. ५८] इति उनन् प्रत्ययः॥ । गार्हपत्यादिरूपेण सर्वैर्धार्यमाणोसि । वंसगः वननीयगतिर्वृषभः असि भवसि । तथा "चत्वारि शृङ्गा" इत्यस्याम् ऋचि [ऋ° ४. ५८. ३] वृषभरूपकल्पनाग्नेः समाम्नाता । अत एव "तिग्मशृङ्गो न वंसगः" इति अन्यत्रापि [ऋ° ६. १६. ३९] आम्नातम् ॥ तथा हे अग्ने त्वम् उदपूः उदकस्य पूरयितासि । तथा मधुपूः मधुनो माक्षिकस्य पूरयिता असि भवसि । तथा वातपूः वातस्य प्राणात्मकस्य वायोः पूरयिता असि भवसि । एवंगुणविशिष्टस्त्वम् इमं यजमानं पालयेत्यर्थः ॥

सोमयागे हविर्धानाख्यशकटे प्रवर्त्यमाने "इतश्च मा" इति द्वाभ्याम् अभिमन्त्रयेत । तथा च वैतानं सूत्रम् । "हविर्धाने प्रवर्त्यमाने इतश्च मेति द्वाभ्याम् अनुमन्त्रयते" इति [वै° ३. ५] ॥

अष्टमी ॥

इतश्च मामुतश्चावतां यमे इव यतमाने यदैतम्[1] ।

प्र वां भरन् मानुषा देवयन्तो[2] आ सीदतां[3] स्वमु लोकं विदाने ॥ ३८ ॥

१ C cancels °म् and reads यदैत. We with A B R K^m V Dc. २ A C देवयन्तो corrected to देवयन्त. We with B K^m R V Dc, and Sâyaṇa's text. ३ A K^m B R V Dc सीदतां. C सीदतं. P P^2 सीदताम् ।. Cp सीदताम् ।.

1 S' has a blank space for about twelve letters instead of धर्तासि सर्वेषां धा°.

इतः । च । मा । अमुतः । च । अवताम् । यमे इवेति यमेऽइव । यतमाने इति । यत् । ऐतम् ।

प्र । वाम् । भरन् । मानुषाः । देवऽयन्तः । आ । सीदताम् । स्वम् । ऊं इति । लोकम् । विदाने इति ॥ ३८ ॥

इतश्च[1] इतः अस्माद् भूलोकाद् अमुतश्च अमुष्मात् स्वर्गलोकात् लोकद्वयावस्थिताद् भयहेतोः मा मां यजमानम् अवताम् हविर्धाने रक्षताम् । इति परोक्षकृतो निर्देशः ॥ अथ[2] प्रत्यक्षकृतः । [हे] हविर्धाने यमे इव यमले युगपद् उत्पन्ने अपत्ये इव यतमाने समानव्याप्रियमाणे जगतः पोषणाय प्रयत्नं कुर्वाणे [[3]यत् यस्मात् कारणाद् युवाम् ऐतम् गच्छथः[3]] ॥ वाम् युवाभ्यां देवयन्तः देवान् आत्मन इच्छन्तो मानुषाः मनुष्या ऋत्विग्यजमानाः प्र भरन् हवींषि समभरन् । तदानीं युवां स्वम् स्वकीयं लोकम् स्थानं विदाने[4] जानती[5] आ सीदतम्[*] उपविशतम् । उ इति पदपूरणः ॥

नवमी ॥

स्वासस्थे भवतमिन्दवे नो युजे वां ब्रह्म पूर्व्यं नमोभिः ।

वि श्लोक एति पथ्येव सूरिः शृण्वन्तु विश्वे अमृतास एतत् ॥ ३९ ॥

स्वासस्थे इति सुऽआसस्थे । भवतम् । इन्दवे । नः । युजे । वाम् । ब्रह्म । पूर्व्यम् । नमःऽभिः ।

वि । श्लोकः । एति । पथ्याऽइव । सूरिः । शृण्वन्तु । विश्वे । अमृतासः । एतत् ॥ ३९ ॥

हे हविर्धाने नः अस्माकम् इन्दवे सोमाय स्वासस्थे सुखासनस्थे सुस्थिरे भवतम् । अहं च वाम् युवयोः पूर्व्यम् पूर्वकाले भवं चिरंतनं ब्रह्म परिवृढं स्तोत्रं नमोभिः नमस्कारैः सहितं युजे युनज्मि । यद्वा

१ Cp मा ।. २ See note ३ on previous page.

1 S′ इतश्च लोपः for इतश्च. 2 S′ inserts अथ प्रत्यक्षकृतो निर्देशः before अथ प्रत्यक्षकृतः. 3 S′ has no empty space in place of this bracket. 4 S′ विजाने for विदाने. 5 S′ जानत्यौ for जानती.

नमोभिः नमस्कारप्रतिपादकैर्मन्त्रैरित्यर्थः । श्लोकः श्लोकनीयस्तुतिसंघः व्येति विशेषेण युवां गच्छति । तत्र दृष्टान्तः । पथ्या सूरिरिव । पथोनपेतं पथ्यम् । ⧗ "सुपां सुलुक्°" इति तृतीयायाः पूर्वसवर्णदीर्घः ⧗ । पथोनपेतेन धर्मेण सूरिः विद्वान् अभिमतं फलं प्राप्नोति तद्वद् इत्यर्थः ॥ एतत् अस्माभिः कृतं स्तोत्रम् अमृतासः अमृता मरणरहिता विश्वे सर्वे देवाः शृण्वन्तु आकर्णयन्तु । ⧗ श्रु श्रवणे । "श्रुवः शृ च" इति श्नुप्रत्ययः शृभावश्च ⧗ ॥

"त्रीणि पदानि" इत्यनया दह्यमानं[1] प्रेतशरीरं बान्धवा उपतिष्ठेरन् ॥

दशमी ॥

त्रीणि पदानि रुपो[१] अन्वरोहच्चतुष्पदीमन्वैतद्[२]व्रतेन ।
अक्षरेण प्रति मिमीते अर्कमृतस्य नाभावभि सं पुनाति ॥ ४० ॥ (१६)

त्रीणि । पदानि । रुपः । अनु । अरोहत् । चतुःऽपदीम् । अनु । एतत् । व्रतेन ।
अक्षरेण । प्रति । मिमीते । अर्कम् । ऋतस्य । नाभौ । अभि । सम् ।
पुनाति ॥ १० ॥ (१६)

रुप्यति मुह्यतीति रुपो मृतः पुरुषः । ⧗ युप रुप लुप विमोहने । इगुपधलक्षणः कप्रत्ययः ⧗ । त्रीणि त्रिसंख्याकानि पदानि[3]

---

१ A C रूपो. Cp रूपः ।. P रूपाः ।. We with B K̈ᵐ R P̂² V Dc. २ What can this be? A B K̈ᵐ R Dc read as above. C °मन्वैद्व्रतेनं changed to °मन्वैतद्व्रतेनं. The two pada manuscripts P P² have एतत् ।. Cp has ऐत् ।. But all the Saṁhitâ MSS. (and Sâyana's text also) read °मन्वैतद्व्रतेनं. The *Rigveda* has: पञ्च पदानि रुपो अन्वरोहं चतुष्पदीमन्वेमि व्रतेन. In our passage the sandhi ought to give us °मन्वेतद्व्रतेनं and the accent °मन्वेतद्व्रतेनं, if एतत् the pronoun is meant. एतद्व्रतेनं as a compound would be very un-Vedic. Is एतत् a later corruption of ऐत् which C once read and which Cp actually reads? That seems probable, and would give us ऐत् as the pada version, and would consist with the metre as it would be equivalent to a metrical elongation अइत् or आइत्. If my conjecture is right, the corruption of ऐत् into ऐतत् (which the pada-writers could only equate with the absurd एतत्) is much older than the time of Sâyaṇa.

1 S′ दाह्यमानं. 2 S′ रोपेति. 3 S′ leaves a blank space for about thirteen letters after the word पदानि.

द्युस्थानानि अन्वरोहत् क्रमेण आरूढवान् । प्राप्तवान् इत्यर्थः । केन साधनेन इत्याह । एतत् एतेन अनुष्ठीयमानेन व्रतेन कर्मणा पैतृमेधिकसंस्कारेण चतुष्पदीम् चत्वारः पादा यस्याः सा तथोक्ता ताम् अनुस्तरण्याख्यां गाम् अनुलक्ष्य । अन्वरोहद् इति संबन्धः । संस्कारमाहात्म्येन मृतो[1] लोकत्रयं व्याप्नोद् इत्यर्थः । अक्षरेण । अश्नुते व्याप्नोति स्वफलभूतं स्थानम् इत्यक्षरं स्वार्जितं सुकृतम् । यद्वा क्षरो[2] विनाशः । तद्रहितम् । तेन स्वार्जितेन सुकृतेन । यद्वा परिच्छेदकशरीरे त्यक्ते अक्षरेण[3] व्यापकेन विनाशरहितेन आत्मस्वरूपेण अर्कम् अर्चनीयं सुकृतफलं स्वर्गादिकं सूर्यमेव वा प्रति मिमीते प्रतिमुखं मिमीते परिच्छिनत्ति । व्याप्नोतीत्यर्थः । यद्वा प्रतिमानं प्रतिबिम्बम् । सूर्यस्य प्रतिबिम्बं भवति । सूर्यसदृशो भवतीत्यर्थः । ऋतस्य योनौ* । ऋतम् इति सत्यस्य उदकस्य यज्ञस्य वा नामधेयम् । तस्य योनिः उत्पत्तिस्थानं सूर्यमण्डलम् तत्र अभि अभितः सर्वतः आभिमुख्येन वा सं पुनाति सम्यक् पूतो वर्तते ॥

[इति] तृतीयेनुवाके चतुर्थं सूक्तम् ॥

"देवेभ्यः कम्" इत्यादिकं पञ्चमं सूक्तम् । तत्र "त्वमग्न ईळितः*" इत्यनया पिण्डपितृयज्ञे समिधम् आदध्यात् । "त्वमग्न ईळितः* [१८.३.४२] आ त्वाग्ने [१८.४.८८] इत्यादधाति" इति हि [कौ° ११.१०] सूत्रम् ॥

"अग्निष्वात्ताः पितरः" [४४] इत्यनया पिण्डपितृयज्ञे बर्हिः स्तृणीयात् ॥

"उपहूता नः पितरः" [४५] इति उत्तराभ्यां द्वाभ्यां च पिण्डपितृयज्ञे बर्हिः स्तृणीयात् ॥

"ये तातृषुः" [४७] इत्यृचा "ये सत्यासः" [४८] इत्युत्तरया च पिण्डपितृयज्ञे समिधावादध्यात् ॥

"उप सर्प" [४९] इति तिसृभिर्ऋग्भिः श्मशानदेशं[4] शलाकाभिः इष्टकाभिर्वा प्रसव्यं चिनुयात् ॥

---

1 S′ त्वामृतो for मृतो. 2 S′ अक्षरो° for क्षरो°. 3 S′ तिसृक्षरेण for अक्षरेण. 4 S′ स्मशान°.

तत्र प्रथमा ॥

देवेभ्यः कमवृणीत मृत्युं प्रजायै किममृतं नावृणीत ।
बृहस्पतिर्यज्ञमतनुत ऋषिः प्रियां यमस्तन्व१मा रिरेच ॥ ४१ ॥

देवेभ्यः । कम् । अवृणीत । मृत्युम् । प्रऽजायै । किम् । अमृतम् । न । अवृणीत ।
बृहस्पतिः । यज्ञम् । अतनुत । ऋषिः । प्रियाम् । यमः । तन्वम् । आ ।
रिरेच ॥ ४१ ॥

देवेभ्यः दीव्यन्तीति देवाः इन्द्रादयः । तेभ्यः । ॥ तादर्थ्ये चतुर्थी ॥ । तदर्थं कम् कीदृशं मृत्युम् अवृणीत सृष्ट्यादौ विधाता वृतवान् । देवानाम् अर्थे स्रष्टा कमपि मरणहेतुं न कृतवान् इत्यर्थः काका द्योत्यते । अतो देवानां मृत्युसंबन्धविरहात् तेषाम् अमृतत्वम् उत्पत्तिसिद्धम् इत्यर्थः । प्रजायते उत्पद्यत इति प्रजा मनुष्यादिरूपा । तस्यै वेधाः [किम्] किंकारणम् अमृतम् अमरणं न अवृणीत न वृतवान् । मनुष्यादीनां देववद् अमृतत्वं न कृतवान् । तत्र कारणं किमपि नास्तीत्यर्थः । प्रजापतिना केचन इन्द्राद्याः अमृताः सृष्टाः मनुष्याद्याः प्राणिनो मरणधर्मोपेताः कल्पिताः । अतो देवानाम् अमरणं मनुष्याणां मरणं च अनादिसिद्धम् । अतस्तत्र कारणगवेषणं न कार्यम् इत्यर्थः ॥ बृहस्पतिः बृहतां महतां देवानां पतिः स्वामी ऋषिः अतीन्द्रियार्थद्रष्टा यज्ञम् सोमयागम् अतनुत अकरोत् । भूलोके ऋषिरूपेणावस्थितो बृहस्पतिः स्वस्य ऐहिकामुष्मिकफलप्राप्तये तत्प्राप्त्युपायभूतं[1] यज्ञं कृतवान् इत्यर्थः । श्रूयते हि । "बृहस्पतिरकामयत देवानां पुरोधां गच्छेयम् इति । स एतं बृहस्पतिसवम् अपश्यत् । तम् आहरत् । तेनायजत" इति तै॰ ब्रा॰ २.७.१.२ ] । बृहस्पतेः प्रियां तन्वम् प्रेमास्पदं मानुषं शरीरं यमो वैवस्वतः आ रिरेच आसमन्ताद् रिक्तं निःसारं मृतं कृतवान् । ऋषिरूपेणावस्थितस्य बृहस्पतेरपि यमः प्राणान् अपाहार्षीत् किल किमु वक्तव्यम् अन्येषां मनुष्यादीनां यमः प्राणान् अपहरतीति । यद्वा नावृ-

1 S' omits the anusvâra in °भूतं.

णीत इति पूर्वत्रापि संबध्यते । देवानां कं मृत्युं नावृणीत । सर्वमपि मृत्युं वृतवान् । अतस्तेषाम् अमृतत्वसिद्धये तैः प्रार्थितो बृहस्पतिः ऋषिर्भूत्वा यज्ञम् अतनुत । तस्माद् यज्ञात् ते देवा अमृताः संपन्नाः । तथा प्रजायै मनुष्यादिरूपायै किमपि अमृतं नावृणीत अतः सा मर्त्या भूता । तस्माद् यमो मनुष्यादिशरीरम् आरेचितवान् इति ॥

द्वितीया ॥

त्वम॑ग्न ईडि॒तो जा॑तवे॒दोवा॑ड्ढ॒व्यानि॑ सु॒रभी॑णि कृ॒त्वा ।

प्रादा॑: पि॒तृभ्य॑: स्व॒धया॑ ते अ॑क्षन्न॒द्धि त्वं दे॑व प्रय॑ता ह॒वींषि॑ ॥ ४२ ॥

त्वम् । अ॒ग्ने॒ । ई॒डि॒तः । जा॒त॒ऽवे॒दः॒ । अवा॑ट् । ह॒व्यानि॑ । सु॒रभी॑णि । कृ॒त्वा । प्र । अ॒दाः॒ । पि॒तृऽभ्य॑ः । स्व॒धया॑ । ते । अ॒क्ष॒न् । अ॒द्धि । त्वम् । दे॒व॒ । प्रऽय॑ता । ह॒वींषि॑ ॥ ४५ ॥

हे जातवेदः जातानां जनिमतां प्राणिनां वेदितः हे अग्ने ईळितः अस्माभिः स्तुतस्त्वं हव्यानि अस्मदीयानि चरुपुरोडाशादीनि सुरभीणि सुगन्धीनि रसवन्ति कृत्वा अवाट् देवेभ्यो वह । "छन्दसि लुङ्लङ्लिटः" इति लोडर्थे लुङ् । वह प्रापणे इत्यस्मात् लुङि सिपि "बहुलं छन्दसि" इति इडभावे "झलो झलि" इति सिज्लोपः । "हल्ङ्याब्भ्यः°" इति सलोपे रूपम् ॥ तथा पितृभ्यः पितृदेवताभ्यः स्वधया स्वधाकारेण सह कव्यसंज्ञकानि हवींषि प्रादाः प्रत्तवान् असि । ते च पितरस्त्वया दत्तानि कव्यानि हवींषि अक्षन् अभुञ्जत । अद भक्षणे । "लुङ्सनोर्घस्लृ" इति घस्लादेशः । "मन्त्रे घसह्वर°" इत्यादिना च्लेर्लुक् । "गमहनजनखनघसां लोपः°" इति उपधालोपः । चर्त्वषत्वे ॥ हे देव द्योतमान अग्ने त्वमपि प्रयता[1] प्रयतानि प्रकर्षेण अस्माभिर्दत्तानि हवींषि अद्धि भुङ्क्ष्व । अद भक्षणे । "हुझल्भ्यो हेर्धिः" इति हेर्धिरादेशः ॥

1 S' प्रयाता.

तृतीया ॥

आसीनासो अरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय ।

पुत्रेभ्यः पितरस्तस्य वस्वः[१] प्र यच्छत त इहोर्जं दधात ॥ ४३ ॥

आसीनासः । अरुणीनाम् । उपऽस्थे । रयिम् । धत्त । दाशुषे मर्त्याय ।

पुत्रेभ्यः । पितरः । तस्य । वस्वः । प्र । यच्छत । ते । इह । ऊर्जम् । दधात ॥ ४३ ॥

हे पितरः अरुणीनाम् अरुणवर्णानां मातॄणाम् उपस्थे उत्सङ्गे आसीनासः आसीना उपविशन्तो दाशुषे हविर्दत्तवते मर्त्याय मरणधर्मणे यजमानाय रयिम् धनं धत्त दत्त प्रयच्छत ॥ पुत्रेभ्यः । पुंनाम्नो नरकात् त्रायन्त इति पुत्राः । तेभ्यः अस्मभ्यं तस्य वस्वः । ॥कर्मणि षष्ठी॥ । तत् प्रसिद्धं वसु धनं प्रयच्छत दत्त । ॥दाण् दाने । "पाघ्राध्मा[स्थाम्ना]दाण्°" इत्यादिना यच्छादेशः॥ ॥ हे पितरः ते यूयम् इह अस्मिन् भूलोके ऊर्जम् बलकरम् अन्नम् अस्मभ्यं दधात धत्त ॥

चतुर्थी ॥

अग्निष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः ।

अत्तो[२] हवींषि प्रयतानि बर्हिषि रयिं च नः सर्ववीरं दधात ॥ ४४ ॥

अग्निऽस्वात्ताः । पितरः । आ । इह । गच्छत । सदःऽसदः । सदत । सुऽप्रनीतयः ।

अत्तो इति । हवींषि । प्रऽयतानि । बर्हिषि । रयिम् । च । नः । सर्वेऽवीरम् । दधात ॥ ४४ ॥

हे अग्निष्वात्ताः [पितरः] । पितरो द्विविधाः । बर्हिषदः अग्निष्वात्ताश्चेति । तेषां भेदस्तैत्तिरीयके स्पष्टम आम्नातः । "पितॄन् बर्हिषदो यज-

१ B V वसु. Dc वस्वः changed to वसु. Cp वसुं ।. P P² वस्वः ।. We with A C K^m R. २ So we read with A B C K^m R V Dc.

"ति । ये वै यज्वानस्ते पितरो बर्हिषदः तानेव तद् यजति ॥ पितॄन् "अग्निष्वात्तान् यजति । ये वा अयज्वानो गृहमेधिनस्ते पितरोग्निष्वात्ताः" इति [तै° ब्रा° १. ६. ९. ६] । कृतसोमयागाः पितरो बर्हिषत्संज्ञकाः अकृतसोमयागास्तु अग्निष्वात्तसंज्ञका इत्यर्थः । हे एतत्संज्ञकाः पितरः इह अस्मिन् यज्ञे आ गच्छत ॥ हे सुप्रणीतयः । प्रणीतिः प्रकृष्टं फलप्रापणम् । शोभना प्रणीतिर्येषां ते तथोक्ताः । आगतास्ते यूयं सदःसदः । सीदन्ति[1] अस्मिन्निति सदः उपवेशनस्थानम् पितृपितामहप्रपितामहादीनां यद्यत् स्थानं परिकल्पितं तत् स्थानं सदत प्राप्नुत । स्वेस्वे स्थाने उपविशतेत्यर्थः ॥ बर्हिषि यज्ञे प्रयतानि प्रत्तानि यद्वा शुद्धानि हवींषि चरुपुरोडाशादीनि अत्त* भक्षयत ॥ हविरदनेन संतुष्टा यूयं नः अस्मभ्यं सर्ववीरम् सर्वैर्वीरैरुपेतं रयिम् धनं दधातन* धत्त । प्रयच्छतेत्यर्थः । डुधाञ् दानधारणयोः । लोटि "तप्तनप्तनथनाश्च" इति तस्य तनबादेशः ॥

पञ्चमी ॥

उप॑हूता नः पि॒तरः॑ सो॒म्यासो॑ ब॒र्हि॒ष्ये॑षु नि॒धिषु॑ प्रि॒येषु॑ ।
त आ ग॑मन्तु त इ॒ह श्रु॑वन्त्वधि ब्रुवन्तु ते॑ऽवन्त्व॒स्मान् ॥ ४५ ॥

उप॑ऽहूताः । नः॒ । पि॒तरः॑ । सो॒म्यासः॑ । ब॒र्हि॒ष्ये॑षु । नि॒ऽधिषु॑ । प्रि॒येषु॑ ।
ते । आ । ग॒म॒न्तु॒ । ते । इ॒ह । श्रु॒व॒न्तु॒ । अधि॑ । ब्रु॒वन्तु॑[1] । ते । अ॒व॒न्तु॒ । अ॒स्मान् ॥ ४५ ॥

नः अस्माकं पितरः उपहूताः समीपम् आहूताः ॥ सोम्यासः सोम्याः सोमार्हा एवंगुणविशिष्टाः पितृपितामहप्रपितामहाः बर्हिष्येषु बर्हिषि यज्ञे भवा बर्हिष्याः तेषु प्रियेषु प्रीतिविषयेषु निधिषु निधीयमानेषु हविःषु सत्सु प्रागुदीरितास्ते पितरः आ गमन्तु आगच्छन्तु ॥ इह अस्मिन् यज्ञे ते पितरः श्रुवन्तु अस्मदीयं स्तोत्रं शृण्वन्तु । श्रु श्रवणे । "बहुलं छन्दसि" इति विकरणस्य लुक् । अधि ब्रु-

१ Cp ब्र॒वंतु॑।.

1 S' सीदति.

वन्तु अधिवचनं पक्षपातेन वचनम् । अधिवचनेन अस्मान् स्वीकुर्वन्तु । न केवलम् अधिवचनमात्रम् अपि तु ते पितरः अस्मान् अवन्तु ऐहिकामुष्मिकफलप्रदानेन रक्षन्तु ॥

षष्ठी ॥

ये नः पितुः पितरो ये पितामहा अनूजहिरे[1] सोमपीथं वसिष्ठाः ।
तेभिर्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाममत्तु ॥ ४६ ॥

ये । नः । पितुः । पितरः । ये । पितामहाः । अनुऽजहिरे । सोमऽपीथम्[2] । वसिष्ठाः ।
तेभिः । यमः । सम्ऽरराणः । हवींषि । उशन् । उशत्ऽभिः । प्रतिऽकामम् । अत्तु ॥ ४६ ॥

नः अस्माकं पितुर्जनकस्य ये पितरः सन्ति ये च पितामहास्तज्जनका वसिष्ठाः[2] वसुमत्तमाः एवंगुणविशिष्टा ये पितृपितामहप्रपितामहाः सोमपीथम् सोमपानम् अनुजहिरे अनुक्रमेण हरन्ति आत्मसात् कुर्वन्ति स्म तेभिस्तैः पितृभिः[3] संरराणः सह रममाणो यमः उशन् कामयमानः उशद्भिः कामयमानैस्तैः पितृभिः सह हवींषि अस्मदीयानि चरुपुरोडाशादीनि हवींषि प्रतिकामम् । कामः अभिलाषः । अभिलाषं प्रति । अभिलाषानुसारेणेत्यर्थः । अत्तु भक्षयतु ॥

सप्तमी ॥

ये तातृषुर्देवत्रा जेहमाना होत्राविद स्तोमतष्टासो अर्कैः ।
आग्ने याहि सहस्रं देववन्दैः सत्यैः कविभिर्ऋषिभिर्घर्मसद्भिः ॥ ४७ ॥

ये । ततृषुः । देवऽत्रा[3] । जेहमानाः । होत्राऽविदः । स्तोमऽतष्टासः । अर्कैः ।

---

१ K V Dc अनुजहीरे. A B अनुजहिरे. C अनूजहिरे. R अनूजहीरे. Cp अनुऽजहिरे ।. P P² अनुऽजहिरे ।. Sâyaṇa's text : अनूजहिरे. The *Rigveda* reading is अनूहिरे, of which अनूजहिरे may be a perversion. २ Cp सोमऽपीथम् ।. ३ Cp देवत्रा ।.

---

1 S' आधिक°. 2 S' वशिष्ठाः. 3 S' पितृभिः सह संरराणः रममाणः.

खाताः भूमावप्रकाशं निगूहिता वलॅगाः । वलगाः पीडार्थं भूमेरधो बाहुप्रदेशे निखन्यमाना अस्थिकेशादिवेष्टिता विषवृक्षादिनिर्मिताः पुंत्तल्यो[1] वलगा इत्युच्यन्ते । तथा च तैत्तिरीयके “रक्षोहणो वलगहनः” इत्यत्र समाम्नायते । “असुरा[2] वै निर्यन्तो देवानां प्राणेषु वलगान् न्यखनन् । तान् बाहुमात्रेन्वविन्दन् । तस्माद् बाहुमात्राः खायन्ते” इति [तै॰ सं॰ ६.२.११.१] । तेपि वलगा नः अस्माकं शम् भवन्तु । उल्काः आकाशान्निष्पतन्त्य[3] आयतज्वालाः । उल्कादर्शनम् अनर्थकारि । उल्काः स्वदर्शनजनितं दुरितं शमयन्तु । देशोपसर्गाः देशे जनपदे उपसर्गा ईतिबाधाः । उशब्दश्चार्थे । तेपि शम् शान्ता भवन्तु ॥

दशमी ॥

शं नो ग्रहाश्चान्द्रमसाः शमादित्यश्च[1] राहुणा ।
शं नो मृत्युर्धूमकेतुः शं रुद्रास्तिग्मतेजसः ॥ १० ॥

शम् । नः । ग्रहाः । चान्द्रमसाः । शम् । आदित्यः । च । राहुणा ।
शम् । नः । मृत्युः । धूमऽकेतुः[2] । शम् । रुद्राः । तिग्मऽतेजसः ॥ १० ॥

चान्द्रमसाः चन्द्रमसः संबन्धिनश्चन्द्रमण्डलस्य भेदकाः संघर्षका ये अङ्गारकाद्या ग्रहाः सन्ति ते [नः] शं भवन्तु । राहुणा ग्रहेण ग्रस्त आदित्यश्च शम् शान्त्यै भवतु । आदित्यस्य अतितेजस्वित्वेन इतरग्रहैरुपप्लवाभावाद्[4] राहुणेति विशेषितम् । तथा मृत्युः मारको धूमकेतुः उत्पातः । धूमकेतोरनिष्टकारित्वं कौशिकेन सूत्रितम् । “अथ यत्रैतद् धूमकेतुः सप्तऋषीन् उपधूपयति तद् अयोगक्षेमाशङ्कम् इत्युक्तम्” [इति कौ॰ १३.३५.] । स धूमकेतुः शम् दोषनिर्घाताय भवतु । तिग्मतेजसः तीक्ष्णतेजसो रुद्राः रोदका एतत्संज्ञका देवाश्च स्वतेजःसंतापकम् उपद्रवं परिहरन्तु ॥

१ A V Cs °दित्यः शं. K[m] °दित्यश्चं शं राहुणा corrected from °दित्यः शं राहुणा. B[h] °दित्यत् शं. C D R °दित्यः शं. Dc °दित्याः संराहुणा changed to दित्यः शं राहुणा. S[m] °दित्यः शराहुणा changed to °दित्यश्च राहुणा. P J शराहुणा ।. P[2] शराहुणा ।. K V with Sâyaṇa. We with S[m]. २ P °कैतु ।. We with P[2] J.

1 S′ उत्तल्यो. 2 S′ असुरो. 3 So S′. निपतन्त्यः? 4 S′ °प्लवभावात्.

एकादशी ॥

शं रुद्राः शं वसवः शमादित्याः शमग्नयः ।
शं नो महर्षयो देवाः शं देवाः शं बृहस्पतिः ॥ ११ ॥

शम् । रुद्राः । शम् । वसवः । शम् । आदित्याः । शम् । अग्नयः ।
शम् । नः । महऽऋषयः । देवाः । शम् । देवाः । शम् । बृहस्पतिः ॥ ११ ॥

रुद्राः एकादश । वसवः अष्टौ । आदित्याः द्वादश । अग्नयः वैतानिकास्त्रयः सभ्यावसथ्याभ्यां सह पञ्च वा । एकः स्मार्तो वाग्निः । महर्षयः सप्त । देवाः द्योतमानास्तेजोरूपाः । महर्षिविशेषणम् एतत् । देवाः इन्द्रादयः । बृहस्पतिः तेषां पुरोधाः । एते रुद्रादयः [नः] शम् शान्त्यै भवन्तु ॥

द्वादशी ॥

ब्रह्म प्रजापतिर्धाता लोका वेदाः सप्तऋषयोग्नयः ।
तैर्मे कृतं स्वस्त्ययनमिन्द्रो मे शर्म यच्छतु ब्रह्मा मे शर्म यच्छतु ।
विश्वे मे देवाः शर्म यच्छन्तु सर्वे मे देवाः शर्म यच्छन्तु ॥ १२ ॥

ब्रह्म । प्रजाऽपतिः । धाता । लोकाः । वेदाः । सप्तऽऋषयः । अग्नयः ।
तैः । मे । कृतम् । स्वस्त्ययनम् । इन्द्रः । मे । शर्म । यच्छतु । ब्रह्मा । मे ।
शर्म । यच्छतु ।
विश्वे । मे । देवाः । शर्म । यच्छन्तु । सर्वे । मे । देवाः । शर्म । यच्छन्तु ॥ १२ ॥

१ A C D S^m Cs शंमग्नयः. We with K K^m R V Dc P P^2 J. २ K K^m B^h D महऋषयो. R महऋषयो. S^m महर्षयो. V महर्षयो. Cs महऋषयो. Dc महऋषयो changed to महऋषयो. P J महऽऋषयः ।. P^2 महऽऋषयः ।. ३ P P^2 देवाः ।. J देवाः changed to देवाः ।. ४ P^2 J देवाः ।. We with P. ५ K^m सप्तर्षयो°. S^m संप्तर्षयो°. Dc देवाः संप्तऋषयो° changed to वेदाः सप्तऋषयो°. Cs देवाः संप्तर्षयो.° R देवाः संप्तर्षयो° changed to वेदाः संप्तर्षयो°. J देवाः । changed to वेदाः ।. We with A B^h C D V.

1 S' वोग्निः for वाग्निः.

ब्रह्म । बृहतेर्मनिन् प्रत्ययः । देशकाला[1]नवच्छिन्नं सच्चिदानन्दलक्षणं परं ब्रह्म । प्रजापतिः प्रजाना पालकः सर्वनियन्ता सर्वान्तर्यामी । धाता सर्वस्य धाता चतुर्मुखो ब्रह्मा । वेदाः साङ्गाश्चत्वारः । लोकाः सप्तसंख्याकाः । सप्तर्षयः प्रसिद्धाः । अग्नयः व्याख्याताः । तैः सर्वैः मे मम स्वस्त्ययनम् । स्वस्तीति अविनाशिनाम । तस्य अयनं प्राप्तिः कृतम् स्वस्त्ययनं क्षेमप्रापणं कृतम् । "आशंसायां भूतवच्च" इति भूतवत् प्रत्ययः । इन्द्रो मे शर्म सुखं यच्छतु प्रयच्छतु । दाण् दाने । "पाघ्रा०" इत्यादिना यच्छादेशः ॥ एवं ब्रह्मा मे इत्याद्यास्त्रयः पर्याया व्याख्येयाः ॥

त्रयोदशी ॥

यानि कानि चिच्छान्तानि लोके[1] सप्तऋषयो विदुः ।
सर्वाणि शं भवन्तु मे शं मे अस्त्वभयं मे अस्तु ॥ १३ ॥

यानि । कानि । चित् । शान्तानि । लोके[1] । सप्तऽऋषयः । विदुः[2] ।
सर्वाणि । शम् । भवन्तु । मे । शम् । मे । अस्तु । अभयम् । मे ।
अस्तु ॥ १३ ॥

उक्तानु[2]क्तानि शान्तिकारणानि संगृह्य आह । सप्तर्षयः अतीन्द्रियार्थद्रष्टारो लोके सर्वेषु लोकेषु यानि कानि चिद् वस्तूनि शान्तानि शान्तिकारणानि विदुः जानन्ति तानि सर्वाणि मे शं भवन्तु ॥ एतत्सूक्तप्रतिपाद्यस्यार्थस्य संग्रहेण वचनम् शं मे अस्त्वभयं मे अस्त्विति । "शान्ता द्यौः" इत्यादिना द्युलोकादयः शान्ता भवन्तु इति यद् उक्तं तस्यायम् अर्थः । मे शम् अस्तु सर्वतः सुखम् अस्तु । अभयम् भयराहित्यं चास्त्विति ॥

---

१ R °नि लोके सप्तर्षयो. A °नि लोके सप्त ऋषयो. B[h] S[m] °नि लोके सप्तर्षयो. C °नि लोके सप्तर्षयो. Dc °नि लोके सप्तऋषयो changed to °नि लोके सप्तऋषयो. D °नि लोके सप्तऋषयो. Cs °नि लोके सप्तर्षयो. P J लोके ।. We with K V Dc P[2]. २ P विदुः ।. We with P[2] J.

---

1 S′ omits न in °कालानव°. 2 S′ उक्तान्युक्तानि.

चतुर्दशी ॥

अनृगात्मकश्चतुर्दशो मन्त्र एवम् आम्नायते ।

पृथिवी शान्तिरन्तरिक्षं शान्तिर्द्यौः शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्विश्वे मे देवाः शान्तिः सर्वे मे देवाः शान्तिः शान्तिः शान्तिः[१] शान्तिभिः ।

ताभिः शान्तिभिः[२] सर्वे शान्तिभिः[३] शमयामोहं यदिह घोरं यदिह क्रूरं यदिह पापं[४] तच्छान्तं तच्छिवं सर्वमेव शमस्तु नः ॥ १४ ॥

पृथिवी । शान्तिः । अन्तरिक्षम् । शान्तिः । द्यौः । शान्तिः । आपः । शान्तिः । ओषधयः । शान्तिः । वनस्पतयः । शान्तिः । विश्वे । मे । देवाः । शान्तिः । सर्वे । मे । देवाः । शान्तिः । शान्तिः । शान्तिः । शान्तिऽभिः ।

ताभिः । शान्तिऽभिः । सर्वे[५] । शान्तिऽभिः । शम[६] । अयामः । अहम्[६] । यत् । इह । घोरम् । यत् । इह । क्रूरम् । यत् । इह । पापम् । तत् । शान्तम् । तत् । शिवम् । सर्वम् । एव । शम । अस्तु । नः ॥ १४ ॥

पृथिव्यादयः शान्तिरूपा भवन्तु । शान्तिभिः उक्ताभिः पृथिव्यादिशान्तिभिः शान्तिः निरुपपदा सर्वसाधारणभूता शान्तिरपि शान्तिर्भवतु इत्याशास्यते । शान्तेरपि शान्तित्वं तैत्तिरीयके समाम्नायते । "शान्तिरेव शान्तिर्मे अस्तु शान्तिरिति" [तै° आ° ४. ४२. ५] । ताभिः शान्तिभिः [सर्व[1]]-शान्तिभिः । अहम् । "सुपां सुलुक्" इति जसः सुः । वयं शमयामः अपगमयामः । किं तद् इति तद् आह । इह अस्मिन् कर्मणि यद् घोरम् भयंकरं विपरीतानुष्ठानेन विपरीतफलप्रापकं यद्

---

१ A $B^{h}$ R D $S^{m}$ Dc Cs $P^{2}$ J omit शान्तिः. We with K C P $K^{m}$ V P. २ So we with A $B^{h}$ C D R K $K^{m}$ $S^{m}$ V Dc Cs P $P^{2}$ J. ३ $B^{h}$ C D Cs R $S^{m}$ शान्तिभिः शम°. We with V K $K^{m}$ A Dc. ४ A adds a तं after पापं. ५ P $P^{2}$ J distinctly सर्वे । शान्ति° ।. ६ P $P^{2}$ J शमय । मोहम् ।.

1 S′ Sâyaṇa's text reads सर्वशांतिभिः as ours does.

अस्ति । एतस्यैव विवरणम् यद् इह क्रूरं यद् इह पापम् इति । अथ वा त्रिर्वचनेन दोषशमयितृत्वं निश्चितं भवतीति यद् इह घोरम् इत्यादि त्रिर्वचनम् । एवं तच्छान्तं तच्छिवम् इति शान्तिशिवशंशब्दैस्त्रिर्वचनम् । यथा कर्मान्तरेषु "अदीक्षिष्टायं ब्राह्मणः" [तै॰सं॰ ६.१.४.३] इत्यादिषु आवेदनरूपेषु त्रिरुपांशुवचनम् त्रिरुच्चैर्वचनम् एवम् अत्रापि । सर्वथा घोरं कर्म शमयामः । तच्च सर्वथा शान्तं भवत्वित्यर्थः ॥

इति एकोनविंशे काण्डे प्रथमेनुवाके दशमं सूक्तम् ॥

प्रथमोनुवाकः समाप्तः ॥

द्वितीयेनुवाके एकादश सूक्तानि । तत्र "शं न इन्द्राग्नी" इति प्रथमसूक्तत्रयस्य अहरहः पुरोहितेन कर्तव्ये राज्ञः शय्यागृहप्रवेशनकर्मणि शान्त्यर्थजपे विनियोगः । "अथातो रात्रीसूक्तानां [विधिम्] अनुक्रमिष्यामः" इति प्रक्रम्य उक्तं परिशिष्टे । "शान्ता द्यौरिति जपित्वा राजानं वासगृहं नयेत्" इति [प॰ ४.५.] ॥ अत्र शान्ता द्यौरित्येकेन शान्त्यर्थप्रतिपादकं समनन्तरम् इदं सूक्तद्वयं गृह्यते । यत्रैकेन प्रतीकेन समानार्थं समानदेवत्यं समानार्षं वा समनन्तरं सूक्तं गृह्यते तद् अर्थसूक्तम् इति अथर्वणां[1] परिभाषणात् ॥

तथा अनेन सूक्तत्रयेण "शान्ता द्यौः" इति पूर्वेण च तुलापुरुषमहादाने आज्यहोमं कुर्यात् । "अथातस्तुलापुरुषविधिं व्याख्यास्यामः" इति प्रक्रम्य उक्तं परिशिष्टे । "प्राकृतन्त्रम् आज्यभागान्तं कृत्वा महाव्याहृतिसावित्रीशान्तिब्रह्मजज्ञानम्[2] इति हुत्वा" इति [प॰ ११.१.] । अत्र शान्तिपदेन शान्त्यर्थप्रतिपादकम् इदं सूक्तत्रयं पूर्वं च गृह्यते ॥

अस्य सूक्तत्रयस्य शान्तिप्रतिपादकत्वेन शान्तिगणे पाठाद् "आयुष्यः शान्तिः स्वस्तिगण ऐरावत्याम्" [न॰क॰ १८.] इत्यादिषु विनियोगो द्रष्टव्यः ॥

तत्र प्रथमा ॥

शं न॑ इन्द्रा॒ग्नी भ॑वता॒मवो॑भिः॒ शं न॒ इन्द्रा॒वरु॑णा रा॒तह॑व्या ।

1 S' आथर्वणां. 2 S om. °ज°.

शमिन्द्रासोमा सुवितायु शं योः शं नु इन्द्रापूषणा वाजसातौ ॥ १ ॥

शम् । नुः । इन्द्राग्नी इति । भवताम् । अवःऽभिः । शम् । नुः । इन्द्रा-वरुणा । रातऽहव्या ।

शम् । इन्द्रासोमा । सुवितायं । शम् । योः । शम् । नुः । इन्द्रापूषणा । वाजऽसातौ ॥ १ ॥

हे* इन्द्राग्नी युवाम् अवोभिः[1] रक्षाभिः[1] नः अस्माकम् अस्मभ्यं वा शम् शान्त्यै सकलदुःखनिवारणाय भवताम् । ❈इन्द्राग्नी इत्यत्र "आमन्त्रितस्य च" इति आष्टमिकं सर्वानुदात्तत्वम्❈ । रातहव्या रातहव्यौ यजमानैर्दत्तहविष्कौ[2] इन्द्रावरुणा इन्द्रावरुणौ । ❈"देवताद्वन्द्वे च[3]" इति आनङ् उभयपदप्रकृतिस्वरत्वं च❈ । शं नः । भवताम् इत्यनुषङ्गः । इन्द्रासोमा इन्द्रासोमौ सुविताय । सुखनामैतत् । सुष्ठु प्राप्तव्याय । ❈सुपूर्वाद् एतेः कर्मणि क्तः । तन्वादित्वाद् उवङ् आदेशः❈ । सुखाय शं भवताम् । ❈शं योः इति पदयोरर्थो यास्केनोक्तः । शमनं च रोगाणां यावनं च भयानाम् इति [नि॰ ४.२१.] । शमु उपशमे । यु मिश्रणामिश्रणयोः । उभयत्र "अन्येभ्योपि दृश्यन्ते" इति विच् प्रत्ययः❈ । शमनाय यावनाय च । केचिद् एवं व्याचक्षिरे[4] । "शम् आत्महेतुकं सुखम् योः विषययोगनिमित्तं सुखम्" इति । इन्द्रापूषणा इन्द्रापूषणौ । ❈"वा षपूर्वस्य निगमे" इति पूषन्शब्दस्य दीर्घाभावः❈ । वाजसातौ । युद्धनामैतत् । वाजो वेगः वेगेन सातिः अवसानं विनाशो योद्धॄणां भवति यत्रेति वाजसातिः युद्धं तत्र । अथ वा वाजः अन्नं तल्लाभार्थम् । ❈विषयसप्तमी❈ । शं नो भवताम् । ❈षो अन्तकर्मणि । "स्त्रियां क्तिन्" । "ऊतियूति॰" इत्यादिना निपातनाद्

१ P J सुऽवितायं । We with P̊.

1 S′ अहोरक्षाभिः though Sâyaṇa's text is all right. 2 S′ ॰हविष्यो. 3 S′ चेति समानम् for च इति आनङ्. 4 S′ व्याचक्षे for व्याचक्षिरे.

आत्वं द्रष्टव्यम् । अथ वा षण संभक्तौ[1] । अस्मात् क्तिनि "जनसनखनां सञ्झलोः" इति आत्वम् ॥

द्वितीया ॥

शं नो॒ भग॑: शमु॑ न॒: शंसो॑ अस्तु॒ शं न॒: पुरं॑धि॒: शमु॑ सन्तु॒ राय॑: ।
शं न॑: स॒त्यस्य॑ सु॒यम॑स्य॒ शंस॑: शं नो॑ अर्य॒मा पु॑रुजा॒तो अ॑स्तु ॥ २ ॥

शम् । न॒: । भग॑: । शम् । ऊं॒ इति॑ । न॒: । शंस॑: । अ॒स्तु॒ । शम् । न॒: । पुर॑म्ऽधि॒: । शम् । ऊं॒ इति॑ । स॒न्तु॒ । राय॑: ।
शम् । न॒: । स॒त्यस्य॑ । सु॒ऽयम॑स्य॑ । शंस॑: । शम् । न॒: । अ॒र्य॒मा । पु॒रु॒ऽजा॒त॒: । अ॒स्तु॒ ॥ २ ॥

भगः भजनीयो देवः । "पुंसि संज्ञायाम्०" इति भजतेर्घप्रत्ययः । नः अस्माकं शम् अस्तु । शंसः सर्वैः स्तूयमानः । एकदेशेन व्यपदेशः । नराशंसो नाम देवः । उशब्दः अवधारणे । शम् एव नः अस्तु । पुरंधिः पूर्णा धीयते निधीयते संचार्यत इति पुरंधिर्बुद्धिः शं नः अस्तु । रायः धनानि सुखायैव सन्तु । सुयमस्य सुष्ठु यन्तव्यस्य शोभनयमयुक्तस्य[2] वा । "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा[3] यमाः" इति [पा०सू०२.३०] यमस्वरूपं पातञ्जले[4] विहितम् । तादृशस्य सत्यस्य शंसः वचनं नः अस्माकं सुखाय भवतु । पुरुजातः बहुप्रादुर्भावः अर्यमा देवः शं नोस्तु ॥

तृतीया ॥

शं नो॑ धा॒ता शमु॑ ध॒र्ता नो॑ अस्तु॒ शं न॑ उरू॒ची भ॑वतु स्व॒धाभि॑: ।
शं रोद॑सी बृह॒ती शं नो॒ अद्रि॒: शं नो॑ दे॒वानां॑ सु॒हवा॑नि सन्तु ॥ ३ ॥

---

१ A B^h D सुयम॑स्तु. Dc सुयम॑स्तु changed to सुयम॑स्य. Cs सुयम॑स्य changed to सुयम॑स्तु. P^2 °यम॑स्तु ।. We with C K R S^m V P J. २ A B^h उरुची. We with C D K K^m R S^m V Cs Dc.

---

1 S′ om. अथ वा षण सं°. 2 S′ °मय° for °यम°. 3 S′ om. °सत्या°. 4 S′ पातंजलं.

शम् । नः । धाता । शम् । ऊं इति । धर्ता । नः । अस्तु । शम् । नः । उरूची । भवतु । स्वधाभिः ।

शम् । रोदसी इति । बृहती इति । शम् । नः । अद्रिः । शम् । नः । देवानाम् । सुऽहवानि । सन्तु ॥ ३ ॥

धाता विधाता सर्वस्य देवः नः अस्माकं शम् अस्तु । धर्ता विधारयिता पुण्यपापानाम् वरुणः शम् एव नः अस्तु । उरूची विस्तीर्णगमना विवर्तगमना[1] वा पृथिवी कथ्यते । स्वधाभिः अन्नैः सह नः अस्माकं शं भवतु । बृहती बृहत्यौ रोदसी द्यावापृथिव्यौ शं भवताम्[2] । अद्रिः पर्वतः[3] शं नो भवतु । नः अस्मदीयानि देवानां सुहवानि सुष्टुतयः शं सन्तु ॥

चतुर्थी ॥

शं नो अग्निर्ज्योतिरनीको अस्तु शं नो मित्रावरुणावश्विना शम् ।
शं नः सुकृतां सुकृतानि सन्तु शं न इषिरो अभि वातु वातः ॥ ४ ॥

शम् । नः । अग्निः । ज्योतिःऽअनीकः । अस्तु । शम् । नः । मित्रावरुणौ । अश्विना । शम् ।

शम् । नः । सुऽकृताम् । सुऽकृतानि । सन्तु । शम् । नः । इषिरः । अभि । वातु । वातः ॥ ४ ॥

ज्योतिरनीकः ज्योतींषि अनीके मुखे यस्य स तादृशोग्निः अङ्गनादिगुणयुक्तो देवः नः अस्माकं शम् अस्तु । मित्रावरुणौ नः शं भवताम् । अश्विना अश्विनौ शं स्ताम् । सुकृतां पुण्यकर्मणाम् । ⌛ "सुकर्मपाप°" इति क्विप् प्रत्ययः ⌛ । सुकृतानि सुष्ठु कृतानि पुण्यानि नः शं सन्तु । इषिरः गमनशीलो वातः वायुः शम् शान्त्यर्थं नः अभि वातु अस्मान् अभिलक्ष्य प्रवातु ॥

१ PP̊J ऊरुची ।. २ P वातु ।. We with P̊J.

1 S′ विवभि° for विवर्त°, the emendation being conjectural. 2 S′ भवाम्. 3 S′ पूर्वतः.

पञ्चमी ॥

शं नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो अस्तु ।
शं न ओषधीर्वनिनो भवन्तु शं नो रजसस्पतिरस्तु जिष्णुः ॥ ५ ॥

शम् । नः । द्यावापृथिवी इति । पूर्वऽहूतौ । शम् । अन्तरिक्षम् । दृशये । नः । अस्तु ।

शम् । नः । ओषधीः । वनिनः । भवन्तु । शम् । नः । रजसः । पतिः । अस्तु । जिष्णुः ॥ ५ ॥

द्यावापृथिवी द्यावापृथिव्यौ पूर्वहूतौ देवानां प्रथमस्तोत्रार्थम् । यद्वा पूर्वे पूर्वं जाता देवा हूयन्ते इज्यन्ते आहूयन्ते[1] वेति पूर्वहूतिर्यज्ञः[2] तत्र शं नः स्ताम् । अन्तरिक्षम् मध्यमलोकः दृशये दर्शनाय शं नो अस्तु । ओषधीः ओषध्यः वनिनः वनरूपसमुदायिनो वृक्षाश्च शं नो भवन्तु । रजसः लोकस्य पतिः पालकः जिष्णुः जयशील इन्द्रः शं नोस्तु ॥

षष्ठी ॥

शं न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुणः सुशंसः ।
शं नो रुद्रो रुद्रेभिर्जलाषः शं नस्त्वष्टा ग्नाभिरिह शृणोतु ॥ ६ ॥

शम् । नः । इन्द्रः । वसुऽभिः । देवः । अस्तु । शम् । आदित्येभिः । वरुणः । सुऽशंसः ।

शम् । नः । रुद्रः । रुद्रेभिः । जलाषः । शम् । नः । त्वष्टा । ग्नाभिः[*2] । इह । शृणोतु ॥ ६ ॥

इन्द्रो देवः वसुभिः एतत्संज्ञकैर्देवैः सार्धं नः अस्माकं शम् अस्तु । सुशंसः शोभनस्तुतिर्वरुणः आदित्येभिः आदित्यैः सार्धं शं नोस्तु । जलाषः । सुखनामैतत् । जलाषः[3] सुखं तद् अस्यास्तीति । ॥अर्शआदित्वाद् अच् प्रत्ययः॥ । सुखकरो रुद्रो रुद्रेभिः रुद्रैः सार्धं शं

१ B[h] विष्णुः. २ P P[2] J अग्नाभिः ।.

1 S' आह्वयंते. 2 S' देवहूति° for पूर्वहूति°. 3 S' omits षः in जलाषः°.

नोस्तु। त्वष्टा सर्वप्राणिनां रूपाणि विकुर्वन् देवः ग्नाभिः देवपत्नीभिः सार्धं शं नोस्तु। इह अस्मिन् कर्मणि शृणोतु च। नः स्तोत्रम् इति शेषः॥

सप्तमी॥

शं नः सोमो भवतु ब्रह्म शं नः शं नो ग्रावाणः शमु सन्तु यज्ञाः।
शं नः स्वरूणां मितयो भवन्तु शं नः प्रस्वः[1] शम्वस्तु वेदिः॥ ७॥

शम्। नः। सोमः। भवतु। ब्रह्म। शम्। नः। शम्। नः। ग्रावाणः।
शम्। ऊं इति। सन्तु। यज्ञाः।
शम्। नः। स्वरूणाम्। मितयः। भवन्तु। शम्। नः। प्रऽस्वः[2]। शम्। ऊं इति। अस्तु। वेदिः॥ ७॥

सोमः लतारूपः अभिषूयमाणः शं नोस्तु। ब्रह्म स्तोत्रशस्त्रात्मकं शं नोस्तु। ग्रावाणः अभिषवसाधनभूताः शं नः सन्तु। यज्ञाः सोमनिर्वर्त्याः क्रतवः शम् एव सन्तु। स्वरूणाम्। ॥लुप्तमत्वर्थीयः॥। स्वरुमतां यूपानां मितयः उन्मानानि शं नो भवन्तु। प्रस्वः प्रकर्षेण सूयमाना जायमाना ओषधयः चरुपुरोडाशसंपादिकाः शं नः सन्तु। ॥प्रस्व इति। प्रपूर्वात् सूयतेः क्विप्। कृदुत्तरपदप्रकृतिस्वरेण अन्तोदात्तः। ततः परस्य जसः "उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्य" इति स्वरितत्वम्॥। उशब्दः अवधारणे। वेदिः शमेवास्तु। ॥"मय उञो वो वा" इति उशब्दस्य वकारः॥॥

अष्टमी॥

शं नः सूर्य उरुचक्षा उदेतु शं नो भवन्तु प्रदिशश्चतस्रः।
शं नः पर्वता ध्रुवयो भवन्तु शं नः सिन्धवः शमु सन्त्वापः॥ ८॥

शम्। नः। सूर्यः। उरुऽचक्षाः। उत्। एतु। शम्। नः। भवन्तु। प्रऽदिशः। चतस्रः।
शम्। नः। पर्वताः। ध्रुवयः। भवन्तु। शम्। नः। सिन्धवः। शम्। ऊं इति। सन्तु। आपः॥ ८॥

---

[1] A B^h C R S^m Cs ३ for १. We with D K K^m V Dc. [2] P प्रऽस्वाः.

उरुचक्षाः विस्तीर्णतेजाः उरुभिर्बहुभिर्दृश्यमानो वा । "असनयोः प्रतिषेधो वक्तव्यः" इति ख्याञादेशाभावः । सूर्यो नः अस्माकं शम् शान्त्यर्थम् उदेतु ॥ चतस्रः प्रदिशः महादिशः शं नो भवन्तु ॥ ध्रुवयः ध्रुवाः । ध्रु स्थैर्ये । औणादिकः किप्रत्ययः । उवङ् आदेशः । स्थिराः पर्वताः शं नो भवन्तु ॥ सिन्धवः स्यन्दमाना नद्यः नः शं सन्तु । शम् एव सन्तु आपः ॥

नवमी ॥

शं नो अदितिर्भवतु व्रतेभिः शं नो भवन्तु मरुतः स्वर्काः ।
शं नो विष्णुः शमु पूषा नो अस्तु शं नो भवित्रं शम्वस्तु वायुः ॥ ९ ॥

शम् । नः । अदितिः । भवतु । व्रतेभिः । शम् । नः । भवन्तु । मरुतः । सुऽअर्काः ।
शम् । नः । विष्णुः । शम् । ऊं इति । पूषा । नः । अस्तु । शम् । नः । भवित्रम् । शम् । ऊं इति । अस्तु । वायुः ॥ ९ ॥

अदितिः अखण्डनीया देवमाता व्रतेभिः व्रतैः कर्मभिः सार्धं नः अस्माकं शं भवतु[1] । स्वर्काः । अर्कोऽर्चतेः स्तुतिकर्मणः इति यास्कः । सुष्टुतयो मरुतः नः शं भवन्तु । शं नोस्तु विष्णुः । शम् एव पूषा नो अस्तु । भवित्रम् भुवनम् उदकम् अन्तरिक्षं वा शं नोस्तु । "अर्तिलूधूसू[खन]सह°" इति विहित इत्रप्रत्ययो भवतेरपि व्यत्ययेन उत्पन्नः । उशब्दः अवधारणे । वायुः शम् शान्त्यर्थमेवास्तु । "मय उञो वो वा" इति उञो वकारादेशः ॥

दशमी ॥

शं नो देवः सविता त्रायमाणः शं नो भवन्तूषसो विभातीः ।
शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्य पतिरस्तु शंभुः ॥ १० ॥

१ B[h] S[m] C मरुत. We with D K K[m] R V Dc Cs.

1 S' भवंतु.

शम्। नः। देवः। सविता। त्रायमाणः। शम्। नः। भवन्तु। उषसः। विऽभातीः।

शम्। नः। पर्जन्यः। भवतु। प्रऽजाभ्यः। शम्। नः। क्षेत्रस्य। पतिः। अस्तु। शम्ऽभुः॥ १०॥

त्रायमाणः रक्षन् भयेभ्यः सविता सर्वस्य प्रेरको देवः नः शं भवतु। विभातीः विभात्यो व्युच्छन्त्यः। "वा छन्दसि" इति पूर्वसवर्णदीर्घः। उषसः उषोभिमानिन्यो देवताः नः शं भवन्तु। पर्जन्यः वृष्टिप्रदो नः अस्माकं प्रजाभ्यः [शं भवतु]। शंभुः सुखस्य भावयिता क्षेत्रस्य पतिः।

रुद्रं क्षेत्रपतिं प्राहुः केचिद्[1] अग्निम् अथापरे।
स्वतन्त्र एवं[2] वा कश्चित् क्षेत्रस्य पतिरुच्यते॥

एतत्संज्ञको देवः नः अस्माकं शम् शान्त्यै अस्तु भवतु। "विप्रसंभ्यो ड्वसंज्ञायाम्" इति विप्रसमुपपदाद् भवतेर्विहितो डुप्रत्ययः शंपूर्वादपि व्यत्ययेन भवति॥

[इति] द्वितीयेनुवाके प्रथमं सूक्तम्॥

"शं नः सत्यस्य" इति सूक्तस्य रात्रीकल्पादिषु शान्त्यर्थजपे पूर्वसूक्तेन सह उक्तो विनियोगः॥

तत्र प्रथमा॥

शं नः सत्यस्य पतयो भवन्तु शं नो अर्वन्तः शमु सन्तु गावः।
शं न ऋभवः सुकृतः सुहस्ताः शं नो भवन्तु पितरो हवेषु॥ १॥

शम्। नः। सत्यस्य। पतयः। भवन्तु। शम्। नः। अर्वन्तः। शम्। ऊं इति। सन्तु। गावः।

शम्। नः। ऋभवः। सुऽकृतः। सुऽहस्ताः। शम्। नः। भवन्तु। पितरः। हवेषु॥ १॥

सत्यस्य पतयः पालयितारः सत्यशीला देवाः नः अस्माकं शम् शान्त्यै

1 S′ om. के॰. 2 S′ एवं.

भवन्तु । अर्वन्तः अश्वाः शं नो भवन्तु । शम् एव सन्तु गावः धेनवः । सुकृतः सुकृतकर्माणः कर्मणैव देवत्वं प्राप्ताः सुहस्ताः शोभनहस्ताश्चमसतक्षणादिषु कुशलहस्ता ऋभवः एतत्संज्ञकाः कर्मदेवाः । तथा च दाशतय्याम् आर्भवसूक्ते समाम्नायते । "एकं वि चक्र चमसं चतुर्वयं निश्चर्मणो गाम् अरिणीत धीतिभिः" इति [ऋ० ४.३६.४] । "विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वम् आनशुः" इति [ऋ०१.११०.४] ॥ "ऋभवो वै देवेषु तपसा सोमपीथम् अभ्यजयन्[1]" इत्यादिना ऐतरेयब्राह्मणे [३.३०] ऋभूणां मनुष्याणामेव देवैः सह सोमपानं विद्यत इति प्रपञ्चितम् । अत एव अत्र सुकृत इत्युक्तम् । एवंविधमहिमान ऋभवो देवा नः अस्माकं शम् शान्त्यै दुरितनिवृत्त्यै भवन्तु । पितरो हवेषु स्तोत्रेषु । ⌛विषयसप्तमी⌛ । यज्ञेषु वा नः अस्माकं शं भवन्तु ॥

द्वितीया ॥

शं नो॑ दे॒वा वि॒श्वदे॑वा भवन्तु॒ शं सर॑स्वती स॒ह धी॒भिर॑स्तु ।
शम॑भि॒षाच॒ः शमु॑ राति॒षाच॒ः शं नो॑ दि॒व्याः पार्थि॑वा॒ः शं नो॒ अप्या॑ः ॥ २ ॥

शम् । न॒ः । दे॒वाः । वि॒श्वऽदे॑वाः । भ॒व॒न्तु॒ । शम् । सर॑स्वती । स॒ह । धी॒भिः । अ॒स्तु॒ ।
शम् । अ॒भि॒ऽसाच॑ः[1] । शम् । ऊं॒ इति॑ । रा॒ति॒ऽसाच॑ः । शम् । न॒ः । दि॒व्याः । पार्थि॑वाः । शम् । न॒ः । अप्या॑ः ॥ २ ॥

विश्वदेवाः । अत्र दीव्यतिः स्तुत्यर्थः । बहुस्तोत्रका देवा इन्द्रादयः । यद्वा देवा इति विश्वदेवानां विशेषणम् । दीव्यन्तो विश्वे सर्वे देवाः ⌛पूर्वस्मिन् पक्षे "बहुव्रीहौ विश्वं संज्ञायाम्[2]" इति पूर्वपदान्तोदात्तत्वम् । द्वितीयस्मिन् पक्षे तत्पुरुषपक्षे पूर्वपदप्रकृतिस्वरत्वाद्[3] आद्युदात्तत्वेन भवितव्यम् । अत्र "परादिश्छन्दसि बहुलम्" इति पूर्वपदान्तोदात्तत्वम्⌛ । दे-

१ P अभि॒ऽसा॒चः ।. We with P[2] J.

1 S′ अभ्युदयन्. 2 S′ विश्वसंज्ञाया°. 3 S′ स्वरत्वं. The emendation is conjectural.

वाः नः अस्माकं शं भवन्तु। सरस्वती वर्णपदवाक्यात्मना सरणवती वाग्देवता धीभिः स्तुतिभिः कर्मभिर्वा सह शम् अस्तु। अभिषाचः। ⌛षच समवाये⌛। अभिषचमानाः यज्ञम् अभितः समवयन्तो देवाः शं भवन्तु। रातिषाचः रातये दानार्थं संगच्छमाना देवाः शम् एव भवन्तु। रातिषाचः अभिषाचः इति पदद्वयेन विश्वे देवा उच्यन्ते। तथा च दाशतय्यां वैश्वदेवसूक्ते समाम्नायते। "विश्वे देवाः सह धीभिः पुरंध्या मनोर्यजत्रा अमृता ऋतज्ञाः। रातिषाचो अभिषाचः स्वर्विदः स्वर्गिरो ब्रह्म सूक्तं जुषेरत" इति [ऋ° १०. ६५. १४]। दिव्याः दिवि भवा देवाः पार्थिवाः पृथिव्यां भवाः। ⌛उत्सादित्वाद् अञ् प्रत्ययः⌛। पार्थिवा देवाश्च नः अस्माकं शं भवन्तु। अप्याः अप्सु अन्तरिक्षे [भवाः]। ⌛"भवे छन्दसि" इति यत्। "यतोऽनावः" इति आद्युदात्तत्वम्⌛। ते शं भवन्तु॥

तृतीया॥

शं नो अज एकपाद् देवो अस्तु शमहिर्बुध्न्य१ः शं समुद्रः।
शं नो अपां नपात् पेरुरस्तु शं नः पृश्निर्भवतु देवगोपा॥ ३॥

शम्। नः। अजः। एकऽपात्। देवः। अस्तु। शम्। अहिः। बुध्न्यः। शम्। समुद्रः।
शम्। नः। अपाम्। नपात्। पेरुः। अस्तु। शम्। नः। पृश्निः। भवतु। देवऽगोपा॥ ३॥

अजः अजायमानः एकपात् एकः पादः स्थावरजङ्गमात्मको यस्य। "पादोस्य विश्वा भूतानि" इति श्रुतेः [१९. ६. ३]। ⌛"संख्यासुपूर्वस्य" इति पादस्य लोपः समासान्तः⌛। अजएकपाच्छब्दाभ्याम्[1] एक एव देवोभिधीयते। अजैकपान्नामको देवः नः शम् अस्तु। अहिर्बुध्न्यः अहिः अहन्तव्यः बुध्न्यः बुध्नं[2] मूलं तदर्हः। अत्रापि पर्ववद्

१ $A^{h}$ B C $S^{m}$ ३ for १. We with K $K^{m}$ V Dc Cs.

1 S′ अजैक° for अजएक°. 2 S′ बुधं.

अहिर्बुध्न्य इति पदद्वयम् एकदेवताप्रतिपादकम् । अहिर्बुध्न्यनामको देवः नः शम् अस्तु । समुद्रः समुद्द्रवन्ति आपः अस्माद् इति समुद्रः शम् अस्तु । अपां नपात् अपाम् उदकानां न पातयिता । पातयतेः क्विप् । "नभ्राण्नपात्०" इति नलोपाभावो निपातितः । अपांनपात्संज्ञको देवो नः शम् शान्त्यै पेरुः पारयिता दुःखेभ्यो भवतु । पृश्निः मरुतां माता देवगोपा देवा गोपयितारो यस्याः सा पृश्निः नः शं भवतु । गुपू रक्षणे । क्विप् । "गुपूधूपविच्छिपणिपनिभ्य आयः" इति आयप्रत्ययः । अतोलोपयलोपौ[1] । देवा गोपा यस्या इति बहुव्रीहौ पूर्वपदप्रकृतिस्वरः ॥

चतुर्थी ॥

आदित्या रुद्रा वसवो जुषन्तामिदं ब्रह्म क्रियमाणं नवीयः ।
शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः ॥ ४ ॥

आदित्याः । रुद्राः । वसवः । जुषन्ताम् । इदम् । ब्रह्म । क्रियमाणम् । नवीयः ।
शृण्वन्तु । नः । दिव्याः । पार्थिवासः । गोऽजाताः । उत । ये । यज्ञियासः ॥ ४ ॥

आदित्याः अदितेः पुत्रा द्युस्थाना देवाः । "दित्यदित्यादित्यपत्युत्तरपदात्०" इति ण्यः । रुद्राः रोदयितारः अन्तरिक्षस्थाना देवाः वसवः पार्थिवाः जुषन्ताम् सेवन्ताम् । किं तत् । नवीयः नवतरम् इदम् इदानीं क्रियमाणं ब्रह्म स्तोत्रं जुषन्ताम् इत्यन्वयः ॥ अन्ये च नः अस्मदीयं ब्रह्म स्तोत्रं शृण्वन्तु । के ते । दिव्याः दिवि भवाः पार्थिवासः पार्थिवाः । "आज्जसेरसुक्" । पृथिवीस्थानाः गोजाताः गोः पृश्नेर्जाता मरुतो देवाः । उत अपि च यज्ञियासः यज्ञार्हा ये देवास्तेपि नः स्तोत्रं शृण्वन्तु ॥

पञ्चमी ॥

ये देवानामृत्विजो यज्ञियासो मनोर्यजत्रा अमृता ऋतज्ञाः ।

---

[1] S' अतोलोपयतोलोपौ.

ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

ये । देवानाम् । ऋत्विजः । यज्ञियासः । मनोः । यजत्राः । अमृताः । ऋतऽज्ञाः ।

ते । नः । रासन्ताम् । उरुऽगायम् । अद्य । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥

देवानाम् "शं न इन्द्राग्नी" इत्यादिसूक्तद्वयप्रतिपादितानाम् [ऋत्विजः] ऋतौ काले यष्टारः । "ऋत्विग्दधृक्०" इत्यादिना ऋत्विक्शब्दो निपातितः । यज्ञियासः यज्ञार्हा मनोः प्रजापतेः यजत्राः यजनीया यजनार्हा अमृताः अमरणधर्माणः ऋतज्ञाः ऋतं सत्यभूतं[1] यज्ञं जानन्तो ये देवाः सन्ति ते देवाः अद्य इदानीं नः अस्माकम् उरुगायम् प्रभूतां कीर्तिं रासन्ताम् प्रयच्छन्तु । रासतिर्दानकर्मा । कै गै रै शब्दे । अस्मात् कर्मणि घञ् । आतो युगागमः ॥ हे देवाः यूयं नः अस्मान् सदा सर्वदा स्वस्तिभिः । स्वस्तीति अविनाशिनाम । क्षेमकरणैरुपायैः पात रक्षत[2] । सुपूर्वाद् अस्तेः क्तिनि भूभावाभावश्छान्दसः ॥

षष्ठी ॥

तदस्तु मित्रावरुणा तदग्ने शं योरस्मभ्यमिदमस्तु शस्तम् ।
अशीमहि गाधमुत प्रतिष्ठां नमो दिवे बृहते सादनाय ॥ ६ ॥

तत् । अस्तु । मित्रावरुणा । तत् । अग्ने । शम् । योः । अस्मभ्यम् । इदम् । अस्तु । शस्तम् ।

अशीमहि । गाधम् । उत । प्रतिऽस्थाम् । नमः । दिवे । बृहते । सदनाय ॥ ६ ॥

हे मित्रावरुणा मित्रावरुणौ अहोरात्राभिमानिनौ तत् वक्ष्यमाणं फलम् अस्तु । हे अग्ने प्रातःसायंकालाभिमानिन् तत् वक्ष्यमाणं फलम्

१ C °मुरुगाय°. २ P सादनाय ।. We with P[2] J.

1 S′ सत्यंभूतं. 2 S′ रक्षतु.

अस्तु । किं तत् । शम् रोगाणां शमनम् योः भयाना यावनं पृथक्करणं च इदम् उक्तं फलं शस्तम् प्रशस्तं समीचीनम् अस्मभ्यम् अस्तु । उत अपि च गाधं प्रतिष्ठाम् । गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च । अस्माद् घञ् । प्रतिष्ठां स्थितेरविच्छेदम् । यद्वा गाधं धनलाभं प्रतिष्ठां च क्षेत्रादिरूपं फलम् अशीमहि अश्नुवीमहि । अशू व्याप्तौ । अस्माद् विधिलिङि विकरणस्य लुक् छान्दसः । आशीर्लिङि वा ऊदित्वाद् इडभावः । "छन्दस्युभयथा" इति लिङः सार्वधातुकत्वात् "लिङः सलोपोनन्त्यस्य" इति सकारलोपः । दिवे द्युलोकाय बृहते महते सदनाय सर्वेषां निवासस्थानाय । अधिकरणे ल्युट् । पृथिव्यै [च] नमः नमस्कारोस्तु ॥

[इति] द्वितीयेनुवाके द्वितीयं सूक्तम् ॥

"उषा अप स्वसुः" इति एकर्चस्य सूक्तस्य रात्रिकल्पे शान्त्यर्थजपे "शान्ता द्यौः" इत्यादिसूक्तत्रयेण सह उक्तो विनियोगः ॥

सा खल्वेषा ऋग् एवम् आम्नायते ।

उषा अप[1] स्वसुस्तमः सं वर्तयति[2] वर्तनिं सुजातता[3] ।
अया वाजं देवहितं सनेम मदेम शतहिमाः सुवीराः ॥ १ ॥

उषाः । अप । स्वसुः । तमः । सम् । वर्तयति । वर्तनिम् । सुऽजातता ।
अया । वाजम् । देवऽहितम् । सनेम । मदेम । शतऽहिमाः । सुऽवीराः ॥ १ ॥

उषाः उषःकालाभिमानिनी देवता स्वसुः । यदा उषा अभवत् तदा अनन्तरमेव रात्रिर्भवतीति परस्पराविनाभावेन रात्रिरुषसः स्वसेत्युच्यते । स्वसुः स्वयमेव सारिण्या आगच्छन्त्याः स्वसृभूताया रात्रेः तमः अन्धकारम् अप । गमयतीति योग्यक्रियाध्याहारः । ततः सुजातता सुष्ठु जाता सुजाता तस्या भावः सुजातता । "त्वतलोर्गुणवच-

[1] A D आपुः. B^h C K K^m R S^m V अपुः. Cs अप. P आपः ।. P^2 J अपः ।. We read अप with Dc. [2] D वर्तयत. We with A B^h C K K^m R S^m V Dc Cs. [3] D K^m S^m V Dc P^2 °याततां. We with A B^h R Cs P J.

नस्य" इति पुंवद्भावः । तृतीयाया[1] आकारः । सुजाततया सुष्ठु प्रादुर्भावेन सम्यक् प्रकाशकरणेन वर्तनिम् मार्गं लौकिकं वैदिकं च सं वर्तयति सम्यग् निर्वर्तयति[2] । उषःकाले जाते सर्वेपि प्राणिनः स्वस्वव्यापारकरणाय मार्गं पश्यन्ति वैदिका अपि अग्निहोत्रादिकर्ममार्गं पश्यन्तीत्यर्थः ॥ अया अनया उषसा । सर्वविधीनां छन्दसि विकल्पितत्वाद् अनादेशाभावः । इदमः इद्रूपस्य लोपः । "आङि चापः" इति एत्वे अयादेशः । अनादेशे वा नकारलोपश्छान्दसः । "ऊडिदम्" इति विभक्तेरुदात्तत्वम् । देवहितम् देवैः सम्यगिष्टैर्हितं निहितं दत्तं देवेभ्यो वा हितं वाजम् अन्नं सनेम संभजेमहि लभेमहि । वन षण संभक्तौ । अनन्तरं सुवीराः । वीरः कर्मणि कुशलः पुत्रपौत्रादिः । शोभनपुत्रादिसमेताः सन्तः शतहिमाः । हिमशब्दो हेमन्तर्तुवाची । शतं हिमाः शतसंख्याकान् हेमन्तर्तून् शतं वर्षाणि मदेम हृष्यास्म । "कालाध्वनोः०" इति द्वितीया । माद्यतेः "लिङ्याशिष्यङ्" इति अङ् प्रत्ययः ।

[इति] द्वितीयेनुवाके तृतीयं सूक्तम् ॥

"इन्द्रस्य बाहू" इति चतुर्थं सूक्तम् अप्रतिरथसंज्ञकम् । तस्य "गणावायुष्यवर्चस्यौ[3] तथाप्रतिरथं स्मृतम्[4]" इति शान्तिकल्पे[5] [न०क०२३] "अप्रतिरथं जपित्वा" इति वैतानपरिशिष्टादिषु [च] [वै०३.३, प०६.४] यत्रयत्र अप्रतिरथसंज्ञया विनियोगश्चोद्यते तत्र सर्वत्र अस्य विनियोगोऽवगन्तव्यः ॥

तत्र प्रथमा ॥

इन्द्रस्य बाहू स्थविरौ वृषाणौ चित्रा[1] इमा वृषभौ[2] पारयिष्णू[3] ।
तौ योक्षे[4] प्रथमो योग आगते याभ्यां जितमसुराणां स्व१र्यत्[5] ॥ १ ॥

---

१ So P J. $\overset{2}{\text{P}}$ चित्रा । corrected to चित्राः ।. २ A D K $\overset{m}{\text{K}}$ Cs वृषभो. We with $\overset{h}{\text{B}}$ C V Dc. ३ $\overset{h}{\text{B}}$ पारयिष्णु. We with A C D $\overset{m}{\text{K}}$ R $\overset{m}{\text{S}}$ V Dc Cs. ४ So we with A $\overset{h}{\text{B}}$ C R $\overset{m}{\text{S}}$ V Dc Cs P $\overset{2}{\text{P}}$ J. ५ A R Cs ३ for १. We with K $\overset{m}{\text{K}}$ V Dc.

---

1 S′ तृतीया आकारः. 2 S′ निवर्तयति. 3 S′ °वर्चस्यावृथा for °वर्चस्यौ तथा. The *Nakshatra-Kalpa* (23) reads: गण आयुष्यवर्चस्यतथा° (sic). 4 S′ स्मृतिम्. 5 So S′.

इन्द्रस्य । बाहू इति । स्थविरौ । वृषाणौ । चित्रा । इमा । वृषभौ । पारयिष्णू इति ।
तौ । योक्षे । प्रथमः । योगे । आऽगते । याभ्याम् । जितम् । असुराणाम् । स्वः । यत् ॥ १ ॥

अस्मिन् सूक्ते शत्रुधर्षणसमर्थ इन्द्रः स्तूयते । स हि स्वबाहुभ्यामेव परान् हिनस्तीति तावेव प्रथमं स्तूयेते । स्थविरौ नाम[1] स्थूलौ पुष्टौ[2] महान्तौ वृषाणौ अभिमतफलवर्षकौ । "आप्रयच्छ दक्षिणादोत सव्यात्" इति हि मन्त्रान्तरम् [ ७. २७. ८ ] । शस्त्रास्त्रवर्षकौ वा चित्रौ चायनीयौ सर्वैः श्लाघनीयौ । चायृ पूजानिशामनयोः इत्यस्माद् उत्पन्नश्चित्रशब्द इति यास्को मन्यते [ नि० १२. ६ ] । कटकाङ्गदादिभिराभ[3]रणैर्नानावर्णौ वा इमा[4] इमौ[4] परिदृश्यमानौ वृषभौ । लुप्तोपमम् एतत् । वृषभौ पुंगवाविव दुर्ललितौ पारयिष्णू प्रक्रान्तशत्रुहननकर्म समाप्तिं गमयन्तौ निःशेषं शत्रून् मर्दयन्तौ याविन्द्रस्य परमैश्वर्यसंपन्नस्य देवस्य बाहू विद्येते तौ बाहू प्रथमः सर्वेभ्य उपासकेभ्यः पूर्वभावी सन् यक्षे* पूजयामि प्रोत्साहयामि । यजतेर्लेटि "सिब्बहुलम्०" इति सिप् । "टित आत्मनेपदानाम्०" इति टेरेत्वम् । किमर्थं यजनम् । योगे आगते च । अप्राप्यप्रापणं[5] योगः । प्राप्तस्य परिरक्षणं क्षेमः । अत्र आगतशब्देन क्षेम उच्यते । योगक्षेमार्थं यक्षे[6] इति संबन्धः । याभ्यां बाहुभ्याम् असुराणाम् देवविद्वेषिणां स्वर्यत्* स्वः स्वर्गं तत्र निवासिनो देवान् वा यत् गच्छत्[7] बाधकत्वेन प्राप्नुवत् बलं शारीरं सेनालक्षणं च वीर्यं जितम् पराजितम् । निरस्तम् इत्यर्थः ॥

द्वितीया ॥

आशुः शिशानो वृषभो न भीमो घनाघनः[2] क्षोभणश्चर्षणीनाम्[3] ।

१ See foot-note ४ on the previous page. २ A B^h omit the visarga in °घनः. We with C D K^m R S^m V Dc Cs. ३ A C D S^m क्षोभन°. We with B^h K R V Dc Cs.

1 S′ म for नाम. 2 S′ पुष्टा. 3 S′ कटकांगनादि° for कटकाङ्गदादि°. 4 S′ इमौ इमा इमौ. 5 S′ °प्रापणयोगः for °प्रापणं योगः. 6 S′ यजत for यक्षे. 7 S′ अगच्छत् for गच्छत्.

संक्रन्दनोनिमिष एकवीरः शतं सेना अजयत् साकमिन्द्रः ॥ २ ॥

आशुः । शिशानः । वृषभः । न । भीमः । घनाघनः । क्षोभणः । चर्षणीनाम् । समऽक्रन्दनः । अनिऽमिषः । एकऽवीरः । शतम् । सेनाः । अजयत् । साकम् । इन्द्रः ॥ २ ॥

आशुः शीघ्रकारी व्यापको वा । ꣸ कृवापाजिमिस्वदिसाध्यशूभ्य° [उ॰१.१] इति उण् प्रत्ययः ꣸ । शिशानः तीक्ष्णीभवन्मतिः स्वाभिमतसंपादने व्यग्रः । ꣸ शो तनूकरणे । व्यत्ययेन आत्मनेपदम् । "बहुलं छन्दसि" इति शपः श्लुः । अभ्यासस्य च इत्त्वम् । श्यैङ् गतौ इत्यस्य वा । छान्दसो यलोपः ꣸ । वृषभो न वृषभ इव भीमः भयंकरः घनाघनः हन्ता शत्रूणाम् । ꣸ हन्तेः पचाद्यचि "हन्तेर्घत्वं च" इति द्विर्वचनम् । अभ्यासस्य आगागमः । घत्वं च धात्वभ्यासयोः ꣸ । चर्षणीनाम् मनुष्याणां क्षोभणः क्षोभयिता । ꣸ "कृत्यल्युटः°" इति कर्तरि ल्युट् ꣸ । प्रावृषि वर्षादिना कर्षकादीन् युद्धे परसेना वा विक्षोभयन् संक्रन्दनः युद्धे रिपूणाम् आह्वाता क्रन्दयिता वा स्तनयित्नूनां वा शब्दयिता अनिमिषः अनिमेषचक्षुः । ꣸ मिषतेः "घञर्थे कविधानम्" इति कः । ततो बहुव्रीहौ "नञ्सुभ्याम्" इति अन्तोदात्तत्वम् ꣸ । एकवीरः एकविक्रान्तः असहाय एव कार्यसमर्थः ईदृश इन्द्रः शतम् बह्वीः सेनाः परकीयाः साकम् सहैव एकप्रकारेण अजयत् जयति । तस्मात् तमेवाश्रयत इष्टसिद्ध्यर्थम् इति शेषः ॥

तृतीया ॥

संक्रन्दनेनानिमिषेण जिष्णुनायोध्येन दुश्च्यवनेन धृष्णुना ।
तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥ ३ ॥

१ P P क्षोभनः ।. २ A D R S जिष्णुनायोध्येन दुश्चवनेन. B जिष्णुनायोध्यैन दुश्चवनेन. C जिष्णुनायोध्येन दुश्चवनेन. Cs जिष्णुनायोध्यैन दुश्च्यवनेन. We with K K V Dc.

1 S' सायाति for °साध्यशूभ्य° इति. 2 S' तीक्ष्णभव°. 3 S' एकविक्रीतः for एकविक्रान्तः. 4 S' तस्मात्तमेवयमाश्रित्य for तस्मात् तमेवाश्रयत.

समऽक्रन्दनेन । अनिऽमिषेण । जिष्णुना । अयोध्येन । दुःऽच्यवनेन । धृष्णुना ।
तत् । इन्द्रेण । जयत । तत् । सहध्वम् । युधः । नरः । इषुऽहस्तेन । वृष्णा ॥ ३ ॥

संक्रन्दनेनानिमिषेण व्याख्यातौ । संक्रन्दयित्रा अनिमिषचक्षुषा जिष्णुना जयशीलेन योध्येन युद्धसंसक्तेन । युध संप्रहारे । "ऋहलोर्ण्यत्" । "शकि लिङ् च" इति शक्यार्थे कृत्यप्रत्ययः । दुश्च्यवनेन [दुःखेन] च्यावयितुं शक्येन अविचाल्येन । "छन्दसि गत्यर्थेभ्यः" इति युच् । धृष्णुना प्रसहनशीलेन इषुहस्तेन । इषवो बाणा हस्ते यस्येति बहुव्रीहौ "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ" इति परनिपातः । वृष्णा वर्षित्रा कामानाम् इन्द्रेण यथोक्तगुणसंपन्नेन सहायेन हे युधः योद्धारः हे नरः मनुष्याः । "विभाषितं विशेषवचने बहुवचनम्" इति पूर्वस्य आमन्त्रितस्य अविद्यमानवत्त्वनिषेधाद् द्वितीयं निहन्यते । योद्धारः शूराः यूयं तज्जयत । जेतव्यम् इति सामर्थ्याल्लभ्यते । किं च तेनैव इन्द्रेण सहायेन तत् सहध्वम् अभिभवनीयम् इति अभिभवत ॥

चतुर्थी ॥

स इषुहस्तैः स निषङ्गिभिर्वशी संस्रष्टा स युध इन्द्रो गणेन ।
संसृष्टजित् सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥ ४ ॥

सः । इषुऽहस्तैः । सः । निषङ्गिऽभिः । वशी । समऽस्रष्टा । सः । युधः । इन्द्रः । गणेन ।

१ P J °च्यवनेन ।. We with P[2]. २ P नरः ।. J नरः । changed to नरः ।. We with P[2].
३ A B[h] C K K[m] S[m] V संसृष्टा. Dc संस्रष्टा changed to संसृष्टा. We with D R Cs. ४ A °शर्ध्यू°. S[m] °शर्ध्यू°. We with B[h] C D K K[m] R V Dc Cs. ५ C B[h] °धन्वाः. We with A D R K K[m] S[m] V Dc Cs. ६ A B[h] K K[m] C D R S[m] V Dc Cs P P[2] J all read: अस्तात्. We with Sâyaṇa. ७ P P[2] J °सृष्टा ।.

1 S' अनिमिषे°. 2 S' युधे. 3 S' युधं.

सं॒सृ॒ष्ट॒ऽजित् । सो॒म॒ऽपाः । बा॒हु॒ऽश॒र्धी । उ॒ग्रऽध॑न्वा । प्रति॑ऽहिताभिः । अ॒स्ता ॥ ४ ॥

इषुहस्तैः इषवो हस्तेषु येषां तैरुपलक्षितः स इन्द्रः निषङ्गिभिः इषुधियुक्तैर्धन्विभिः । निषङ्गशब्देन सर्वदा हस्ते संबध्यमानो गृह्यमाणः खड्गादिरुच्यते । तद्वद्भिः सहितः स इन्द्रः वशी वशैः वश्यैर्वशवर्तिभिरनुचरैस्तद्वान् स च इन्द्रः संस्रष्टा । संयोजनशीलः । केन संस्रष्टा । गणेन । सामर्थ्यात् परकीयो गणो विवक्ष्यते । परकीयेन सैन्येन एकीभवनशीलः । किं कुर्वन् । युधः युध्यमानः । ⌛इगुपधलक्षणः कः⌛ । यद्वा युधः युद्धाद्धेतोः । ⌛"सावेकाचः°" इति विभक्तेरुदात्तत्वम्⌛ । न केवलं संस्रष्टा अपि तु संसृष्टजित् संसृष्टानां संघीभूतानाम् अभिमुखम् आगतानां वा जेता सोमपाः सोमस्य पाता बाहुशर्धी । शर्धो बलम् । बाहुबलवान् । ⌛मत्वर्थीय इनिप्रत्ययः⌛ । यद्वा । ⌛शृधु प्रसहने⌛ । बाहुभ्यां शर्धयति अभिभवतीति बाहुशर्धी । ⌛"सुप्यजातौ°" इति णिनिः⌛ । उग्रधन्वा भयंकरधनुर्युक्तः । ⌛"धनुषश्च" इति अनङ् समासान्तः⌛ । प्रतिहिताभिः परशरीरे प्रेरिताभिरिषुभिः अस्ता परेषां क्षेप्ता मारयिता । ⌛असु क्षेपणे । तृचि "रधादिभ्यश्च" इति इड्विकल्पः⌛ । एतादृशगुणोपेत इन्द्रो वर्तते । तादृशेन इन्द्रेण जयत तत् सहध्वम् इति ॥

पञ्चमी ॥

ब॒ल॒वि॒ज्ञा॒यः स्थवि॑रः प्रवी॑रः सह॑स्वान् वा॒जी सह॑मान उ॒ग्रः ।
अ॒भिवी॑रो अ॒भिष॑त्वा सहो॒जिज्जैत्र॑मिन्द्र॒ रथ॒मा ति॑ष्ठ गो॒विद॑न् ॥ ५ ॥

ब॒ल॒ऽवि॒ज्ञा॒यः । स्थवि॑रः । प्रऽवी॑रः । सह॑स्वान् । वा॒जी । सह॑मानः । उ॒ग्रः ।

१ P P[2] स॒म॒ऽपा । J सो॒म॒ऽपा । २ P ब॒हु॒° । ३ P P[2] J अस्तात् । We with the Saṁhitâ. ४ A D R Cs °वि॒ज्ञा॒य. Dc °वि॒ज्ञा॒य changed to °वि॒ज्ञा॒यः. We with B[h] C K K[m] R S[m] V. ५ A C D S[m] Cs अ॒भिस॑त्वा. Dc अ॒भिस॑त्वा changed to अ॒भिष॑त्वा. We with B[h] K K[m] R V. ६ Cs गो॒वित् changed to गो॒विद॑न्.

1 S′ इषु for इषवो. 2 S′ हस्त. 3 S′ °भवति for भवतीति.

अभिऽवीरः । अभिऽसत्वा । सहःऽजित् । जैत्रम् । इन्द्र । रथम् । आ । तिष्ठ । गोऽविदन् ॥ ५ ॥

बलविज्ञायः परस्य बलं विजानातीति । "कर्मण्यण्" । यद्वा अयं मम बलम् इति सर्वैर्बलत्वेन विज्ञायत इति बलविज्ञायः । सर्वस्य बलभूत[1] इत्यर्थः । "अकर्तरि च कारके संज्ञायाम्" इति कर्मणि घञ् । स्थविरः महान् पुरातनो वा प्रवीरः प्रकर्षेण वीरः शूरः । यद्वा प्र[2]गतान् परागतबलानपि वीरयतीति प्रवीरः सहस्वान् अभिभवनशक्तिमान् वाजी अन्नवान् वेगवान् वा सहमानः अभिभवन् शत्रून् उग्रः उद्गूर्णबलः अभिवीरः अभितो वीरा बलवन्तः अनुचरा यस्य सः अभिषत्वा अभिषदनशीलः शत्रुसेनाभिगमनशीलः । सदेः क्वनिप् । दकारस्य तकारः । "सदिरप्रतेः" इति षत्वम् । [यद्वा सत्वनो वीरान् अभिभवतीति अभिसत्वा] । सांहितिको मूर्धन्यादेशः । सहोजित् शात्रवीयबलस्य जेता गोविदन् गाः[3] परकीया धेनूः स्वकीयत्वेन जानन् परगवीः स्वाधीनाः कुर्वन् । वेत्तेः शतृप्रत्ययः । "पूरणगुणसुहित°" इति षष्ठीसमासप्रतिषेधो न भवति । छन्दसि सर्वविधीनां विकल्पितत्वात् । हे इन्द्र एवंगुणविशिष्ट स त्वं [जैत्रम्] जयशीलं रथम् आ तिष्ठ अस्मदर्थं रथम् आरोढुम् अर्हसि ॥

षष्ठी ॥

इमं वीरमनु हर्षध्वमुग्रमिन्द्रं सखायो अनु सं रभध्वम् ।
ग्रामजितं गोजितं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ॥ ६ ॥

इमम् । वीरम् । अनु । हर्षध्वम् । उग्रम् । इन्द्रम् । सखायः । अनु । सम् । रभध्वम् ।
ग्रामऽजितम् । गोऽजितम् । वज्रऽबाहुम् । जयन्तम् । अज्म । प्रऽमृणन्तम् । ओजसा ॥ ६ ॥

हे सखायः समानख्यानाः समानबुद्धिकर्माणो योद्धारो यूयम् इमं

1 S' बलभूतम्. 2 S' om. प्र°. 3 S' गोः परकीया धेनुः.

शत्रुधर्षणसमर्थं वीरम् विक्रान्तम् अत एव उग्रम् उद्गूर्णबलम् इन्द्रम् अनु हर्षध्वम् । ए[1]नं वीरम् अग्रतः कृत्वा यूयं पश्चाद् उत्साहिनो भवत । ⧖ हृष तुष्टौ । "कर्तरि शप्" इति शबेव जातः शबेवोत्पन्नः । तस्यापवादत्वेन श्यनो[2]ऽनुत्पत्तिश्छान्दसी आत्मनेपदं च ⧖ । तथा इन्द्रम् अनु सं रभध्वम् शत्रुहननाय संरब्धम् उद्योगवन्तम् इन्द्रम् अनु स्वयमपि उद्योगिनो भवत । ⧖ रभ राभस्ये ⧖ । इन्द्रं विशिनष्टि । ग्रामजितम् शत्रुसंघस्य जेतारम् । अथ वा ग्रामस्य शत्रुपु[3]रस्य जेतारम् [ गोजितम् ] शत्रुगवीनां जेतारं वज्रबाहुम् वज्रं बाहौ यस्येति । ⧖ "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ" इति परनिपातः ⧖ । जयन्तं शत्रून् अज्म अज[4]नशीलम् । ⧖ सुपो लुक् ⧖ । यद्वा अज्म अजन्ति अत्र योद्धार इति युद्धस्थानम् । ⧖ अधिकरणे मनिन् प्रत्ययः ⧖ । युद्धस्थानं जयन्तम् इति । ओजसा वीर्येण प्रमृणन्तम् प्रकर्षेण हिंसन्तं परसैन्यानि । ⧖ मृण हिंसायाम् । तौदादिकः ⧖ ॥

सप्तमी ॥

अभि गोत्राणि सहसा गाहमानोदाय उग्रः शतमन्युरिन्द्रः ।
दुश्च्य[1]वनः पृतनाषाडयोध्यो[2]ऽस्माकं सेना अवतु प्र युत्सु ॥ ७ ॥

अभि । गोत्राणि । सहसा । गाहमानः । अदा[3]यः । उग्रः । शतऽमन्युः । इन्द्रः ।

दुःऽच्यवनः । पृतनाषाट् । अयोध्यः[4] । अस्माकम् । सेनाः । अवतु । प्र । युत्ऽसु ॥ ७ ॥

गोत्राणि गोः उदकस्य त्रा[5]णि त्रायकाणि[5] युद्धक्षेत्राणि वा सहसा ब-

१ A B^h C D दुश्च्यवनः. Dc दुश्च्यवनः changed to दुश्च्यवनः. We with K K^m R S^m V Cs.
२ K D V १ for ३. We with B^h C K^m R S^m Dc Cs. ३ J अदयः ।. P अदयः ।. We with P^2.
४ P^2 J अयोध्यः ।. We with P.

1 S' येन. 2 S' नोत्पत्ति° for °ऽनुत्पत्ति°. 3 S' °परस्य. 4 S' जनन°. 5 S' त्रायकाण्यत्राणि.

लेन अभि गाहमानः आभिमुख्येन प्रविशन् अदायः निर्दयो निग्राह्ये-ष्वविद्यमानकरुणः । ⧗दय दानगतिरक्षणहिंसादानेषु । अस्माद् घञि बहुव्रीहौ "नञ्सुभ्याम्°" इति अन्तोदात्तत्वम्⧗ । उग्रः उद्गूर्णबलो वीरः शतमन्युः बहुविधक्रोधः दुश्च्यवनः च्यावयितुं युद्धाङ्गणाद् अपसा-रयितुम् अशक्यः । ⧗"छन्दसि गत्यर्थेभ्यः" इति युच्⧗ । पृ-तनाषाट् परसेनानाम् अभिभविता । ⧗"छन्दसि सहः" इति ण्विः । "सहेः साडः सः" इति मूर्धन्यादेशः⧗ । अयोध्यः योद्धुं संप्रहर्तुम् अशक्यः ईदृश इन्द्रः युत्सु युद्धेषु । ⧗संपदादिलक्षणः क्विप्⧗ । अ-स्माकं सेनाः प्रावतु प्रकर्षेण रक्षतु ॥

अष्टमी ॥

बृह॑स्पते॒ परि॑ दीया॒ रथे॑न॑ [1] रक्षो॒हामित्रा॑ँ [2] अप॒बाध॑मानः ।
प्र॒भ॒ञ्जञ्छत्रू॑न् [3] प्रमृ॒णन्न॒मित्रा॑न॒स्माक॑मेध्यवि॒ता त॒नूना॑म् ॥ ८ ॥

बृह॑स्पते । परि॑ । दी॒य॒ । रथे॑न । र॒क्षः॒ऽहा । अ॒मित्रा॑न् [4] । अ॒प॒ऽबाध॑मानः । प्र॒ऽभ॒ञ्जन् । शत्रू॑न् । प्र॒ऽमृ॒णन् । अ॒मित्रा॑न् । अ॒स्माक॑म् । ए॒धि । अ॒वि॒ता । त॒नूना॑म् ॥ ८ ॥

हे बृहस्पते बृहतां देवानां पते पालक त्वं रथेन परि दीय । ⧗दी-यतिर्गतिकर्मसु पठ्यते । छान्दसो धातुः । अथ वा दीङ् क्षये । अ-नेकार्थत्वाद् धातूनाम् अत्र गत्यर्थः[1]⧗ । युद्धभूमिं परितो गच्छ व्याप्नुहि । रक्षोहा रक्षसां हन्ता अमित्रान् शत्रून् । ⧗अम गत्यादि-षु । अस्माद् इत्रप्रत्ययः⧗ । अपबाधमानः सर्वतो नाशयन् । ⧗"ल-क्षणहेत्वोः°" इति हेत्वर्थे शानच्⧗ । बाधनेन हेतुना सर्वतो ग-च्छ ॥ शत्रून् प्रभञ्जन् प्रकर्षेण मर्दयन् । ⧗भञ्जो आमर्दने । रौ-धादिकः⧗ । अमित्रान् शत्रून् प्रमृणन् प्रकर्षेण हिंसन् ईदृशस्त्वम्

---

१ C R Cs रथे॑न्. We with A $B^{h}$ D $S^{m}$ V Dc. २ R °मित्रँ॒ अप॒°. D °मि॒त्रँ अ॑प॒°. A °मित्रा॑ँ अप॒°. $B^{h}$ C $S^{m}$ °मि॒त्राँ अ॑प॒°. Cs रथे॑न॒ रक्षो॒हामि॒त्रँ अ॑प॒बाध॑°. We with K $K^{m}$ V Dc. ३ A प्र॒भ॒ञ्जं. We with $B^{h}$ C D R $S^{m}$ K $K^{m}$ V Dc Cs. ४ P मित्रा॑न् ।. $P^{2}$ J मि॒त्रान् ।.

---

1 S′ गर्थः for गत्यर्थः.

अस्माकं तनूनाम् शरीराणाम् अविता रक्षिता एधि भव । ॥अ-स्तेर्लोटि "घ्वसोरेद्धौ॰" इति हेध्यादेशः एत्वं च॥ ॥

नवमी ॥

इन्द्र॑ एषां ने॒ता बृह॒स्पति॒र्दक्षि॑णा य॒ज्ञः पु॒र ए॑तु॒ सोमः॑ ।
दे॒व॒से॒नाना॑मभिभञ्ज॒ती॒नां जय॑न्तीनां म॒रुतो॑ य॒न्तु मध्ये॑ ॥ ९ ॥

इन्द्रः॑ । ए॒षाम् । ने॒ता । बृह॒स्पतिः॑ । दक्षि॑णा । य॒ज्ञः । पु॒रः । ए॒तु ।
सोमः॑ ।
दे॒व॒ऽसे॒नाना॑म् । अ॒भि॒ऽभ॒ञ्ज॒ती॒नाम् । जय॑न्तीनाम् । म॒रुतः॑ । य॒न्तु ।
मध्ये॑ ॥ ९ ॥

अभिभञ्जतीनाम् अस्मदमित्रान् आभिमुख्येन भङ्क्तुं मर्दयितुम् । ॥हे-त्वर्थे शतृप्रत्ययः । "ङ्याश्छन्दसि॰" इति नाम उदात्तत्वम्॥ । भ-ञ्जनेन हेतुना जयन्तीनाम् जयनशीलानाम् । ॥जयन्तीनाम् इत्यत्र बहुलवचनाद्[1] नाम उदात्तत्वं न भवति॥ । एवम् अस्मदर्थे[2] प्रव-र्तमानानाम् एषाम् । ॥लिङ्गव्यत्ययः॥ । आसाम् देवसेना-नाम् इन्द्रो नेता अस्तु । बृहस्पतिः पुरः पुरस्ताद् एतु[3] दक्षिणा च यज्ञश्च सोमश्च पुर एतु । इति प्रत्येकविवक्षया एकवचनम् । दक्षिणा दक्षिणस्या दिशि बृहस्पतिरेतु यज्ञः सोमश्च पुरस्ताद् एतु इति केचिद् व्याचक्षते । तदा दक्षिणशब्दाद् "दक्षिणाद् आच्" इति आचि कृते "चितः" इति अन्तोदात्तत्वम् । यथा "सरस्वतीं यां पितरो हवन्ते दक्षिणा यज्ञम् अभिनक्षमाणाः" [१८.१.४२, ऋ॰ १०.१७.९] इत्यत्र दक्षिणाशब्दः अन्तोदात्तः पठ्यते एवम् अत्रापि स्यात् । अतः यज्ञे दीयमाना गोरूपा दक्षिणा अत्र विवक्षिता । ॥दक्ष वृद्धौ । द्रुदक्षिभ्याम् इनन् [उ॰ २.५०] इति इनन्प्रत्यये कृते "ञ्नित्यादिर्नित्यम्" इति आद्युदात्तत्वं सिध्यति । दिगाख्याने वा व्यत्ययेन आद्युदात्तत्वं द्रष्ट-व्यम्॥ । तथा मरुतो देवताश्च देवसेनानां मध्ये यन्तु गच्छन्तु ॥

1 S' बहुवचनात्. 2 S' अस्मदर्थप्रवर्त॰. 3 S' एतत्.

दशमी ॥

इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम् ।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥ १० ॥

इन्द्रस्य । वृष्णः । वरुणस्य । राज्ञः । आदित्यानाम् । मरुताम् । शर्धः । उग्रम् ।
महाऽमनसाम् । भुवनऽच्यवानाम् । घोषः । देवानाम् । जयताम् । उत् । अस्थात् ॥ १० ॥

वृष्णः कामानां वर्षितुः शस्त्रास्त्राणां वा सांतत्येन प्रक्षेप्तुः इन्द्रस्य राज्ञः राजनशीलस्य वरुणस्य शत्रुनिवारकस्य एतत्संज्ञकस्य देवस्यापि आदित्यानाम् अदितिपुत्राणां देवानां मरुतां च उग्रम् उद्गूर्णं शर्धः शत्रुप्रसहनसमर्थं बलम् उद् अस्थात् उत्तिष्ठतु शत्रून् हन्तुम् आविर्भवतु । ॥शृधु प्रसहने । अस्माद् असुन् प्रत्ययः॥ । ततः महामनसाम् अदीनमनसां भुवनच्यवानाम् च्यावयितुं समर्थानां भुवनेभ्यो लोकेभ्यो वा शत्रूंश्च्यावयितुं शक्तानाम् । ॥च्यवतेरन्तर्भावितण्यर्थात् पचाद्यच्॥ । जयताम् शत्रून् विनाशयतां देवानां सर्वेषामपि घोषः जयध्वनिः उद् अस्थात् उत्तिष्ठतु ॥

एकादशी ॥

अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु ।
अस्माकं वीरा उत्तरे भवन्त्वस्मान् देवासोवता हवेषु ॥ ११ ॥

अस्माकम् । इन्द्रः । सम्ऽऋतेषु । ध्वजेषु । अस्माकम् । याः । इषवः । ताः । जयन्तु ।
अस्माकम् । वीराः । उत्ऽतरे । भवन्तु । अस्मान् । देवासः । अवत । हवेषु ॥ ११ ॥

ध्वजेषु ध्वजवत्सु । ॥अर्शआदित्वाद् मत्वर्थीयः अच् प्रत्ययः॥ । सं-

[1] S' शत्रुप्रसहन°.

ग्रामेषु समृतेषु । ‡ अतेः "गत्यर्थाकर्मक०" इति कर्तरि क्तप्रत्ययः ‡ । संप्राप्तेषु सत्सु अस्माकम् इन्द्र एव । रक्षिता भवत्विति शेषः । अस्माकं या इषवः इष्यमाणाः प्रेर्यमाणाः शरास्ता जयन्तु शत्रून् । यद्वा इषुशब्देन इषुमन्तो योधा उच्यन्ते । ‡ लुप्तमत्वर्थीयो निर्देशः ‡ । इषुमन्तो योधा[1] जयन्तु ॥ अस्माकं संबन्धिनो वीराः विक्रान्तकर्माणः पुरुषा उत्तरे भवन्तु जयेन उत्कृष्टा भवन्तु ॥ हे देवासः देवाः यूयमपि हवेषु । हूयन्ते आहूयन्ते परस्परं योद्धारो योद्धृभिरत्रेति हवः संग्रामः । तेषु अस्मान् अवत रक्षत । यथा जयिनो भवेम तथा अनुपालयत । ‡ "अन्येषामपि दृश्यते" इति तिङन्तस्य दीर्घः ‡ ॥

इति द्वितीयेनुवाके चतुर्थं सूक्तम् ॥

"इदमुच्छ्रेयोवसानम्" इति एकर्चेन सूक्तेन साग्निपत्नीक आहिताग्निः प्रयाणे पर्यवसिते आज्यं जुहुयात् ॥

सैषा ऋग् एवम् आम्नायते ॥

इदमुच्छ्रेयोऽवसानमागां शिवे मे[2] द्यावापृथिवी अभूताम्[3] ।
असपत्नाः प्रदिशो मे भवन्तु न वै त्वा द्विष्मो[4] अभयं नो अस्तु ॥ १ ॥

इदम् । उत्ऽश्रेयः । अवऽसानम् । आ । अगाम् । शिवे इति । मे । द्यावापृथिवी इति । अभूताम् ।
असपत्नाः । प्रऽदिशः । मे । भवन्तु । न । वै । त्वा । द्विष्मः । अभयम् । नः । अस्तु ॥ १ ॥

अवसानम् । अवस्यति परिसमाप्तं भवति प्रयाणम् अत्र स्थान इति अवसानम् । तद्रूपम् इदम्[2] इदानीं गम्यमानं श्रेयः श्रेष्ठं फलम् उत्तं । ‡ योग्यक्रियाध्याहारः ‡ । उद्दिश्य आगाम् प्राप्तवान्

१ So we with A B C D K K R S V Dc Cs. P P J उत्ऽश्रेयः ।. २ R ते. We with A B C D K K S V Dc Cs. ३ A आभूताम् for अभूताम्. ४ Cs द्विष्मो. ५ P P J अवसानम् ।. ६ P द्विष्मः ।. J द्विष्मः । changed from द्विष्मः ।. We with P.

1 S' योजयंतु for योधा जयन्तु. 2 S' इदम् इदम् for इदम्.

अस्मि । इणो लुङि गादेशः । द्यावापृथिवी द्यावापृथिव्यौ मे मम शिवे श्रेयःप्रदे अभूताम् भवताम् । भवतेश्छान्दसो लुङ् ॥ तथा मे मम प्रदिशः प्रकृष्टा दिशः प्राच्यादिमहादिशः असपत्नाः । सपत्नीव सपत्नः । अकार उपमार्थीयः । "यस्येति च" इति ईकारलोपः । एतत् सर्वं "व्यन्तसपत्ने" इति निपातनात् सिद्धम् । सपत्नरहिता बाधकहेतुकोपद्रवरहिता भवन्तु । "नञ्सुभ्याम्" इति अन्तोदात्तत्वम् ॥ भयहेतौ विद्यमाने कथं तत्कृतोपद्रवराहित्यम् इत्यत आह न वै त्वा द्विष्म इति । हे सपत्न त्वां त्वां न द्विष्मः द्विष्टं मा कुर्मः । वैशब्दः प्रसिद्धौ । त्वद्विषये मया द्वेषो न क्रियत इति सर्वे जानन्तीत्यर्थः । अतो नः अस्माकम् अभयं भयराहित्यम् अस्तु । "अव्यये नञ्कुनिपातानाम् इति वक्तव्यम्" इति नञः प्रकृतिस्वरत्वम् ॥

इति द्वितीयेनुवाके पञ्चमं सूक्तम् ॥

"यत इन्द्र भयामहे" इत्यस्य सूक्तस्य अभयगणे पाठाद् "अभयगणोऽभयायाम्" इति [न० क० १८]

"आयुष्यश्चाभयश्चैव तथा स्वस्त्ययनो गणः" इति [प० ५. ३.]

"अभयेनोपतिष्ठते" [शा० क० १६]

इति नक्षत्रकल्पशान्तिकल्पपरिशिष्टादिषु गणप्रयुक्तो विनियोगोनुसंधेयः ॥

तत्र प्रथमा ॥

यत इन्द्र भयामहे ततो नो अभयं कृधि ।

मघवञ्छग्धि तव त्वं न[1] ऊतिभिर्वि द्विषो वि मृधो जहि ॥ १ ॥

यतः । इन्द्र । भयामहे । ततः । नः । अभयम् । कृधि ।

मघऽवन् । शग्धि । तव । त्वम् । नः । ऊतिऽभिः । वि । द्विषः । वि । मृधः । जहि ॥ १ ॥

१ C R $\overset{m}{S}$ Cs omit the accent mark on नं. We with A D K $\overset{m}{K}$ V Dc.

1 S′ संत्वा for त्वा.

हे इन्द्र अभयंकर यतः यस्माद्धेतोः भयामहे बिभीमः भीतिं प्राप्नुमः। ॥ बिभेतेः[1] सामान्यविहितः कर्तरि शबेवोत्पन्नः। यद्वा लेट्याडागमः। उभयत्र व्यत्ययेन आत्मनेपदम्। "भीत्रार्थानां भयहेतुः" इति यत इत्यत्र अपादानत्वात् पञ्चमी ॥। ततः तस्माद् भयहेतोः नः अस्माकम् अभयम् भयराहित्यम् उपद्रवपरिहारं कृधि कुरु। ॥ करोतेर्लोटि विकरणस्य लुक्। "श्रुशृणुपृकृवृभ्यः°" इति हेर्धिरादेशः ॥। किं च हे मघवन् धनवन् इन्द्र त्वं [तव] त्वत्संबन्धिनीभिः ऊतिभिः रक्षाभिः नः अस्मान्। रक्षितुम्[2] इति शेषः। शग्धि शक्तः समर्थो भव। ॥ शकेः प्राप्तकाले लोट् ॥। भयहेतोः सपत्नात् सकाशाद् बिभ्यतोऽस्मांस्त्वदीयैः[3] पालनैः पालयितुम् अयं प्राप्तः काल इत्यर्थः। ॥ शकेर्लोटि विकरणस्य लुक् छान्दसः। झलन्तत्वात् हेर्धिरादेशः ॥। अनन्तरं द्विषः द्वेष्टॄन् अस्मदीयान् शत्रून् वि जहि विशेषेण छिन्द्धि। मृधः शत्रुसंबन्धिनः संग्रामांश्च वि जहि विशेषेण नाशय। यद्वा द्विषो मृध इति बाह्याभ्यन्तररूपा द्विविधाः शत्रवो विवक्षिताः। संनिहिता [असंनिहिताश्चेति] वा ॥

द्वितीया ॥

इन्द्रं वयमनूराधं[1] हवामहेनु राध्यास्म द्विपदा चतुष्पदा।
मा नः सेना अररुषीरुप गुर्विषूचीरिन्द्र[2] द्रुहो वि नाशय ॥ २ ॥

इन्द्रम्। वयम्। अनुऽराधम्। हवामहे। अनु। राध्यास्म। द्विऽपदा। चतुःऽपदा।
मा। नः। सेनाः। अररुषीः। उप। गुः। विषूचीः। इन्द्र[3]। द्रुहः। वि। नाशय ॥ २ ॥

अनुराधम् अनुक्रमेण राधनीयं पूजनीयम्। सर्वेपि स्वस्वकार्यार्थम् इन्द्रम् एव प्रार्थयन्ते। तथा च दाशतय्याम् आम्नायते। "इन्द्रं परेवरे

१ B^h °मनुराधं. २ Cs °चीरिंद्र. ३ P इन्द्र। We with P^2 J.

1 S' बिभेदे. 2 S' रक्षतुम्. 3 S' बिभ्यतो नोस्मान्.

"मध्यमास इन्द्रं यान्तोवसितास इन्द्रम् । इन्द्रं क्षियन्त उत युध्यमाना "इन्द्रं नरो वाजयन्तो हवन्ते" इति [ऋ० ४.२५.८] । ॥ अ-नुपूर्वाद् राधतेः कर्मणि घञि "उपसर्गस्य घञ्यमनुष्ये०" इति अनोः[1] सांहितिको दीर्घः ॥ । ईदृशम् इन्द्रं वयं हवामहे स्वेष्टसिद्ध्यर्थम् आह्वयामः । इन्द्रप्रार्थनया वयं द्विपदा पादद्वयोपेतेन पुत्रभृत्यादिना चतुष्पदा पादचतुष्टयोपेतेन गवाश्वादिना च अनु राध्यास्म अनुक्रमेण संपन्ना भूयास्म । पुत्रभृत्यगवादिरूपाभिमतफल[2]समृद्धा भवेम । ॥ राध साध संसिद्धौ । आशीर्लिङि रूपम् ॥ ॥ किं च अररुषीः अदात्र्यः अभिमतफलप्रति[3]बन्धिकाः सेनाः शात्रवीया नः अस्मान् मोप गुः मो-पगच्छन्तु समीपं मा प्राप्नुवन्तु । ॥ अररुषीरिति । नञ्पूर्वाद् रातेः क्वसौ "उगितश्च" इति ङीपि "[4]वसोः संप्रसारणम्" । "वा छन्दसि" इति पूर्वसवर्णदीर्घः । अव्ययपूर्वपदप्रकृतिस्वरत्वेन आद्युदात्तः ॥ । न केवलं समीपप्राप्त्यभावः किं तु हे इन्द्र विषूचीः विष्वगञ्चनाः सर्वतो व्याप्ता द्रुहः द्रुह्यन्तीस्ताः शत्रुसेना वि नाशय विशेषेण जहि ॥

तृतीया ॥

इन्द्रस्त्रातोत वृत्रहा परस्फानो[1] वरेण्यः ।
स रक्षिता चरमतः स मध्यतः स पश्चात् स पुरस्तान्नो अस्तु ॥ ३ ॥

इन्द्रः । त्राता । उत । वृत्रऽहा । परस्फानः[2] । वरेण्यः ।
सः । रक्षिता । चरमतः[3] । सः । मध्यतः । सः । पश्चात् । सः । पुरस्तात् ।
नः । अस्तु ॥ ३ ॥

उत अपि च वृत्रहा वृत्रम् आवरकम् असुरं मेघं वा हतवान् इन्द्रः

१ A B^h C D K K^m R S^m Cs परस्फानो as above. Sâyaṇa explains परस्पा नो, though his text exhibits परस्मानो which perhaps originally was परस्पानो. K^m seems to correct its original reading to परस्पानो. C has also corrected स्फा to स्पा, which V already reads with Sâyaṇa. Dc परस्फानो changed to परस्पानो. There is no doubt परस्फानो is the ancient Atharva reading. २ So P P^2 J. ३ P P^2 J च । रमतः ।.

1 S' मनोः. 2 S' om. °फल°. 3 S' °प्रबन्धिकाः. 4 S' क्वसोः.

त्राता रक्षिता भवतु। सामान्येन उक्त्वा विशेषत आह। वरेण्यः वरणीय इन्द्रः नः अस्माकं परस्पाः[1] परेभ्यः पाता रक्षिता। सकारोपजनश्छान्दसः। परः परस्ताद् वा पाता। उत्तरत्र प्राच्यादिदिग्भ्यो रक्षितेति वदति तद्व्यतिरिक्ताभ्यो दिग्भ्यो रक्षितेत्यर्थः। पातेर्विच्। स एव इन्द्रः चरमतः अन्ते। सार्वविभक्तिकस्तसिः। तत्र रक्षिता मध्यतः मध्यदेशे। सर्वत्र स इत्युक्तिः अवश्यरक्षणीयत्वद्योतनार्थम्। पश्चात् पृष्ठभागे पुरस्तात् पुरोभागे नः अस्माकं रक्षिता अस्तु भवतु॥

चतुर्थी॥

उरुं नो लोकमनु नेषि विद्वान्त्स्व१र्यज्ज्योतिरभयं स्वस्ति।
उग्रा त इन्द्र स्थविरस्य बाहू उप[2] क्षयेम शरणा बृहन्ता॥ ४॥

उरुम्। नः। लोकम्। अनु। नेषि। विद्वान्। स्वः। यत्। ज्योतिः। अभयम्। स्वस्ति।

उग्रा। ते। इन्द्र। स्थविरस्य। बाहू इति। उप। क्षयेम। शरणा। बृहन्ता॥ ४॥

हे इन्द्र विद्वान् सर्वं जानानस्त्वं नः अस्मान् उरुम् विस्तीर्णं लोकम् इमम् अमुं च अनु नेषि अनुप्रापय। नयतिर्द्विकर्मकः। "बहुलं छन्दसि" इति शपो लुक्। स्वर्यत् स्वः स्वर्गं सर्वं वा यत् गच्छद् व्याप्नुवद् वा ज्योतिः आदित्याख्यं स्वस्ति। अविनाशिनाम। अभयम् भयरहितं क्षेमप्रदं च अस्तु। भयहेतुनिबन्धनोपद्रवपरिहारकं क्षेमादिसकलाभीष्टप्रदं च भवतु॥ हे इन्द्र स्थविरस्य महतः पुरातनस्य वा ते तव संबन्धिनौ उग्रा उग्रौ उद्गूर्णबलौ शरणा शरणौ शत्रुविशरणसमर्थौ। अथ वा शरणशब्दो रक्षितृवाची। सर्वस्य रक्षकौ

१ A $B^{h}$ C D $S^{m}$ ३ for १. R Cs °स्वर्यज्ज्यो° without any kampa-figure, though one is implied of course. We with K $K^{m}$ V Dc. २ C V omit उ in उप. We with A $B^{h}$ D K $K^{m}$ R $S^{m}$ Dc Cs.

1 S′ परस्पापरेभ्यः.

बृहन्ता बृहन्तौ महान्तौ बाहू उप क्षियेम उपप्राप्नुयाम । शरणेति विधेयविशेषणम् । रक्षकत्वेन उपगच्छेम । क्षि निवासगत्योः । तौदादिकः । विधिलिङि रूपम् ॥

पञ्चमी ॥

अभयं नः करत्यन्तरिक्षमभयं द्यावापृथिवी उभे इमे ।
अभयं पश्चादभयं पुरस्तादुत्तरादधरादभयं नो अस्तु ॥ ५ ॥

अभयम् । नः । करति । अन्तरिक्षम् । अभयम् । द्यावापृथिवी इति । उभे इति । इमे इति ।
अभयम् । पश्चात् । अभयम् । पुरस्तात् । उत्ऽतरात् । अधरात् । अभयम् । नः । अस्तु ॥ ५ ॥

अन्तरिक्षम् अन्तरा क्षान्तं मध्यमलोकः नः अस्माकम् अभयम् भयराहित्यं करति कुर्यात् । करोतेः पञ्चमलकारे अडागमः । इमे सर्वप्राणिनिवासस्थानभूते परिदृश्यमाने उभे द्यावापृथिवी द्यावापृथिव्यौ अभयम् । करतीति अनुषज्यमानं क्रियापदम् अत्र द्विवचनान्तत्वेन विपरिणमयितव्यम् । कुर्याताम् । तथा पश्चात् पश्चिमस्यां दिशि नः अस्माकम् अभयम् अस्तु । पुरस्तात् पूर्वस्यां दिशि उत्तरात् उदीच्यां दिशि अधरात् उत्तरप्रतियोगिकः अधरशब्दो दक्षिणदिग्वाची । दक्षिणस्यां दिशि नः अस्माकम् अभयम् अस्तु । "उत्तराधरदक्षिणाद् आतिः" इति आतिप्रत्ययः ॥

षष्ठी ॥

अभयं मित्रादभयममित्रादभयं[1] ज्ञातादभयं पुरो[2] यः ।
अभयं नक्तमभयं दिवा नः सर्वा आशा मम मित्रं भवन्तु ॥ ६ ॥

---

१ A B[h] C D K[m] R S[m] V Cs Dc °दभये. P P[2] J अभये ।. We with Sâyaṇa. २ So B[h] K K[m] R V Cs Dc. C पुरोयः changed to पुरोयः. D पुरोयः. S[m] पुरोयः without accents. P P[2] J पुरः । यः ।.

अभ॑यम्। मि॒त्रात्। अभ॑यम्। अ॒मित्रा॑त्। अभ॑यम्। ज्ञा॒तात्। अभ॑-
यम्। पु॒रः। यः।

अभ॑यम्। नक्त॑म्। अभ॑यम्। दिवा॑। नः॒। सर्वाः॑। आशाः॑। मम॑।
मि॒त्रम्। भ॒व॒न्तु॒॥ ६ ॥

मित्रात् सुहृदः अभयम् भयराहित्यम् अस्तु । सर्वदा हितकारी खलु पुरुषो मित्रम् तस्माद् भयप्रसङ्ग एव नास्ति किमर्थं भयराहित्यम् आशास्यते । सत्यम् । अत्र भयराहित्यं[1] न प्रार्थ्यते किं तु भयव्यतिरिक्तं हितं फलं सर्वदा भवत्विति । ꣸ अत्र नञस्तदन्यत्वम् अर्थः ꣸ । तथा अमित्रात् । ꣸ अमेरित्रप्रत्ययः ꣸ । शत्रोः सकाशाद् अभयम् अस्तु । अत्र भयपरिहारः प्रार्थ्यते । अमित्रं विशिनष्टि । ज्ञातात् द्वेष्टृत्वेन परिज्ञाताद् अमित्रात्। यः परः ज्ञाताद् अन्यः अपरिज्ञातः प्रकाशशत्रुर्न भवति किं तु गूढशत्रुः[2] तस्माच्च अभयम् अस्तु । नक्तम् रात्रौ दिवा अहनि नः अस्माकम् अभयम् अस्तु । अहोरात्रयोरभयप्रार्थनेन कालनिबन्धनभयपरिहारः । सर्वा आशाः सर्वा दिशः मम अभयकामस्य[3] मित्रम् मित्रवन्मित्रं सर्वदा हितकारिण्यो भवन्तु । अनेन सर्वतो भीतिनिवारणम् आशास्यते ॥

[इति] द्वितीयेनुवाके षष्ठं सूक्तम् ॥

"असपत्नं पुरस्तात्" इति सूक्तचतुष्कस्य रात्रौ पुरोहितकर्तव्ये राज्ञः शय्यागृहप्रवेशकर्मणि अभिमन्त्रितशर्करायाः प्रतिदिशं प्रदक्षिणं प्रक्षेपे विनियोगः । "अथातो रात्रिसूक्तानां [विधिम्] अनुक्रमिष्यामः" इति प्रक्रम्य उक्तं परिशिष्टे । "त्र्यायुषम्[५. २८. ७] इति राज्ञे रक्षां कृ"त्वा असपत्नम्[१९. १६] इति शर्कराम् अभिमन्त्र्याङ्गुष्ठात् प्रदक्षिणं "प्रतिदिशं क्षिपेत्" इति [प° ४. ५] । असपत्नम् इत्येकेन प्रतीकेन समनन्तरं सूक्तत्रयं समानार्थत्वाद् गृह्यते । अत एव असपत्नम् इति अर्थसूक्तम् आथर्वणा व्यवहरन्ति ॥

1 S′ °राहित्यमत्र for °राहित्यं. 2 S′ मूढशत्रुः. 3 S′ भयकामस्य.

उक्तं हि नक्षत्रकल्पे । "अश्रान्तस्य त्वा मनसा युनज्मीति गान्धर्व्याम् आयुष्यः शान्तिः स्वस्तिगण ऐरावत्याम्" इति [न॰ क॰ १८.] ॥

सैषा ऋग् एवम् आम्नायते ॥

अश्रान्तस्य त्वा मनसा युनज्मि प्रथमस्य च ।
उत्कूलमुद्वहो भवोदुह्य प्रति धावतात् ॥ १ ॥

अश्रान्तस्य । त्वा । मनसा । युनज्मि । प्रथमस्य । च ।
उत्ऽकूलम् । उत्ऽवहः । भव । उत्ऽउह्य । प्रति । धावतात् ॥ १ ॥

अत्र अश्वः संबोध्यः । हे गान्धर्वाश्व त्वा त्वाम् अश्रान्तस्य श्रमरहितस्य परसेनाभिगमनेपि शरीरायासरहितस्य तुरंगमस्य मनसा शत्रुधर्षणोत्सुकेन स्वाधिरोहसादिप्रोत्साहकेन[1] वा मनसा मानसेन प्रथमस्य सृष्ट्यादौ उत्पन्नस्य अश्वजातेः पूर्वस्य अश्वस्य च मनसा युनज्मि योजयामि । जितश्रमस्य उच्चैःश्रवसः अश्वश्रेष्ठस्य च मनउपलक्षितां[2] सर्वेन्द्रियशक्तिं शरीरदार्ढ्यम् आशुत्वं परसेनाभिभवनसामर्थ्यं च अस्मिन् शान्तिफलत्वेन काम्यमाने तुरंगमे योजयामीत्यर्थः । एवंसामर्थ्योपेतस्त्वम् उत्कूलमुद्वहो भवः । अतिद्दप्तो[3] भवेति तात्पर्यार्थः ॥ पदार्थस्तु । नदी परावाची तीरे प्रभूतेन जलप्रवाहेण उत्क्रम्य ऊर्ध्वं प्रवहति एवं त्वमपि युद्धाय संनद्धं परसैन्यं स्वसामर्थ्येन अतिक्रम्य विक्षोभयेति अश्वः प्रोत्साह्यते । वह प्रापणे । "उदि कूले रुजिवहोः" इति खच् प्रत्ययः । "खित्यनव्ययस्य" "अरुर्द्विषदजन्तस्य मुम्" इति कूलशब्दस्य मुम् आगमः । भवतेर्लेटि अडागमः । "भूसुवोस्तिङि" इति गुण[4]निषेधाभावश्छान्दसः । यद्वा छान्दसे लङि अमाङ्योगेपि अडभावः । दुहीय[5] एतादृशसामर्थ्योपेतेन अश्वेन भवता एषणीयानि शत्रुजयलक्षणानि

१ C R S^m उत्कूल॰. We with A B^h D K^m V Dc Cs. २ B^h C D K^m S^m V भवोदुह्य. Dc भवोदुह्य changed to भवोदुह्य. We with A R V Cs and P P^2 J which have: उत्ऽकूलम् । उत्ऽवहः । भव । उत्ऽउह्य (P^2 उत्ऽउह्य).

1 S' ॰रोहवासादि॰ for ॰रोहसादि॰. 2 S' ॰उपलक्षितं. 3 S' अतिद्रुतो. 4 S' गति॰ for गुण॰. 5 So Sâyaṇa's text too.

फलानि लभेय । ‖दुह प्रपूरणे । अस्माद् विधिलिङि कर्त्रभिप्राये क्रियाफले आत्मनेपदम् । उत्तमैकवचनम् इट्‖ । अतः अश्व त्वं प्रतिधावतात् जेतव्यं स्थानं प्रति शीघ्रं गच्छ । ‖प्रतिपूर्वात् सर्तेर्वेगितायां गतौ धाव् आदेशः । "तुह्योस्तातङ्°" इति मध्यमपुरुषस्य हेस्तातङ् आदेशः‖ ॥

[इति] तृतीयेनुवाके पञ्चमं सूक्तम् ॥

"अग्नेः प्रजातम्" इति सूक्तेन "आग्नेयीम् अग्निभये सर्वकामस्य च" [न° क° १७.] इति विहितायाम् आग्नेय्याख्यायां महाशान्तौ हिरण्यनिर्मितं कुण्डलादिकम् अभिमन्त्र्य बध्नीयात् । उक्तं हि नक्षत्रकल्पे । "अग्नेः प्रजातं परि यद्धिरण्यम् इति[1] हिरण्यम् आग्नेय्याम्" इति [न° क° १९.] । कर्णमध्ये छिद्रवद्धिरण्यकुण्डलम् इत्यर्थः ॥

तथा अनेन सूक्तेन तुलापुरुषे शान्तिकलशे हुत्वा संपातान् आनयेत् । "अथातस्तुलापुरुषविधिं व्याख्यास्यामः" इति प्रक्रम्य उक्तं परिशिष्टे । "'अग्ने गोभिः' 'अग्नेभ्यावर्तिन्' [कौ° ९. ४] 'अग्नेः प्रजातम्' [१९. २६] इति संपातान् उदपात्र आनीयाभिषेककलशेषु निनयेत्" इति [प° ११. १] ॥

तत्र प्रथमा ॥

अ॒ग्नेः प्रजा॑तं॒ परि॒ यद्धिर॑ण्यम॒मृतं॑ द॒ध्रे अधि॒ मर्त्ये॑षु ।
य ए॑न॒द् वेद॒ स इदे॑नमर्हति ज॒रामृ॑त्युर्भवति॒ यो बि॒भर्ति॑ ॥ १ ॥

अ॒ग्नेः । प्र॒ऽजा॑तम् । परि॑ । यत् । हिर॑ण्यम् । अ॒मृत॑म् । द॒ध्रे । अधि॑ । मर्त्ये॑षु । यः । ए॒न॒त् । वेद॑ । सः । इत् । ए॒न॒म् । अ॒र्ह॒ति॒ । ज॒रा॒ऽमृ॒त्युः । भ॒व॒ति॒ । यः । बि॒भर्ति॑ ॥ १ ॥

१ A B^h C D R S^m Cs एनद्वेद्. Dc एनद्वेद् changed to एंनद्वेद्. J एनंत् ।. We with K K^m V and P P^2. २ K K^m बिभर्ति. Dc बिभर्ति changed to बिभर्ति. We with A B^h C D R S^m V Cs.

1 S' inserts कर्णं after इति. Our MS. of the *Nakshatra-kalpa* omits the word.
2 May this refer to *Paippalâda* 1. 8. 4. 1.?

अग्नेः परि अग्नेः सकाशात् । परिशब्दः पञ्चम्यर्थानुवादी । प्रजातम् प्रकर्षेण उत्पन्नं यत् हिरण्यम् सुवर्णं विद्यते । आग्नेयाद् रेतसः सुवर्णम् उत्पन्नम् इति तैत्तिरीयाः समामनन्ति । "अग्ने रेतश्चन्द्रं हिरण्यम् । अद्भ्यः संभूतम् अमृतं प्रजासु" इति [तै० ब्रा० १.२.१.४] । यच्च हिरण्यं मर्त्येषु मरणधर्मसु मनुष्येषु अधि । अधिशब्दः सप्तम्यर्थानुवादी अधिकृत्येति वा[1] । अमृतम् अमरणसाधनं सत् दध्रे अवतिष्ठते । धृङ् अवस्थाने । तौदादिकः । अकर्मकः । आत्मनेपदी । मरणधर्मणां[2] मनुष्याणां मरणनिर्हरणसाधनत्वेन यत् हिरण्यं तिष्ठति । यद्वा । धृ धारणे । सकर्मकः । छान्दसो लिट् । मर्त्येषु अमरणसाधनत्वेन देवैर्दध्रे । चक्रे इति यावत् । एनत् । "इदमो नपुंसकैकवचने एनदादेशो वक्तव्यः" इति इदम एनदादेशः । एनत् उक्तं हिरण्यं यः पुमान् वेद उक्तस्वरूपं हिरण्यं जानाति स इत् । इत् अवधारणे । स एव पुमान् एनम् अन्वादिष्टं हिरण्यरूपं पदार्थम् अर्हति । धारयितुम् इति शेषः । यः पुमान् बिभर्ति धारयति स्वशरीरे मणिकुण्डलाङ्गुलीयादिरूपं स पुरुषो हिरण्यधारी जरामृत्युः जरयैव मृत्युर्मृतिर्यस्य अकालमृतिरहितो भवति ॥

द्वितीया ॥

यद्धिर॑ण्यं॒ सूर्ये॑ण सु॒वर्णं॑ प्र॒जाव॑न्तो॒ मन॑वः॒[1] पूर्वं॑ ई॒षि॒रे ।
तत् त्वा॑ च॒न्द्रं वर्च॑सा॒ सं सृ॑ज॒त्यायु॑ष्मान् भवति॒ यो बि॒भर्ति॑[2] ॥ २ ॥

यत् । हिर॑ण्यम् । सूर्ये॑ण । सु॒ऽवर्णं॑म् । प्र॒जाऽव॑न्तः । मन॑वः । पूर्वं॑[3] । ई॒षि॒रे[4] ।
तत् । त्वा॒ । च॒न्द्रम् । वर्च॑सा । सम् । सृ॒ज॒ति॒[5] । आयु॑ष्मान् । भ॒व॒ति॒ । यः । बि॒भर्ति॑[6] ॥ २ ॥

१ K $\overset{m}{\text{K}}$ V मन॑वः॒ पूर्वं॑ इ॒षि॒रे. $\overset{h}{\text{B}}$ D R $\overset{m}{\text{S}}$ Cs मन॑वः पूर्वं ई॒षि॒रे. C मन॑वः पूर्वं ई॒षि॒रे. Dc मन॑वः पूर्वं ई॒षि॒रे changed to मन॑वः॒ पूर्वं॑ इ॒षि॒रे. We with C and partly with Dc. २ K $\overset{m}{\text{K}}$ V बिभर्ति. Dc बि॒भर्ति॑ changed to बिभर्ति. We with $\overset{h}{\text{B}}$ C D R $\overset{m}{\text{S}}$ Cs. ३ P J पू॒र्वे॑ ।. We with $\overset{2}{\text{P}}$. ४ P $\overset{2}{\text{P}}$ J इ॒षि॒रे ।. ५ P सृ॒जा॒ति॒ ।. We with $\overset{2}{\text{P}}$ J. ६ $\overset{2}{\text{P}}$ बिभर्ति ।. We with P J.

1 S′ अकृत्येति वा. 2 S′ मरणधर्माणां.

प्रजावन्तः प्रकर्षेण जायमानाभिः पुत्रभृत्यादिभिस्तद्वन्तो मनवः। कार्ये कारणशब्दः। मनोः पुत्रा मनुष्याः पूर्वे हिरण्यधारिणां[1] प्रथमभाविनः सन्तः[2]। पूर्वे सृष्ट्यादावुत्पन्ना मनवो वा।

महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः॥

इति हि भगवद्वचनम् [भ॰ गी॰ १०. ६]। सुवर्णम् शोभनवर्णं यद्धिरण्यम् हितरमणीयं हेम सूर्येण सर्वस्य प्रसवित्रा स्वकारणेन आदित्येन सह ईषिरे प्राप्तवन्तः। लब्धवन्त इत्यर्थः। सूर्येण प्रेरिता वा मनवो हिरण्यम् ईषिरे। ईष गत्यादिषु। भौवादिकः। आत्मनेपदी। "इजादेश्च गुरुमतोनृच्छः" इति विहित आम् प्रत्ययोत्र मन्त्रत्वाद् न प्रवर्तते "॰अमन्त्रे॰" इति निषेधात्। इषु इच्छायाम् इत्यस्माद् वा व्यत्ययेन आत्मनेपदम्। तत् मनुभिर्धारितं चन्द्रम् आह्लादकं हिरण्यं कर्तृ त्वा त्वां हिरण्यधारकं वर्चसा तेजसा शरीरकान्त्या सं सृजतु संयोजयतु। यः पुरुषो बिभर्ति धारयति हिरण्यं स पुमान् आयुष्मान् चिरकालजीवनवान् भवति। भूमार्थे मतुप् प्रत्ययः॥

तृतीया॥

आयुषे त्वा वर्चसे त्वौजसे च बलाय च।
यथा हिरण्यतेजसा विभासासि जनाँ अनु॥ ३॥

आयुषे। त्वा। वर्चसे। त्वा। ओजसे। च। बलाय। च।
यथा। हिरण्यऽतेजसा। विऽभासासि। जनान्। अनु॥ ३॥

हे हिरण्यधारक पुरुष त्वा त्वाम् आयुषे चिरकालजीवनाय। तच्चन्द्रं सं सृजतु इत्यनुषङ्गः। तथा त्वा त्वां तद्धिरण्यं वर्चसे वर्चोलाभाय सं सृजतु। ओजसे शारीरबलाय। शरीरधारकोष्टमो धातुर्वा ओजः। तदर्थं बलाय भृत्यादिसंपत्तिरूपाय बाह्याय बलाय तदर्थं च हिरण्यं त्वां

१ Cs R जनँ for जनाँ. S[m] जनँ changed to जनाँ. २ J ॰भाससि।. We with P P[2].

1 S′ ॰धारिणे for ॰धारिणां. 2 S′ अंतः.

सं सृजतु । समुच्चयार्थौ चकारौ । यथा हिरण्यम्[1]* सुवर्णं तेजसा शुक्ल-भास्वररूपेण विशेषेण भासते । यत्तदोर्नित्यसंबन्धात् तथेत्यध्याहारः । तथा त्वमपि च जनान् अनु लक्षीकृत्य । ⧗लक्षणादिष्वर्थेषु अनुः कर्मप्रवचनीयः⧗ । तेजसा वर्चसा उज्ज्वलरूपेण विभासासि विशेषेण भासेथाः । ⧗तृतीयार्थे वा अनुः कर्मप्रवचनीयः⧗ । जनैः सह विशेषेण भासस्व । ⧗भासृ दीप्तौ । लेटि आडागमः । व्यत्ययेन परस्मैपदम्⧗ ॥

चतुर्थी ॥

यद् वेद राजा वरुणो वेद देवो बृहस्पतिः ।
इन्द्रो यद् वृत्रहा वेद[1] तत् त आयुष्यं भुवत्[2] तत् ते वर्चस्यं भुवत् ॥ ४ ॥

यत् । वेद । राजा । वरुणः । वेद । देवः । बृहस्पतिः ।
इन्द्रः । यत् । वृत्रऽहा । वेद । तत् । ते । आयुष्यम् । भुवत् । तत् । ते । वर्चस्यम् । भुवत् ॥ ४ ॥

यत् हिरण्यं राजा राजमानो वरुणो देवः वेद अग्नेरुत्पन्नम् इति मनुष्याणां मरणनिर्हरणोपाय इति जानाति । तथा बृहस्पतिः बृहतां महतां देवानां पतिः पालकः एतत्संज्ञको देवः यत् हिरण्यम् उक्तस्वरूपं वेद । वृत्रहा वृत्रं हतवान् इन्द्रोपि यत् हिरण्यम् उक्तलक्षणं वेद । तत् वरुणादिभिर्देवैर्ज्ञातप्रभावं धारितं वा हिरण्यं ते तव हिरण्यधारक पुरुष आयुष्यम् चिरकालजीवनाय हितम् आयुष्कारि भुवत् भवतु । तथा तद्धिरण्यं ते तव वर्चस्यम् वर्चसे हितं तेजस्कारि भुवत् भवतु । ⧗ "तस्मै हितम्" इति उभयत्र यत् प्रत्ययः । भुवदिति । भवतेर्लेटि "भूसुवोस्तिङि" इति गुणप्रतिषेधः । अडागमः । "इतश्च लोपः०" इति तिप इकारलोपः ⧗ ॥

एकोनविंशे काण्डे षष्ठं सूक्तम् ॥

तृतीयोनुवाकः समाप्तः ॥

---

१ A S^m Cs वेद. We with B^h C D K^m R V Dc. २ C भवत्तत्ते. We with A B^h D K K^m R S^m V.

---

1 S' Sâyaṇa's text also हिरण्यं तेजसा for our हिरण्यतेजसा.

चतुर्थेनुवाके सप्त सूक्तानि । तत्र "गोभिष्ट्वा पातु" इति प्रथमं सूक्तम् । अनेन "प्राजापत्यां प्रजापशुकामस्य प्रजाक्षये च" [न॰ क॰ १७.] इति विहितायां प्राजापत्याख्यायां महाशान्तौ सुवर्णरजतलोहमयमणिबन्धनं कुर्यात् । उक्तं हि नक्षत्रकल्पे । "गोभिष्ट्वा पात्वृषभः [१९. २७] "इति त्रिवृतं प्राजापत्यायाम् अक्षितास्ते [६. १४२. ३] इति यवमणिं[1] "सावित्र्याम्" इति [न॰ क॰ १९. ] ॥

तत्र प्रथमा ॥

गोभिष्ट्वा पात्वृषभो वृषा त्वा पातु वाजिभिः ।
वायुष्ट्वा ब्रह्मणा पात्विन्द्रस्त्वा पात्विन्द्रियैः ॥ १ ॥

गोभिः । त्वा । पातु । ऋषभः । वृषा । त्वा । पातु । वाजिऽभिः ।
वायुः । त्वा । ब्रह्मणा । पातु । इन्द्रः । त्वा । पातु । इन्द्रियैः ॥ १ ॥

हे त्रिवृन्मणिधारक पुरुष त्वा त्वां वृषभः[2] सेक्ता प्रबलः पुंगौर्यूथपतिः गोभिः स्वयूथ्याभिः सह पातु रक्षतु । गोषु बह्वन्यपत्यानि उत्पाद्य तत्समृद्धिकरणद्वारा त्वां समृद्धं करोत्वित्यर्थः । अथ वा वृषभो वृषभदेवता[3] स्वीयाभिर्गोभिर्देवताभिः सह स्वयम् अरिष्टेभ्यः पातु । ⌛ गोभिष्ट्वेत्यत्र "युष्मत्तत्ततक्षुःष्वन्तःपादम्" इति मूर्धन्यादेशः ⌛ । तथा वृषा प्रजननसमर्थोऽश्वः वाजिभिः वेजनवद्भिः शीघ्रगतिभिरश्वैः सह त्वां पातु । पूर्ववद् अश्वपुष्टिद्वारेणेति मन्तव्यम् । एवं वायुः अन्तरिक्षचरो देवः ब्रह्मणा परिवृढेन कर्मणा यज्ञलक्षणेन सह त्वा त्वां पातु । "वाताद् यज्ञः प्रयुज्यताम्" [तै॰ ब्रा॰ ३. ७. ४. १] इति श्रुतेः वायोर्यज्ञाख्यब्रह्मणा संबन्धः । यद्वा वायुः ब्रह्मणा परिवृढेन व्याप्तेन सूत्रात्मलक्षणेन सह पातु । अथ वा ब्रह्मशब्देन परिवृढम् अन्तरिक्षं स्वाश्रयम् उच्यते तेन सह पातु । एवम् इन्द्रो देवः इन्द्रियैः । ⌛ "इन्द्रियम् इन्द्रलिङ्गम् इन्द्रदृष्टम् इन्द्रसृष्टम्॰" इत्यादिना इन्द्रियशब्दो निपातितः ⌛ । अतः इन्द्रियाण्यत्र इन्द्रसृष्टानि इन्द्रजुष्टानि वा परिगृह्यन्ते तैः सह पातु ।

1 S' इतियोमणिं for इति यवमणिं. 2 Sâyaṇa's text, however, reads पात्वृषभो and not पातु वृषभो. 3 S' देवताकः for वृषभदेवता.

यद्वा "तद् यद् एनं प्राणैः समैन्धंस्तद् इन्द्रस्येन्द्रत्वम्" इत्यादिश्रुतेः [नि० १०, ८] इन्द्र आत्मा । स च इन्द्रियैः इतरैर्वागादिभिः सह पातु ॥

द्वितीया ॥

सोमस्त्वा पात्वोषधीभिर्नक्षत्रैः पातु सूर्यः ।
माद्भ्यस्त्वा चन्द्रो वृत्रहा वातः प्राणेन रक्षतु ॥ २ ॥

सोमः । त्वा । पातु । ओषधीभिः । नक्षत्रैः । पातु । सूर्यः ।
मात्ऽभ्यः । त्वा । चन्द्रः । वृत्रऽहा । वातः । प्राणेन । रक्षतु ॥ २ ॥

सोमो वल्ल्यात्मक ओषधीनां राजा देवः ओषधीभिः इतराभिर्व्रीह्यादिभिः सह त्वा त्वां पातु रक्षतु । एवं सूर्यो देवो नक्षत्रैः । नक्षान्नाशात् पतनात् त्रायन्त इति नक्षत्राणीति अत्र नक्षत्रशब्देन ग्रहाः परिगृह्यन्ते । तैः सह त्वां पातु । एवं चन्द्रः सर्वपदार्थप्राण्याह्लादकारी देवः माद्भिः[1] मासैः सह पातु । ॥ "पद्दन्०" इत्यादिना मासशब्दस्य मास्भावः । "झलां जशोन्ते" इति जश्त्वेन दकारः । मस्यन्ते परिमीयन्ते सकला वृद्धिह्रासैरिति मासा इति तद्व्युत्पत्तिः ॥ । स विशेष्यते वृत्रहेति । वृत्रः आवरकोन्धकारः तस्य हन्तेति वृत्रहा । एवं वातो वायुः प्राणेन स्वकीयेन शरीरगतेन पञ्चवृत्त्यात्मकेन वायुना सहितः सन् त्वां रक्षति* रक्षतु ॥

तृतीया ॥

तिस्रो दिवस्तिस्रः पृथिवीस्त्रीण्यन्तरिक्षाणि चतुरः समुद्रान् ।
त्रिवृतं[2] स्तोमं त्रिवृत आप आहुस्तास्त्वा रक्षन्तु त्रिवृता[3] त्रिवृद्भिः ॥ ३ ॥

तिस्रः । दिवः । तिस्रः । पृथिवीः । त्रीणि । अन्तरिक्षाणि । चतुरः । समुद्रान् ।
त्रिऽवृतम् । स्तोमम् । त्रिऽवृतः । आपः । आहुः । ताः । त्वा । रक्षन्तु ।
त्रिऽवृता[4] । त्रिवृत्ऽभिः ॥ ३ ॥

---

१ So A $\overset{h}{\text{B}}$ C D K $\overset{m}{\text{K}}$ R $\overset{m}{\text{S}}$ V Dc Cs P $\overset{2}{\text{P}}$ J. २ $\overset{h}{\text{B}}$ C D R $\overset{m}{\text{S}}$ V Cs तृ° for त्रि° throughout the mantra. We with K $\overset{m}{\text{K}}$ Dc. ३ K $\overset{m}{\text{K}}$ $\overset{m}{\text{S}}$ V °तांस्त्रिवृद्भिः. R Cs तृवृतांचृवृद्भिः. We with A $\overset{h}{\text{B}}$ C D Dc. ४ $\overset{2}{\text{P}}$ त्रिऽवृताः ।. P J त्रिऽवृतात् ।.

---

1 So Sâyaṇa's text also.

दिवः द्युलोकान् तिस्रः त्रीन् त्रिगुणान् । आहुरिति सर्वत्र संबन्धः । अभिज्ञाः कथयन्ति । दिवं[1]स्त्रिवृत्त्वं चन्द्रार्कनक्षत्राणाम् [आ]श्रयस्थानभेदाद् अवगन्तव्यम् । यद्वा तज्जिगमिषूणाम् उत्तममध्यमाधमभेदेन गन्तव्यस्यापि द्युलोकस्य त्रैविध्यम् अवगन्तव्यम् । एवं पृथिव्या अन्तरिक्षस्य च गन्तृ-भेदेन त्रैविध्यं द्रष्टव्यम् । तथा तिस्रः [पृथिवीः] पृथिवीरपि तिस्र आहुः । निकृष्टप्राणिभोगाश्रया पृथिव्येका । मध्यमप्राणिभोगाश्रया पृ-थिव्यपरा । उत्तमप्राणिभोगाश्रया पृथिव्यन्या । इति तिस्रः पृथिवीरित्यु[2]-च्यते । तृणौषधिं[3]वनस्पतिभिर्वा त्रिवृत्त्वं पृथिव्याः । अन्तरिक्षाण्यपि त्रीणि आहुः । अत्रापि सुकृतिनां त्रैविध्याद् गन्तव्यस्यापि अन्तरिक्षस्य त्रैवि-ध्यम् । अथ वा "यक्षगन्धर्वाप्सरोगणसेवितम् अन्तरिक्षम्" [नृ॰पू॰ता॰ १] इति वचनात् तेषाम् आवासभेदेन त्रैविध्यम् । चतुरः समुद्रान् आहुः । यद्यप्यत्र त्रिवृन्मणिस्तुतिसाधनत्वेन त्रित्वम् अपेक्षितं तथापि चतुर्षु त्रयाणां संभवात् चत्वारः समुद्रा इति प्रसिद्ध्यनतिलङ्घनाय चतुरः समुद्रान् इत्यु-क्तम् । एवं स्तोमं त्रिवृतम् आहुः । त्रिवृदाख्ये स्तोमे त्रयाणां तृचानां संभवाद् ऋचां गानस्य च त्रिरावृत्तेश्च स्तोमम् स्तोत्रं त्रिवृतम् आहुः । तथा आपः अपः त्रिवृत आहुः दिव्यान्तरिक्षभौमभेदेन । तास्त्रिवृतः[4*] । द्युपृथिव्यादिकाः त्रिवृत्त्वधर्मवत्यः त्रिवृन्मणिना सह अ[5]भेदम् आपन्नाः सत्यः त्रिवृद्भिः स्वकीयैस्त्रिभिः प्रकारैः मणिगतहिरण्यरजतलोहलक्षणेन त्रिवृता सह अ[5]भेदम् आपन्नैः त्वा त्वां रक्षन्तु ॥

चतुर्थी ॥

त्रीन्नाकां[1]स्त्रीन् संमुद्रांस्त्रीन् ब्रध्नां[2]स्त्रीन् वैष्टपान् ।
त्रीन् मा[3]तरिश्वनस्त्रीन्त्सूर्यान् गोप्तॄ[4]न् कल्पयामि ते ॥ ४ ॥

---

१ B C D K $\overset{m}{K}$ R $\overset{m}{S}$ V Dc Cs ॰नाकंस्त्री॰. We with A and Sâyaṇa's text. २ $\overset{h}{B}$ C R Cs ॰ब्रध्नं॰. We with D K $\overset{m}{K}$ $\overset{m}{S}$ V Dc. ३ A $\overset{h}{B}$ C D R $\overset{m}{S}$ Cs मातरिश्व॰. Dc मातरिश्व॰ changed to मातरिश्व॰. We with K $\overset{m}{K}$ V Dc $\overset{2}{P}$. ४ A $\overset{h}{B}$ D $\overset{m}{S}$ V गोप्त्री॰. We with C R P $\overset{2}{P}$.

---

1 S′ त्रिवृत॰ for दिव॰. 2 S′ ॰रित्युच्यंते for ॰रित्युच्यते. 3 S′ तृणौषधिभिर्वन॰. 4 Sâyaṇa's text too reads त्रिवृतस्त्रिवृद्भिः for our त्रिवृता त्रिवृद्भिः. 5 S′ भेदम् for अभेदम्.

त्रीन् । नाकान् । त्रीन् । समुद्रान् । त्रीन् । ब्रध्नान् । त्रीन् । वैष्टपान् ।
त्रीन् । मातरिश्वनः । त्रीन् । सूर्यान् । गोप्तॄन् । कल्पयामि । ते ॥ ४ ॥

हे हिरण्यरजतलोहात्मकत्रिवृन्मणिधारक पुरुष त्रीन् नाकान्[1] । उक्तप्रकारेण गन्तृत्रैविध्याद् गन्तव्यस्य नाकस्य स्वर्गस्यापि त्रैविध्यम् । नास्मिन् अकं दुःखम् अस्तीति तद्व्युत्पत्तिः । "पुण्यकृतो ह्येव तत्र गच्छन्ति" इति वचनात् । तान् ते गोप्तॄन् कल्पयामि त्रिवृन्मणिद्वारा रक्षकान् करोमि । एवम् उत्तरत्रापि द्रष्टव्यम् । त्रीन् समुद्रान् समुद्द्रवन्ति अस्माद् आप इति समुद्राः अन्तरिक्षविशेषाः । तान् त्रीन् । अथ वा प्रसिद्धा एव समुद्राः परिगृह्यन्ते । उत्तरसमुद्रस्य दुरन्तत्वात् त्रीन् इत्यभिहितम् । तान् ते गोप्तॄन् कल्पयामि । त्रीन् *बध्नान्[2] बध्नः सर्वस्य बन्धः आधारभूत आदित्यः । तस्य त्रैविध्यं प्रकाश्यद्युस्थानत्रैविध्याद् द्रष्टव्यम् । त्रीन् वैष्टपान् । विष्टपान् इत्यर्थः । बध्नस्य त्रित्वाभिधानात् तदाश्रयविष्टपानामपि त्रैविध्यम् । यद्वा विष्टपशब्दो भुवनसामान्यवचनः "विष्टपं भुवनं जगत्" इत्यभिधानात् । विष्टपानां त्रैविध्यात् तत्रत्याः प्राणिनोपि देवमनुष्यपित्रात्मकत्वेन[3] त्रिविधास्तान्[4] । त्रीन् मातरिश्वनः ऊर्ध्वाधस्तिर्यग्गतिभेदेन वा संचाराश्रयभूतलोकानां त्रित्वेन वा मातरिश्वापि[5] त्रिविधः तान् । मातरि अन्तरिक्षे श्वसिति चेष्टते इति मातरिश्वा इति तच्छब्दव्युत्पत्तिः । त्रीन् सूर्यान् प्रकाश्यानां लोकानां[6] त्रित्वात् सूर्या अपि त्रय इत्युच्यन्ते । यद्वा रश्मिमण्डलतदधिष्ठातृदेवताभेदेन सूर्यस्य त्रित्वम् । त्रिवृन्मणिं योजयन् अहं ये ये त्रैविध्योपपन्ना नाकाद्याः सन्ति तान् सर्वान् [ते] तव गोप्तॄन् कल्पयामि ॥

पञ्चमी ॥

घृतेन त्वा समुक्षाम्यग्न आज्येन वर्धयन् ।

---

१ P P̊ J नाकम् ।. २ J ब्रध्नान् । corrected into ब्रध्नन् ।. P ब्रध्नन् ।. P̊ ब्रध्नन् । corrected into ब्रध्नान् ।. ३ P J मातरिश्वनः ।. We with K P̊. ४ D R S̊ Cs समुख्याम्य°. B̊ समुक्ष्याम्य°. We with A K K̊ V Dc.

---

1 S' लोकान् for नाकान्. 2 Sâyaṇa's text too बध्नान्. 3 S' inserts प्राणिनोपि again after देवमनुष्यपित्रात्मकत्वेन. 4 S' त्रिविधान्. 5 S' मातरिश्वाभित्रि°. 6 S' लोकान्.

अग्नेश्चन्द्रस्य सूर्यस्य मा प्राणं मायिनो दभन् ॥ ५ ॥

घृतेन । त्वा । सम् । उक्षामि । अग्ने । आज्येन । वर्धयन् ।

अग्नेः । चन्द्रस्य । सूर्यस्य । मा । प्राणम् । मायिनः । दभन् ॥ ५ ॥

हे अग्ने त्वा त्वाम् आज्येन होमसाधनेन वर्धयन् अभिवृद्धं कुर्वन् कर्तुम् इच्छन् अहं [घृतेन] सम् उक्षामि सम्यक् सिञ्चामि । बह्वीभिर्घृतधाराभिरक्तं करोमि । अग्नेर्घृतेन समुक्षितस्य चन्द्रस्य ओषधिवनस्पत्याद्याह्लादकारिणश्च सूर्यस्य देवस्य च अनुग्रहात् हे मणिं बिभ्रत् पुरुष तव प्राणं मायिनः मायावन्तोऽसुरा मा दभन् दम्भनं मा कुर्वन्तु । मापहरन्तु इत्यर्थः । ॥दन्भु दम्भे । अस्य लुङि अङि[1] रूपम्॥ ॥

षष्ठी ॥

मा वः प्राणं मा वोऽपानं मा हरो मायिनो दभन् ।

भ्राजन्तो विश्ववेदसो देवा दैव्येन धावत ॥ ६ ॥

मा । वः । प्राणम् । मा । वः । अपानम् । मा । हरः । मायिनः । दभन् ।

भ्राजन्तः । विश्वऽवेदसः । देवाः । दैव्येन । धावत ॥ ६ ॥

अत्र राज्ञो मणिबन्धने विनियोगाद् राजनि पूजार्थं बहुवचनस्य युक्तत्वाद् अत्र व इति बहुवचननिर्देशः । यद्वा राज्ञः पुत्रभृत्यादिकम् अपेक्ष्य बहुवचनम् । हे राजादयः वः युष्माकं प्राणं मायिनो मायावन्तोऽसुरा मा दभन् हिंसां मा कुर्वन्तु । तथा वः अपानमपि मा दभन् । एवं हरः शत्रुबलापहारकं तेजो मा दभन् । तदर्थम् हे* देवाः अग्निचन्द्रसूर्याः भ्राजन्तः दीप्यमाना विश्ववेदसः विश्वस्य सर्वस्य वेत्तारो विश्वधना वा । वेद इति धननाम । यूयं दैव्येन देवसंबन्धिना रथादिना साधनेन वेगेन वा धावत । प्राणरक्षार्थम् इति शेषः । ॥दैव्येनेति । "देवाद् यञञौ" इति यञ्॥ ।

१ C विश्ववेदसो देवा. We with A B̊ D K K̊ R S̊ V Dc Cs. २ So P P̊ J.

1 S′ चङि.

सप्तमी ॥

प्राणेनाग्निं सं सृजति वातः प्राणेन संहितः ।
प्राणेन विश्वतोमुखं सूर्यं देवा अजनयन् ॥ ७ ॥

प्राणेन । अग्निम् । सम् । सृजति[1] । वातः । प्राणेन । सम्ऽहितः ।
प्राणेन । विश्वतःऽमुखम् । सूर्यम् । देवाः । अजनयन् ॥ ७ ॥

प्राणरक्षाम् आशास्य इदानीं तस्य माहात्म्यं वर्णयति । प्राणेन मुखस्थेन वायुना अग्निं सं सृजति संयोजयति समिन्धनकर्ता पुरुषः । यत एवम् अतः प्राणो रक्षितव्यः । किं च वातः बाह्यो वायुः प्राणेन मुखस्थेन सह संहितो भवति । अनेन तयोरेकत्वम् उक्तं भवति । अपि च प्राणेन सूत्रात्मरूपेण ब्रह्मणा विश्वतोमुखम् । सर्वत्र प्रकाशकत्वात् सूर्यो विश्वतोमुख[1] इत्युच्यते । यद्वा मां प्रत्युदगात् इति प्रतिपुरुषम् आभिमुख्यबुद्धिसंभवाद् विश्वतोमुखत्वव्यवहारः । तादृशं सूर्यं देवा इन्द्राद्या अजनयन् पुरा उदपादयन् । स्वस्वप्रयोजनाय लब्धवन्त इत्यर्थः । एवं महानुभावः प्राण इति प्राणस्य अवश्यरक्षणं युक्तम् इत्यभिप्रायः ॥

अष्टमी ॥

आयुषायुः[2]कृतां जीवायुष्मान् जीव मा मृथाः ।
प्राणेनात्मन्[3]वतां जीवं[4] मा मृत्योरुदगा वशम्[5] ॥ ८ ॥

आयुषा । आयुःऽकृताम् । जीव । आयुष्मान् । जीव । मा । मृथाः ।
प्राणेन । आत्मन्[6]ऽवताम् । जीवं[4] । मा । मृत्योः । उत् । अगाः ।
वशम्[5] ॥ ८ ॥

---

१ P सृजाति । We with $\overset{2}{P}$ J. २ V आयुषायुष्कृतां with Sâyaṇa's text. We with A $\overset{h}{B}$ C D K $\overset{m}{K}$ R $\overset{m}{S}$ Dc Cs. ३ A C D K V Dc Cs °त्मत्वतां. C is somewhat doubtful. $\overset{h}{B}$ R $\overset{m}{S}$ °त्मन्वतां which may, however, be intended for °त्मत्वतां. Sâyaṇa's text reads: °त्मत्वतां. ४ A $\overset{h}{B}$ C D K $\overset{m}{K}$ R $\overset{m}{S}$ V जीव. P J जीव । We with Dc $\overset{2}{P}$. ५ A $\overset{h}{B}$ C $\overset{m}{S}$ Cs °गा वशं (without any accent-marks). D R °गा वशन् (without any accent-marks). Dc °गा वशं corrected to °गा वशं. P वशम् । J वशम् । We with K $\overset{m}{K}$ V and Dc as subsequently corrected, and $\overset{2}{P}$. ६ P $\overset{2}{P}$ J आत्मऽत्वताम् ।

---

1 S′ मुख for विश्वतोमुख.

हे राजन् मणिधारक त्वम् आयुष्कृताम्। परेषाम् आयुरभिवृद्धिकर्तार आयुष्कृतः। यद्वा तपआदिना दीर्घम् आयुः कुर्वन्ति संपादयन्तीति आयुष्कृतः चिरकालजीविनः पूर्वे महर्षयः आयुष्कृतः। तेषाम् आयुषा। तेषां यादृग् आयुस्तादृशेनायुषेत्यर्थः। अथ वा तैर्दत्तेन आयुषा त्वं जीव। तस्माद् आयुष्मान्। ॥भूमार्थे मतुप्॥। दीर्घायुष्यः[1]। भवेति शेषः। उक्तवैपरीत्यं निराकरोति। [जीव] मा मृथाः मृतिं मा प्राप्नुहि। ॥मृङ् प्राणत्यागे। "माङि लुङ्"। "ह्रस्वाद् अङ्गात्" इति सिचो लोपः॥। आत्मन्वताम्[2] स्थिरेण आत्मना तद्वन्तः तेषाम् आत्मन्वताम्[3]। ॥"अनो नुट्" इति मतुपो नुडागमः॥। तेषां प्राणेन त्वं जीव। किं च मृत्योः मारकस्य देवस्य वशं मा उद् अगाः मोद्गच्छ मा प्राप्नुहि॥

नवमी॥

देवानां निहितं निधिं यमिन्द्रो[1]ऽन्वविन्दत् पथिभिर्देवयानैः।
आपो हिरण्यं जुगुपुस्त्रिवृद्भिस्तास्त्वा रक्षन्तु त्रिवृता[2] त्रिवृद्भिः॥ ९॥

देवानाम्। निऽहितम्। निऽधिम्। यम्। इन्द्रः। अनुऽअविन्दत्। पथिऽभिः। देवऽयानैः।
आपः। हिरण्यम्। जुगुपुः। त्रिवृत्ऽभिः। ताः। त्वा। रक्षन्तु। त्रिऽवृता। त्रिवृत्ऽभिः॥ ९॥

यं प्रसिद्धं निहितम् निक्षेपत्वेन संगोप्य स्थापितं हिरण्याख्यं [देवानां] निधिम् इन्द्रो देवः देवयानैः देवमार्गैः देवा यैर्मार्गैर्गत्वा निधिं निहि-

१ V यमिन्द्रो° (result of following Sâyaṇa with ignorance of accents!). A B^h C D K K^m S^m यमिंद्रा°. R Dc यमिंद्रा°. Cs यनिंद्रा°. P P^2 J इंद्र।. We with Sâyaṇa.
२ B^h C तृवता तृ°. K K^m Dc त्रिवृतास्त्रि°. D R Cs तृवृतास्त्रि°. S V तृवृतास्तृ°. P J त्रिऽवृतात्।. P^2 त्रिऽवृताः।.

1 S' दीर्घायुष्यो मतुपो भवेति शेषः. 2 S' आत्मत्वताम्. 3 S' आत्मतां वा for आत्मन्वतां. Probably a *locus corruptus.* Some letters or words may have dropped away between आत्म° and °तां, and the वा may be quite correct, a different interpretation of आत्मन्वतां being intended.

तवन्तस्तैः पथिभिर्मार्गैः स्वयमपि गत्वा अन्वविन्दत्[1] अन्विष्य लब्धवान् । यद् देवनिधिरूपं हिरण्यं त्रिवृतः उक्तप्रकारेण त्रिविधा आपः त्रिवृद्भिः साधनैर्जुगुपुः अरक्षन् तास्त्रिवृत* आपः त्रिवृद्भिः हिरण्यरजतलोहरूपेण त्रिविधैः स्वरूपैस्त्वा त्वां रक्षन्तु पालयन्तु ॥

दशमी ॥

त्रयस्त्रिंशद् देवतास्त्रीणि च वीर्याणि प्रियायमाणा[1] जुगुपुरप्स्व[2]न्तः ।
अस्मिंश्चन्द्रे अधि यद्धिरण्यं तेनायं कृणवद् वीर्याणि ॥ १० ॥

त्रयः॑ऽत्रिंशत् । दे॒वताः॑ । त्रीणि॑ । च॒ । वी॒र्या॑णि । प्रि॒य॒ऽयमा॑णाः । जु॒गु॒पुः॒ ।
अ॒प्ऽसु । अ॒न्तः ।
अ॒स्मिन् । च॒न्द्रे । अधि॑ । यत् । हिर॑ण्यम् । तेन॑ । अ॒यम् । कृ॒ण॒व॒त् । वी॒र्या॑णि ॥ १० ॥

[त्रयस्त्रिंशद् देवताः] "अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च" इति ऐतरेयब्राह्मणे [ऐ॰ब्रा १. १०] समाम्नाताः । बृहदारण्यके तु "अष्टौ वसव एकादश रुद्रा द्वादशादित्याः" इत्यभिधाय "इन्द्रश्च प्रजापतिश्च" [बृ॰आ॰ ३. ९. ३] इति वषट्कारस्थाने इन्द्र आम्नातः । ता अत्र त्रयस्त्रिंशद् देवता इत्यनेन परिगृह्यन्ते । ता देवताः त्रीणि च वीर्याणि । अत्र चशब्दः पूर्वमन्त्रोक्तम् "आपो हिरण्यं जुगुपुः" इत्युक्तं हिरण्यं समुच्चिनोति । त्रीणि वीर्याणि च कायिकवाचिकमानसभेदेन त्रिविधानि च सामर्थ्यानि प्रियायमाणाः प्रियमिव आचरन्त्यः[2] । तेषु अत्यर्थं प्रियं कुर्वाणा इत्यर्थः । अप्स्वन्तर्जुगुपुः उदकेषु मध्ये यथा अन्ये नापहरेयुस्तथा उदकेषु मध्ये गोपनम् अकुर्वन् । अस्मिन् परिदृश्यमाने चन्द्रे अधि आह्लादक उदके यत् हिरण्यम् अस्ति । अप्सु हिरण्यावस्थानं पूर्वमन्त्रे "आपो हिरण्यं जुगुपुः" इत्याम्नानात् सिद्धम् ।

१ A B^h C D K K^m R S^m V Dc Cs प्रियायमाणा. P P^2 J प्रियायं । माणा ।. २ A B^h C D R Cs ३ for १. We with K K^m S^m V Dc.

1 S' अन्वविन्दन्. Sâyaṇa's text also has: यमिंद्रोन्वविंदन्पथि°. 2 S' seems to read आचरंतः.

तेन अवस्थितेन हिरण्येन स्वमुख्यांशभूतेन अयं मणिः वीर्याणि स्वेन सह अवस्थितानि वीर्याणि त्रयस्त्रिंशद्देवतानां त्रिविधानि सामर्थ्यानि कृणवत् मणिधारके पुरुषे करोतु ॥ यद्वा हिरण्यरजतलोहानां त्रयाणां यानि आयुर्वर्धनैश्वर्यकरत्वशत्रुजयाख्यानि अनन्यसाधारणानि त्रीणि वीर्याणि सन्ति तानि अन्येषां मा भूवन्निति बुद्ध्या म्रियायमाणाः अप्सु अन्तः गोपनम् अकुर्वन् । तानि अस्मिंश्चन्द्रे प्रसिद्धे चन्द्रमसि चन्द्रस्य अम्मयत्वात् तत्र यद्धिरण्यं निहितं तेन हिरण्येन अयं मणिः उक्तविधानि त्रीणि वीर्याणि कृणवत् इति । ⌛म्रियायमाणा इति । "कर्तुः क्यङ् सलोपश्च" इति क्यङ् । "अकृत्सार्वधातुकयोः°" इति दीर्घः⌛ ॥

ये दे॒वा दि॒व्येका॑दश॒ स्थ ते दे॑वासो ह॒विरि॒दं जु॑षध्वम् ॥ ११ ॥

ये । दे॒वाः । दि॒वि । एका॑दश । स्थ । ते । दे॒वा॒सः[1] । ह॒विः । इ॒दम् । जु॒ष॒ध्व॒म् ॥ ११ ॥

ये दे॑वा अ॒न्तरि॑क्ष॒ एका॑दश॒ स्थ ते दे॑वासो ह॒विरि॒दं जु॑षध्वम् ॥ १२ ॥

ये । दे॒वाः । अ॒न्तरि॑क्षे । एका॑दश । स्थ । ते । दे॒वा॒सः । ह॒विः । इ॒दम् । जु॒ष॒ध्व॒म् ॥ १२ ॥

ये दे॑वाः पृथि॒व्यामेका॑दश॒ स्थ ते दे॑वासो ह॒विरि॒दं जु॑षध्वम् ॥ १३ ॥

ये । दे॒वाः । पृ॒थि॒व्याम् । एका॑दश । स्थ । ते । दे॒[1]वा॒सः । ह॒विः । इ॒दम् । जु॒ष॒ध्व॒म् ॥ १३ ॥

एकादशी ॥ ये देवा दिव्याः[1] दिवि भवाः । ⌛"भवे छन्दसि" इति यः⌛ । दिवि द्युलोके आदित्याख्या गणा एकादश स्थ भवथ । यद्यपि ते द्वादश तथापि एकादशत्वाभिधानं न विरुध्यते । अधिकसंख्यायां[2] न्यूनसंख्यायाः संभवात् । ते देवासः देवाः इदं हविः हूयमानम् आज्यं जुषध्वम् सेवध्वम् ॥ एवं ये देवा अन्तरिक्षे एकादश स्थ रुद्रा-

---

१ P दे॒वासः॑ ।. We with P[2] J.

1 Sâyaṇa's text of the 11th mantra reads: ये देवा दिव्या दिव्येकादश स्थ. It reads the 12th and 13th mantras all right like us. 2 S' °संख्याया.

भिधानाः ते देवा इदं हविर्जुषध्वम् ॥ तथा ये देवाः पृथिव्याम् एकादश स्थ भवथ । अत्रापि त्रयाणां न्यूनताम् अनादृत्य एवम् उक्तम् । गतम् अन्यत् ॥

द्वादशी ॥

असपत्नं पुरस्तात् पश्चान्नो अभयं कृतम्[१] ।
सविता मा दक्षिणत उत्तरान्मा शचीपतिः ॥ १४ ॥

असपत्नम् । पुरस्तात् । पश्चात् । नः । अभयम् । कृतम्[१] ।
सविता । मा । दक्षिणतः । उत्तरात् । मा । शचीऽपतिः ॥ १४ ॥

अत्र यद्यपि पुरस्तात्[1] पश्चाच्च रक्षाविषये देवते न निर्दिष्टे तथापि कृतम् इति द्विवचनसामर्थ्याद् उत्तरार्धे वक्ष्यमाणौ सवितृशचीपती परिगृह्येते । हे उक्ते देवते युवां मे* मह्यं पुरस्तात् पूर्वस्यां दिशि पश्चात् प्रतीच्यां च अभयम् भयराहित्यम् असपत्नं यथा भवति तथा कृतम् कृणुतम् । अथ वा पुरस्ताद् असपत्नम् सपत्नाभावं कृतं पश्चाद् अभयं च कृतम् । जिगीषोः पुरतः शत्रूणाम् अभाव आशास्यः पश्चाच्च पार्ष्णिग्राहाद् भयाभावाय अभयम् आशास्यम् । अतः पुरस्ताद् असपत्नं कृणुतं पश्चाद् अभयं कृणुतम्[2] इति विभागः[2] । तथा सविता मा[3] मां दक्षिणतः दक्षिणदिक्सकाशाद् दक्षिणदिग्गताद् भयात् सविता[4] रक्षतु इत्यध्याहर्तव्यम् । उत्तरमन्त्रे भूम्या रक्षन्त्वग्नय इति रक्षणक्रियासंबन्धात् । एवम् उत्तरात् उत्तरदिग्गताद् भयात् । ⌛ "उत्तराधरदक्षिणाद् आतिः" इति आतिप्रत्ययः⌛ । मा[5] मां शचीपती रक्षतु ॥

दिवो मादित्या रक्षन्तु भूम्या रक्षन्त्वग्नयः ।
इन्द्राग्नी रक्षतां मा पुरस्तादश्विनावभितः शर्म यच्छताम् ।
तिरश्चीनघ्न्या[२] रक्षतु जातवेदा भूतकृतो मे सर्वतः सन्तु वर्म ॥ १५ ॥

दिवः । मा । आदित्याः । रक्षन्तु । भूम्याः । रक्षन्तु । अग्नयः ।

१ See foot-notes to XIX. 16. 1. २ See foot-notes to XIX. 16. 2.

1 S′ तत्पुरस्तात्तत्पुरस्तात् for पुरस्तात्. 2 S′ कृणुतविभागः. 3 S′ मा मा मां for मा मां. 4 So S′. 5 S′ यन्मां for मा मां.

इन्द्राग्नी इति॑ । रक्ष॑ताम् । मा॒ । पु॒रस्ता॑त् । अ॒श्विनौ॑ । अ॒भितः॑ । शर्म॑ । यच्छताम् ।

ति॒र॒श्चीन् । अ॒घ्न्या । र॒क्ष॒तु॒ । जा॒तऽवे॑दाः । भू॒तऽकृतः॑ । मे॒ । स॒र्वतः॑ । स॒न्तु॒ । वर्म॑ ॥ १५ ॥

त्रयोदशी ॥ आदित्यानां द्युस्थानत्वाद् दिवः सकाशाद् रक्षणम् उचितम् । अग्नीनां च पृथिव्यायतनत्वात् तस्याः सकाशाद् रक्षण[1]प्रार्थना । अथ वा "असपत्नम्" इत्यारभ्य "रक्षन्त्वग्नयः" इत्यन्त एको मन्त्रः । तथा सति रक्षन्त्विति[2] पदम् अर्थानुसारेण रक्षत्विति विपरिणमयितुं सु-[3]शकम् । उत्तरत्र छन्दोन्तरत्वाद् नायम् अर्धर्चस्तत्र संबध्यते ॥

चतुर्दशी ॥ इन्द्राग्नी मा मां पुरस्ताद् रक्षताम् पालयताम् । तथा अश्विनौ देवौ अभितः सर्वतः सर्वासु दिक्षु [शर्म] सुखं यच्छताम् । एवं तिरश्चीन् तिर्यगञ्चनान् अस्मान् । ꣸ तिरः[4]पूर्वाद् अञ्चतेः क्विन् । "अञ्चतेश्चोपसंख्यानम्" इति ङीप् । "अचः" इति अकारलोपः ꣸ । यद्वा तिरश्चीः तिर्यग्दिशो जातवेदाः जातप्रज्ञो रक्षाविषयप्रज्ञावान् अग्निः रक्षतु । तिर्यक्प्रदेशेभ्यो रक्षत्वित्यर्थः । ꣸ अग्नी रक्षतु इत्यत्र "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति सांहितिको दीर्घः ꣸ । एवं भूतकृतः भूतानां पृथिव्यादीनां कर्तारः पञ्चभूताभिमानिदेवा अग्न्यादयो मे सर्वतः वर्म वारकं कवचं सन्तु भवन्तु ॥

इत्येकोनविंशे काण्डे चतुर्थेनुवाके प्रथमं सूक्तम् ॥

"इमं बध्नामि ते मणिम्" इति सूक्तत्रयम् "ऐन्द्रीं जयबलवृष्टिपशुकामस्य परचक्रागमे च" इति [न॰क॰१७] विहितायाम् ऐन्द्र्याख्यायां महाशान्तौ दर्भमणिबन्धने विनियुक्तम् । सूत्रितं हि नक्षत्रकल्पे । "इमं "बध्नामि ते मणिं दीर्घायुत्वाय तेजसे[१९.२८] इति दर्भमणिम् ऐन्द्र्याम् "अभीवर्तेन[१.२९] इति रथनेमिमणिं माहेन्द्र्याम्" इति [न॰क॰१९] ॥

१ See foot-notes to XIX. 16. 2.

1 S′ रक्षणा॰. 2 S′ रक्षंत्वित्ययमर्थानु॰. 3 S′ सुशकः. 4 So S′. The grammatical note explains neither तिरश्चीन् nor तिरश्चीः. See commentary on 16. 2 above.

तत्र प्रथमा ॥

इ॒मं ब॑ध्नामि ते म॒णिं दी॒र्घा॒यु॒त्वाय॒ तेज॑से ।
द॒र्भं स॑पत्न॒दम्भ॑नं द्वि॒ष॒तस्त॒प॑नं हृ॒दः ॥ १ ॥

इ॒मम् । ब॒ध्ना॒मि॒ । ते॒ । म॒णिम् । दी॒र्घा॒यु॒ऽत्वाय॑ । तेज॑से ।
द॒र्भम् । स॒प॒त्न॒ऽदम्भ॑नम् । द्वि॒ष॒तः । तप॑नम् । हृ॒दः ॥ १ ॥

हे विजयबलादिकाम ते तव इमं मणिं दर्भमयं बध्नामि । किमर्थम् । दीर्घायुत्वाय यथा त्वं दीर्घायुर्भवसि तथाभावाय तेजसे अतिशयिततेजोलाभाय । मणिं विशिनष्टि । दर्भम् । विकारे प्रकृतिशब्दः । दर्भनिर्मितं[1] मणिं सपत्नदम्भनम् शत्रूणां हिंसकं सपत्नीवत् सपत्नः । "व्यन्तसपत्ने" इति निपातनात् साधुः । दम्भनम् इति । "कृत्यल्युटो बहुलम्" इति कर्तरि ल्युट् । द्विषतः द्वेषं कुर्वतः शत्रोः [हृदः] हृदयस्य तपनं तापकम् ॥

द्वितीया ॥

द्वि॒ष॒तस्ता॒पय॑न् हृ॒दः शत्रू॑णां ता॒पय॒न् मनः॑ ।
दु॒र्हार्दः॑ सर्वां॑स्त्वं द॑र्भ घ॒र्म इ॑वा॒भीन्त्सं॑ता॒पय॑न् ॥ २ ॥

द्वि॒ष॒तः । ता॒पय॑न् । हृ॒दः । शत्रू॑णाम् । ता॒पय॑न् । मनः॑ ।
दुः॒ऽहार्दः॑ । सर्वा॑न् । त्वम् । द॒र्भ॒ । घ॒र्मःऽइ॑व । अ॒भीन् । स॒म्ऽता॒पय॑न् ॥ २ ॥

हे दर्भमणे त्वं द्विषतः द्वेषं कुर्वतः शत्रोः हृदः हृदयं तापयन् संतप्तं कुर्वन् तथा शत्रूणां मनश्च तापयन् एवं दुर्हार्दः दुष्टहृदयस्य । हृदं[2] इदं हार्दम् । "तस्येदम्" इति अण् । हार्दं करोति । "तत् करोति॰" इति णिच् । हार्दयतेः क्विपि "णेरनिटि" इति णिलोपः । तस्य

१ A B^h C D K K^m R S^m Cs दर्भं सपत्न॰. Dc दर्भासपत्न॰ (*sic*) changed to दर्भं सपत्न॰. P J दर्भम् ।. P^2 दर्भम् ।. २ D S^m Dc Cs हृदः. We with C R P P^2 J. ३ A दुर्हादुः सर्वांस्त्वं (corrected into सर्वस्त्वं). D दुर्हादुः सर्वस्त्वं. R Cs दुरिहार्द्दः सर्वास्तं. Sâyaṇa's text: दुर्हार्दः सर्वस्त्वं. We with B^h C K^m S^m V Dc P P^2.

1 S′ दर्भनिमित्तं. 2 S′ हृदय इदं.

सर्वम्[1] गृहक्षेत्रपश्वादिकं घर्मं इव आदित्य इव । यद्वा "यद् ग्रा॑ऽ३[2] इत्यपतत् तद् घर्मस्य घर्मत्वम्" इति [तै॰आ॰ ५.१.५] श्रुतेः घर्मः प्रवर्ग्यः । स इव अभीन् अभयान् संतापयन् भिन्द्धीति संबन्धः ॥

तृतीया ॥

घर्म इ॑वाभितप॑न्[1] दर्भ द्विषतो नितप॑न्[5] मणे ।
हृ॒दः[2] सपत्ना॑नां[3] भिन्द्धीन्द्र इव विरु॒जं[4] बलम् ॥ ३ ॥
घर्मःऽइव । अभिऽतप॑न् । दर्भ । द्विषतः । निऽतप॑न् । मणे ।
हृदः । सऽपत्ना॑नाम् । भिन्द्धि । इन्द्रःऽइव । विऽरुजन् । बलम् ॥ ३ ॥

हे दर्भ । दर्भविकारे दर्भशब्दः । हे दर्भनिर्मित[3] मणे त्वं घर्म इव । उक्तो घर्मशब्दार्थः निदाघकालो वा । स इव द्विषतः द्वेषं कुर्वतः शत्रोर्हृदयम् । यद्वा । कर्मणि षष्ठी । द्विषन्तम् शत्रुम् अभितपन् अभितः संतापं कुर्वन् तथा नितपन् नितरां संतापयन् भिन्द्धि भेदं कुरु । दार्ढ्याय उक्तमेवार्थम् पुनराह । सपत्नानाम् राष्ट्रादिविषये समानः पतिर्येषां ते सपत्नाः । राष्ट्रविषये स्वेषामपि पतित्वं कामयमाना इत्यर्थः । सपत्नीव सपत्नः । "व्यन्तसपत्ने" इति निपातनात् साधुः । तेषां बलम् शारीरं बाह्यं च इन्द्र इव विरुजन् स यथा शत्रूणां बलं विरुजति एवं विरुजन् नाशयन् तेषां हृदः हृदयानि[4] भिन्द्धि विदारय । भिदिर् विदारणे ।

चतुर्थी ॥

भिन्द्धि दर्भ सपत्ना॑नां हृदयं द्विषतां मणे ।

१ B[h] D °तपं दर्भ. K K[m] V Cs °तपं दर्भ. P तपयन् ।. We with A C R S[m] Dc P[2] J. २ D R Dc Cs P P[2] J हृदः. We with C S[m]. ३ A B[h] C D R Cs सपत्नानाभि°. Dc सपत्नानां changed to सपत्नानां. S[m] सपत्नान् भि°. P J सऽपत्नान् । आ । for सऽपत्नानाम्. We with K K[m] V P[2]. ४ R Cs वीरुजं. Dc विरुजन् changed to विरुजं. We with A B[h] C D K K[m] S[m] V. P P[2] J विऽरुजम् ।. Sâyaṇa's text: विरुजन्. ५ P °तपयन् ।. We with P[2] J.

1 Sâyaṇa's text too has सर्वं. 2 S' ग्रं for ग्राऽ३. 3 S' दर्भनिमित्त°. 4 S' हृदयादिनिर्भिंधि.

उद्यन् त्वचमिव भूम्याः शिर एषां वि पातय ॥ ४ ॥

भिन्द्धि । दर्भ । सऽपत्नानाम् । हृदयम् । द्विषताम् । मणे ।
उत्ऽयन् । त्वचम्ऽइव । भूम्याः । शिरः । एषाम् । वि । पातय ॥ ४ ॥

हे दर्भ मणे द्विषताम् द्वेषं कुर्वतां सपत्नानां हृदयं भिन्द्धि । हृदयभेदनमात्रेण अपरितुष्यन्नाह । उद्यन् ऊर्ध्वं गच्छन् भुजादिप्रदेशम् अधितिष्ठन् त्वं भूम्यास्त्वचम् [इव] तृणगुल्मौषध्याद्यधिष्ठानभूतां यथा तक्षणेन निपातयति गृहादिनिर्माणार्थं लोके एवम् एषां सपत्नानां शिरः । जात्येकवचनम् । शिरांसि वि पातय अधःपतितानि कुरु ॥

पञ्चमी ॥

भिन्द्धि दर्भ सपत्नान् मे भिन्द्धि मे पृतनायतः ।
भिन्द्धि मे सर्वान् दुर्हार्दो भिन्द्धि मे द्विषतो मणे ॥ ५ ॥

भिन्द्धि । दर्भ । सऽपत्नान् । मे । भिन्द्धि । मे । पृतनाऽयतः ।
भिन्द्धि । मे । सर्वान् । दुःऽहार्दः । भिन्द्धि । मे । द्विषतः । मणे ॥ ५ ॥

पृतनायतः पृतना सेना । ताम् आत्मन इच्छन्तः पृतनायन्तः । तान् भिन्द्धि । "सुप आत्मनः क्यच्" इति क्यच् । सर्वविधीनां छन्दसि विकल्पितत्वाद् आकारलोपाभावः । तान् भिन्द्धि । भिदिर् विदारणे । दुर्हार्दः दुष्टहृदयान् । हृद इदं हार्दम् । "तस्येदम्" इति अण् । हार्दं करोति । "तत् करोति०" इति णिच् । हार्दयतेः क्विपि "णेरनिटि" इति णिलोपः । स्पष्टम् अन्यत् ॥

षष्ठी ॥

छिन्द्धि दर्भ सपत्नान् मे छिन्द्धि मे पृतनायतः ।

---

१ Cs त्वचं इव. २ So we with B C D K K̊ R Š P P̊ J. Sâyaṇa's text: निपातय. V नि and वि. ३ D पातयः. We with A B̊ C K K̊ R Š V Dc Cs.

1 S′ omits अ in अपरितुष्यन्. 2 S′ लक्षणेन. 3 So S′, though the text in S′ has निपातय. 4 S′ अकार°. 5 So S′, repeating unnecessarily.

छिन्द्धि मे सर्वान् दुर्हार्दान् छिन्द्धि मे द्विषतो मणे ॥ ६ ॥

छिन्द्धि। दर्भ। सऽपत्नान्। मे। छिन्द्धि। मे। पृतनाऽयतः।

छिन्द्धि। मे। सर्वान्। दुःऽहार्दान्*। छिन्द्धि। मे। द्विषतः। मणे ॥ ६ ॥

छिन्द्धि। छिदिर् द्वैधीकरणे। शिष्टं समानम्[1] ॥

सप्तमी ॥

वृश्च दर्भ सपत्नान् मे वृश्च मे पृतनायतः।

वृश्च मे सर्वान् दुर्हार्दो वृश्च मे द्विषतो मणे ॥ ७ ॥

वृश्च। दर्भ। सऽपत्नान्। मे। वृश्च। मे। पृतनाऽयतः।

वृश्च। मे। सर्वान्। दुःऽहार्दः। वृश्च। मे। द्विषतः। मणे ॥ ७ ॥

वृश्च। ओव्रश्चू[2] छेदने इति धातुः ॥

अष्टमी ॥

कृन्त दर्भ सपत्नान् मे कृन्त मे पृतनायतः।

कृन्त मे सर्वान् दुर्हार्दो[२] कृन्त मे द्विषतो मणे ॥ ८ ॥

कृन्त। दर्भ। सऽपत्नान्। मे। कृन्त। मे। पृतनाऽयतः।

कृन्त। मे। सर्वान्। दुःऽहार्दान्[२]*। कृन्त। मे। द्विषतः। मणे ॥ ८ ॥

कृन्त। कृती छेदने। "शे मुचादीनाम्" इति नुम् आगमः ॥

नवमी ॥

पिंश[३] दर्भ सपत्नान् मे पिंश[३] मे पृतनायतः।

पिंश[३] मे सर्वान् दुर्हार्दः[४] पिंश[३] मे द्विषतो मणे ॥ ९ ॥

---

१ A °दुर्हार्दो corrected from दुर्हार्दो. B^h C D K^m S^m °दुर्हार्दो. Sâyaṇa's text: दुर्हार्दः छि° (*sic*). R Cs °दुर्हार्दो छि°. Dc दुर्हार्दे changed to दुर्हार्दो. P P °हार्दीम्।. J °हार्दम्।. २ A °दुर्हार्दो corrected from दुर्हार्दो. R Cs and Sâyaṇa's text: दुर्हार्दो. We with B^h C D K^m S Dc. P P^2 °हार्दीम्।. J °हार्दम्।. ३ Dc पींष changed to पिंश. ४ B^h D Cs °दुर्हार्दो. Dc दुर्हार्दो changed to दुर्हार्दः. We with A C R S^m V.

---

1 S′ समाम्नातम्. 2 S′ om. ओ°.

पिंश । दर्भ । सऽपत्नान् । मे । पिंश । मे । पृतनाऽयतः ।

पिंश । मे । सर्वान् । दुःऽहार्दः । पिंश । मे । द्विषतः । मणे ॥ ९ ॥

पिंश । ⧗पिश अवयवे । मुचादित्वाद् नुम्⧗ ॥

दशमी ॥

विध्यं दर्भ सपत्नान् मे विध्यं मे पृतनायतः ।

विध्यं मे सर्वान् दुर्हार्दो विध्यं मे द्विषतो मणे ॥ १० ॥

विध्यं । दर्भ । सऽपत्नान् । मे । विध्यं । मे । पृतनाऽयतः ।

विध्यं । मे । सर्वान् । दुःऽहार्दः । विध्यं । मे । द्विषतः । मणे ॥ १० ॥

विध्य । ⧗व्यध ताडने । दैवादिकः । "ग्रहिज्या०" इत्यादिना संप्रसारणम्⧗ ॥

इत्येकोनविंशे काण्डे चतुर्थेनुवाके द्वितीयं सूक्तम् ॥

"निक्ष दर्भ" इत्यादिकं [तृतीयं] सूक्तम् । अस्य ऐन्द्र्यां महाशान्तौ दर्भमणिबन्धने विनियोगः पूर्वसूक्तेन सह उक्तः ॥

तत्र प्रथमा ॥

निक्षं दर्भ सपत्नान् मे निक्षं मे पृतनायतः ।

निक्षं मे सर्वान् दुर्हार्दो निक्षं मे द्विषतो मणे ॥ १ ॥

निक्षं । दर्भ । सऽपत्नान् । मे । निक्षं । मे । पृतनाऽयतः ।

निक्षं । मे । सर्वान् । दुःऽहार्दः । निक्षं । मे । द्विषतः । मणे ॥ १ ॥

निक्ष चुम्ब । ⧗निक्ष चुम्बने इति धातुः⧗ । शिष्टं पूर्ववत् ॥

द्वितीया ॥

तृन्द्धि दर्भ सपत्नान् मे तृन्द्धि मे पृतनायतः ।

---

१ A C D S[m] Cs विध्य दर्भ. Dc विध्य द° changed to विध्यं द°. We with B[h] K K[m] R; and the other accents in the verse accordingly. २ B[h] दुर्हार्दो. ३ A B[h] C D R S[m] Cs निक्ष दर्भ, throughout the verse. Dc निक्ष द° changed to निक्षं द°. P J निक्ष ।. We with K K[m] V P[2].

तृन्द्धि मे सर्वान् दुर्हार्दस्तृन्द्धि मे द्विषतो मणे ॥ २ ॥

तृन्द्धि । दर्भ । सऽपत्नान् । मे । तृन्द्धि । मे । पृतनाऽयतः ।

तृन्द्धि । मे । सर्वान् । दुःऽहार्दः । तृन्द्धि । मे । द्विषतः । मणे ॥ २ ॥

तृन्द्धि नाशय । ⌈उतृदिर् हिंसानादरयोः । "श्नसोरल्लोपः" इति अकारलोपः⌉ ॥

तृतीया ॥

रुन्द्धि दर्भ सपत्नान् मे रुन्द्धि मे पृतनायतः ।

रुन्द्धि मे सर्वान् दुर्हार्दो रुन्द्धि मे द्विषतो मणे ॥ ३ ॥

रुन्द्धि । दर्भ । सऽपत्नान् । मे । रुन्द्धि । मे । पृतनाऽयतः ।

रुन्द्धि । मे । सर्वान् । दुःऽहार्दः । रुन्द्धि । मे । द्विषतः । मणे ॥३॥

रुन्द्धि आवृणु निरोधं कुरु । ⌈रुधिर् आवरणे⌉ ॥

चतुर्थी ॥

मृण दर्भ सपत्नान् मे मृण मे पृतनायतः ।

मृण मे सर्वान् दुर्हार्दो मृण मे द्विषतो मणे ॥ ४ ॥

मृण । दर्भ । सऽपत्नान् । मे । मृण । मे । पृतनाऽयतः ।

मृण । मे । सर्वान् । दुःहार्दः । मृण । मे । द्विषतः । मणे ॥ ४ ॥

⌈मृण हिंसायाम्⌉ ॥

पञ्चमी ॥

मन्थ दर्भ सपत्नान् मे मन्थ मे पृतनायतः ।

मन्थ मे सर्वान् दुर्हार्दो मन्थ मे द्विषतो मणे ॥ ५ ॥

मन्थ । दर्भ । सऽपत्नान् । मे । मन्थ । मे । पृतनाऽयतः ।

---

१ A B[h] C K[m] S[m] V °दुर्हार्दो तृन्धि. D Cs °दुर्हार्दो तृन्धि. Dc दुर्हार्दो changed to दुर्हार्दो. P P[2] °हार्दीम् ।. J °हार्दम् ।. We with R. २ A D S[m] Cs मंथ दर्भ सपत्नान्मे मंथ मे. Dc मंथ द° changed to मंथ द°. P J मंथ । in all places. We with C R V P[2]. ३ A C D S[m] मंथ मे सर्वान्दुर्हार्दो मंथ मे. Dc मंथ मे &c changed to मंथ मे. We with K[m] R V.

मन्थ । मे । सर्वान् । दुःऽहार्दः । मन्थ । मे । द्विषतः । मणे ॥ ५ ॥

मन्थ लोडने । गतम् अन्यत् ॥

षष्ठी ॥

पिण्ढि दर्भ सपत्नान् मे पिण्ढि मे पृतनायतः ।
पिण्ढि मे सर्वान् दुर्हार्दः पिण्ढि मे द्विषतो मणे ॥ ६ ॥
पिण्ढि । दर्भ । सऽपत्नान् । मे । पिण्ढि । मे । पृतनाऽयतः ।
पिण्ढि । मे । सर्वान् । दुःऽहार्दः । पिण्ढि । मे । द्विषतः । मणे ॥ ६ ॥

पिण्ढि । पिष चूर्णने । रौधादिकः । "हुझल्भ्यो हेर्धिः" इति धिः । ष्टुत्वं जश्त्वं च ॥

सप्तमी ॥

ओष दर्भ सपत्नान् मे ओष मे पृतनायतः ।
ओष मे सर्वान् दुर्हार्द ओष मे द्विषतो मणे ॥ ७ ॥
ओष । दर्भ । सऽपत्नान् । मे । ओष । मे । पृतनाऽयतः ।
ओष । मे । सर्वान् । दुःऽहार्दः । ओष । मे । द्विषतः । मणे ॥ ७ ॥

ओष । उष प्लुष दाहे । भौवादिकः । लघूपधगुणः[1] ॥

अष्टमी ॥

दह दर्भ सपत्नान् मे दह मे पृतनायतः ।
दह मे सर्वान् दुर्हार्दो दह मे द्विषतो मणे ॥ ८ ॥
दह । दर्भ । सऽपत्नान् । मे । दह । मे । पृतनाऽयतः ।
दह । मे । सर्वान् । दुःऽहार्दः । दह । मे । द्विषतः । मणे ॥ ८ ॥

स्पष्टम् ॥

---

१ K^m V °न्म ओष. Dc °न्मे ओष changed to °न्म ओष. We with B^h C D Cs. २ P ओष ।. ३ B^h C D R S^m Cs दुह दर्भ. Dc दुह दर्भ changed to दह दर्भ. P दुह । in all places. We with K^m V P^2 J.

---

1 S' लघूपधगुणाभावः.

नवमी ॥

जहि दर्भ सपत्नान् मे जहि मे पृतनायतः ।
जहि मे सर्वान् दुर्हार्दो जहि मे द्विषतो मणे ॥ ९ ॥
जहि । दर्भ । सऽपत्नान् । मे । जहि । मे । पृतनाऽयतः ।
जहि । मे । सर्वान् । दुःऽहार्दः । जहि । मे । द्विषतः । मणे ॥ ९ ॥

जहि । हन हिंसागत्योः । लोटि "हन्तेर्जः" इति जादेशः । आभाच्छास्त्रीयस्य असिद्धत्वाद् "अतो हेः" इति हेर्लुक् न भवति ॥

[इति] चतुर्थेनुवाके तृतीयं सूक्तम् ॥

"यत् ते दर्भ" इति चतुर्थं सूक्तम् । तस्य ऐन्द्र्याख्यायां महाशान्तौ दर्भमणिबन्धने विनियोगः पूर्वसूक्तेन सह उक्तः ॥

तत्र प्रथमा ॥

यत् ते दर्भ जरामृत्युः शतं वर्मसु वर्म ते ।
तेनेमं वर्मिणं कृत्वा सपत्नां जहि वीर्यैः ॥ १ ॥
यत् । ते । दर्भ । जराऽमृत्युः । शतम् । वर्मऽसु । वर्म । ते ।
तेन । इमम् । वर्मिणम् । कृत्वा । सऽपत्नान् । जहि । वीर्यैः ॥ १ ॥

हे दर्भ ते तव मर्मसु[1] ग्रन्थिषु [यत्] जरामृत्युः शतम् जरसा मृत्यूनां च शतम् । वर्तत इति शेषः । शतशब्दः अपरिमितवचनः । परुषाम् अपरिमितत्वात् । प्रतिपर्वविच्छेदस्य सुकरत्वात् जरामृत्युशतास्पदत्वं दर्भस्य । यच्च ते तव वर्म जरामृत्युपरिहारकं कवचम् अस्ति तेन मर्मगतजरामृत्युशतपरिहारकेण वर्मणा इमं तव धारकं रक्षाजयादिकामं पुरुषं वर्मिणम् आमुक्तवर्माणं कृत्वा वीर्यैः परकृतोपद्रवपरिहारशत्रुविजयकरणादिल-

१ P repeats जहि । मे । twice before पृतनाऽयतः ।. We with P̊ J. २ So we with A B̊ C D K̊ R S̊ V Dc Cs P P̊ J.

1 Sâyaṇa's text, however, is वर्मसु. 2 Here about sixteen letters are almost altogether torn away at the end of the line on the palm leaf and are here supplied by guess.

क्षणैः सामर्थ्यैः सपत्नान् अमुष्य राज्ञः शत्रून् जहि पराभव नाशय ॥

द्वितीया ॥

शतं ते दर्भ वर्माणि सहस्रं वीर्याणि ते ।
तमस्मै विश्वे त्वां देवा जरसे भर्तवा अदुः ॥ २ ॥

शतम् । ते । दर्भ । वर्माणि । सहस्रम् । वीर्याणि । ते ।
तम् । अस्मै । विश्वे । त्वाम् । देवाः । जरसे । भर्तवै । अदुः ॥ २ ॥

हे दर्भ मणिरूप ते तव मर्माणि पर्वाणि परकृतपीडाविषयभूतानि [शतं] सन्ति । तत्परिहाराय ते तव वीर्याणि सामर्थ्यान्यपि सहस्रम् सहस्रसंख्याकानि सन्ति । तं तादृशं मर्मशताच्छादनसाधनवीर्योपेतं त्वाम् अस्मै रक्षादिकामाय राज्ञे विश्वे सर्वे देवाः जरसे जरानिमित्तम्[1] अस्य जरापरिहाराय भर्तवै भरणाय पोषणाय प्रयोजनाय अदुः दत्तवन्तः । अतः अमुष्य जरां परिहृत्य भरणं कुर्वित्यर्थः । भर्तवै । तवैप्रत्ययः ॥

तृतीया ॥

त्वामाहुर्देववर्म त्वां दर्भ ब्रह्मणस्पतिम् ।
त्वामिन्द्रस्याहुर्वर्म त्वं राष्ट्राणि रक्षसि ॥ ३ ॥

त्वाम् । आहुः । देवऽवर्म । त्वाम् । दर्भ । ब्रह्मणः । पतिम् ।
त्वाम् । इन्द्रस्य । आहुः । वर्म । त्वम् । राष्ट्राणि । रक्षसि ॥ ३ ॥

हे दर्भ मणे त्वां देववर्म आहुः देवानां रक्षणार्थं कवचम् आहुः । तथा त्वां ब्रह्मणस्पतिम् वेदस्य पालयितारम् एतन्नामानं देवम् आहुः[2] वेदविदितस्यापि रक्षाकारित्वात् । किं च त्वाम् इन्द्रस्य देवाधिपतेरपि वर्म

१ A S^m and Sâyaṇa's text: ममाणि. We with B^h C D K^m R Dc Cs P P^2 J. २ A B^h C R V Cs त्वमस्मै. Dc त्वमस्मै changed to तमस्मै. P P^2 J त्वम् ।. We with D K K^m S^m V. ३ P विश्वे ।. We with P^2 J. ४ P भर्तवै ।. We with P^2 J. ५ A B^h C D R S^m Cs °देव° for °देव°. P J देवऽवर्म ।. We with K K^m V Dc P^2.

1 S' जरामित्त for जरानिमित्तम्. 2 Sâyaṇa's text reads त्वामाहुर्देववर्म त्वामाहुर्ब्रह्मणस्पतिं for our त्वामाहुर्देववर्म त्वां दर्भ ब्रह्मणस्पतिम्.

कवचम् आहुः । देवा बृहस्पतिरिन्द्रश्च त्वां स्वस्वरक्षार्थं धारयन्ति इत्यभिप्रायः । यत एवम् अतस्त्वं राष्ट्राणि [त्वां] धारयतो राज्ञो राज्यानि रक्षसि पालयसि पालय ॥

चतुर्थी ॥

सपत्नक्षयणं दर्भ द्विषतस्तपनं हृदः ।
मणिं क्षत्रस्य वर्धनं तनूपानं कृणोमि ते ॥ ४ ॥

सपत्नऽक्षयणम् । दर्भ । द्विषतः । तपनम् । हृदः ।
मणिम् । क्षत्रस्य । वर्धनम् । तनूऽपानम् । कृणोमि । ते ॥ ४ ॥

हे दर्भ ते त्वा त्वां सपत्नक्षयणम् शत्रूणां नाशकम् । ♦ "कृत्यल्युटो बहुलम्" इति कर्तरि ल्युट् ♦ । तथा द्विषतः द्वेष्टुः हृदः हृदयस्य तपनम् संतापकं क्षत्रस्य बलस्य[1] वर्धनम् वर्धकम् । तथा तनूपानम् तन्वाः शरीरस्य पातारं रक्षितारम् एवंमहानुभावं मणिं कृणोमि करोमि ॥ अथ वा रक्षाकामः पुरुषः संबोध्यते । हे राजन् दर्भमणिं[2] सपत्नक्षयणादिसामर्थ्योपेतं ते तुभ्यं क्षत्रस्य वर्धनं तनूपानं च कृणोमीति संबन्धनीयम् ॥

पञ्चमी ॥

यत् समुद्रो अभ्यक्रन्दत् पर्जन्यो विद्युता सह ।
ततो हिरण्ययो[2] बिन्दुस्ततो दर्भो अजायत ॥ ५ ॥

यत् । समुद्रः । अभिऽअक्रन्दत् । पर्जन्यः । विऽद्युता । सह ।
ततः । हिरण्ययः । बिन्दुः । ततः । दर्भः । अजायत ॥ ५ ॥

यत् यस्मिन् स्थाने समुद्रः समुद्रवन्ति अस्माद् आप इति समुद्रः । तादृशः पर्जन्यः मेघो विद्युता सह अभ्यक्रन्दत् अभिक्रन्दनं स्तननम् अ-

१ P² हृदः ।. २ A B^h C D R S^m Cs हिरण्ययो विंदु°. Dc हिरण्ययो बिंदु° changed to हिरण्ययो विंदु°. P विंदुः ।. We with K K^m V P² J.

1 S′ बलवर्धनं वधवर्धकं for बलस्य वर्धनम् वर्धकम्. 2 S′ inserts a ते before दर्भ°.

कार्षीद् वृष्ट्युत्पादनाय[1] ततः अभिक्रन्दतो मेघात् [हिरण्ययो] हिरण्मयो बिन्दुः उदभूत् । [ततः] तस्माद् उत्पन्नात् हिरण्यबिन्दोः सकाशाद् दर्भो अजायत प्रादुर्बभूव । अनेन दर्भोत्पत्तिवर्णनेन दर्भमयस्य मणेरतिशयितवीर्यत्वम् उक्तं भवति । ॥ हिरण्यय इति । "ऋत्व्यवास्त्व्यवास्त्व॰" इत्यादिना हिरण्मयशब्दस्य मयटो मकारलोपो निपातितः ॥ ॥

[इति] चतुर्थेनुवाके चतुर्थं सूक्तम् ॥

"औदुम्बरेण" इत्यादिकं पञ्चमं सूक्तम् । अस्य "कौबेरीं धनकामस्य धनक्षये[2] च" [न॰क॰१७] इति विहितायां कौबेर्याख्यायां महाशान्तौ औदुम्बरमणिबन्धने विनियोगः । उक्तं नक्षत्रकल्पे । "औदुम्बरेण मणिना पुष्टिकामाय वेधसा इत्यौदुम्बरं कौबेर्याम्" इति [न॰क॰१९] ॥

तत्र प्रथमा ॥

औदुम्बरेण मणिना पुष्टिकामाय वेधसा ।
पशूनां सर्वेषां स्फातिं गोष्ठे मे सविता करत् ॥ १ ॥

औदुम्बरेण । मणिना । पुष्टिऽकामाय । वेधसा ।
पशूनाम् । सर्वेषाम् । स्फातिम् । गोऽस्थे । मे । सविता । करत् ॥ १ ॥

औदुम्बरेण उदुम्बरनिर्मितेन मणिना । ॥ "तस्य विकारः" इति अण् प्रत्ययः ॥ । पुष्टिकामाय पशुपुत्रधनशरीरादिविषयं पोषं कामयमानाय पुरुषाय तदर्थं वेधसा विधात्रा पुरा प्रयोगः कृतः । यद्वा वेधसा पुष्ट्यादिविधात्रा कर्त्रा मणिना पुष्टिकामाय तव रक्षां करोमीति व्याख्येयम् । अतः सर्वेषां गोमहिषाश्वाजगजादिरूपाणां पशूनाम् । चतुष्पादाः पशवः । तेषाम् । अथ वा द्विपादश्चतुष्पादश्च पशवः । उभयविधानां परिग्रहाय सर्वेषाम् इत्युक्तम् । तेषां स्फातिम् । ॥ स्फायी वृद्धौ । क्तिनि यलोपः ॥ । अभिवृद्धिं मे मम गोष्ठे गवां निवासस्थाने । ॥ "घञर्थे कविधानम्" इति अधिकरणे कप्रत्ययः । "अम्बाम्बगोभूमि॰" इत्यादिना मूर्धन्यादेशः ॥ । सविता प्रसविता

1 S' कृष्ट्यु॰. 2 S' om. धन॰.

सर्वस्य अनुज्ञाता प्रेरकः एतन्नामको देवः करत् कुर्यात् । करोतेः पञ्चमलकारः । "सविता वै प्रसवानाम् ईशे" इत्यादि श्रुतेः [ऐ° ब्रा° १.१६] सवितुः सर्वस्य प्रेरकत्वाद् "देवो वः सविता प्रार्पयतु" इति [तै° सं° १.१.१.१] गवां व्याघ्रतस्करादिकृतनाशपरिहाराय प्रार्पणप्रार्थनश्रुतेश्च[1] सवितुः सर्वपशुस्फातिप्रार्थना युक्ता ॥

द्वितीया ॥

यो नो अग्निर्गार्हपत्यः पशूनामधिपा असत् ।
औदुम्बरो वृषा मणिः स मा सृजतु पुष्ट्या[1] ॥ २ ॥

यः । नः । अग्निः । गार्हऽपत्यः । पशूनाम् । अधिऽपाः । असत्[2] ।
औदुम्बरः । वृषा । मणिः । सः । मा । सृजतु । पुष्ट्या[1] ॥ २ ॥

यो गार्हपत्योग्निः । गृहपतिना यजमानेन सह[2] संयुक्तोग्निर्गार्हपत्यः । यस्तत्संज्ञकोग्निरस्ति । "गृहपतिना संयुक्ते ञ्यः" इति ञ्यः । स नः अस्माकं पशूनाम् गवाश्वादीनाम् अधिपाः अधिष्ठाय पाता असत् भवेत् । अस्तेर्लेटि अडागमः । "इह पशवो विश्वरूपा रमन्ताम् अग्निं गृहपतिम् अभिसंवसानाः" [तै° ब्रा° ३.७.४.५] इति मन्त्रवर्णाद् अग्निहोत्रे "पशून् मे यच्छ" इति [आश्व° २.३] गार्हपत्यप्रार्थनाविधानाच्च पशूनाम् आधिपत्यं तस्य सिद्धम् । अतः गार्हपत्योग्निः पशून् पालयतु चोरादिभयेभ्यः । औदुम्बरः उदुम्बरविकारो वृषा अभिमतफलवर्षको मणिः पुष्ट्या पोषेण[3] शरीराभिवृद्ध्या आ* सर्वतः सं* सृजतु । पशूनां पुष्टिं करोत्वित्यर्थः । "ऊर्ग् वा उदुम्बरः" इति श्रुतेः [तै° सं° २.१.१.६] अन्नरूपत्वात् पोषकत्वं तस्य युक्तम् ॥

तृतीया ॥

करीषिणीं फलवतीं स्वधामिरां च नो गृहे ।

१ Dc सृजतु पुष्ट्या changed to सृजतु पुष्ट्यां. K K^m V सृजतु पुष्ट्यां. P^2 पुष्ट्यां ।. We with A B^h C D R S^m Cs P J. २ P असत् ।. We with P^2 J.

1 S' प्रापण°. 2 S' सत्यं for सह. 3 S' पोषण.

औदुम्बरस्य तेजसा धाता पुष्टिं दधातु मे ॥ ३ ॥

करीषिणीम् । फलऽवतीम् । स्वधाम् । इराम् । च । नः । गृहे ।
औदुम्बरस्य । तेजसा । धाता । पुष्टिम् । दधातु । मे ॥ ३ ॥

करीषिणीम् करीषो गवां शकृत् । प्रभूतेन करीषेण तद्वतीम् । अनेन गवां समृद्धिरुक्ता भवति तदभावे करीषाभावात् । तादृशीं स्वधाम् । अन्ननामैतत् । स्वस्मिन् धीयत इति व्युत्पत्तेः । व्रीहियवादिलक्षणम् अन्नं फलवतीम् प्रकृष्टेन फलेन उपेताम् इरां च भूमिमपि । अथ वा इरा इला गौः । जात्येकवचनम् । गावः । अत्र करीषिणीं फलवतीम् इति विशेषणद्वयं स्वधाम् इरां च उभयमपि विशिनष्टि । उभयत्रापि संबन्धयोग्यतासंभवात् । नः अस्माकं गृहे । करत् इति संबन्धः । औदुम्बरस्य उदुम्बरविकारस्य मणेस्तेजसा सामर्थ्येन धाता सर्वस्य विधाता एवंनामको देवः पुष्टिम्[1] शरीरादिपोषं मे मम दधातु स्थापयतु । करोत्वित्यर्थः ॥

चतुर्थी ॥

यद् द्विपाच्च चतुष्पाच्च यान्यन्नानि ये रसाः ।
गृह्णे३ऽहं त्वेषां भूमानं बिभ्रदौदुम्बरं मणिम् ॥ ४ ॥

यत् । द्विऽपात् । च । चतुःपात् । च । यानि । अन्नानि । ये । रसाः ।
गृह्णे । अहम् । तु । एषाम् । भूमानम् । बिभ्रत् । औदुम्बरम् । मणिम् ॥४॥

द्विपात् पादद्वयोपेतं पुरुषादिकं यत् पशुजातम् अस्ति । यच्च चतुष्पात् पादचतुष्टयोपेतं गवादिकम् अस्ति । ⌛ उभयत्र "संख्यासुपूर्वस्य"

१ B^h औदंम्बर°. २ K K^m V पुष्टिं दधातु मे. Dc पुष्टिं द° changed to पुष्टिं द°. We with B^h C D R S^m Cs. ३ D ते. We with A C K K^m R S^m V Dc Cs. ४ S^m Dc यान्यन्नानि ये रसा. Cs [या]न्यन्यानि ये रसा. R यान्यन्यानि ये रसा. We with A B^h C D K K^m V. ५ D R S^m Cs have no kampa-figure. We with A C K K^m V Dc. ६ K K^m V त्वेषां. Dc त्वेषां changed to त्वेषां. We with A B^h C D R S^m Cs. ७ P P^2 omit the avagraha. We with J. ८ J रसा । changed to रसाः ।. We with P P^2. ९ P J एषाम् ।. We with P^2.

1 S' मे पुष्टिं for पुष्टिम्, unnecessarily repeating मे when मे मम follows °दिपोषं.

इति पादस्य लोपः समासान्तः। "द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ" इति द्विपाच्छब्दस्य अन्तोदात्तत्वम्। चतुष्पाद् इति। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्॥ यानि च अन्नानि तिलमाषव्रीहियवप्रियङ्ग्वादीनि ग्राम्याणि अन्नानि। यानि[1] च अरण्यजानि अन्नानि ये च रसाः दधिक्षीरमधुगुडादिरूपाः सन्ति एषाम्[2] उक्तानां सर्वेषां भूमानम् बहुभावम्। ॥बहुशब्दाद् इमनिचि "बहोर्लोपो भू च बहोः" इति इमनिच आदिलोपो बहोर्भूभावश्च॥। औदुम्बरं मणिं बिभ्रद् अहं गृह्णे स्वीकरोमि भजामि॥

पञ्चमी॥

पुष्टिं पशूनां परि जग्रभाहं चतुष्पदां द्विपदां यच्च धान्यम्।
पयः पशूनां रसमोषधीनां बृहस्पतिः सविता मे नि यच्छात्॥ ५॥

पुष्टिम्। पशूनाम्। परि। जग्रभ। अहम्। चतुःऽपदाम्। द्विऽपदाम्। यत्। च। धान्यम्।
पयः। पशूनाम्। रसम्। ओषधीनाम्। बृहस्पतिः। सविता। मे। नि। यच्छात्॥ ५॥

अहं पशूनां द्विपदां चतुष्पदां च यच्च धान्यम् व्रीहियवादिरूपं तस्यापि पुष्टिम् पोषं परि जग्रभ परिग्रहं करोमि। ॥ग्रहेश्छान्दसे लिटि उत्तमैकवचने णलि "णलुत्तमो वा" इति णित्त्वस्य विकल्पितत्वाद् वृद्ध्यभावः॥। किं च सविता सर्वस्य अनुज्ञाता बृहस्पतिर्देवः पशूनाम् गोमहिष्यादीनां पयः तथा ओषधीनाम् व्रीह्यादीनां रसम् सारभूतम्[3] अंशं मे मह्यं नि यच्छात्। औदुम्बरस्य तेजसा इति शेषः। प्रयच्छतु। ॥यम उपरमे। लेटि "इषुगमियमां छः" इति छादेशः। आडागमः॥॥

१ P पुष्टिम्।. We with P J. २ P °पादाम्।.

1 S′ याणि यानि for यानि. 2 S′ तेषाम्. 3 S′ सारभूतभूततमंशं for सारभूतम् अंशं.

षष्ठी ॥

अहं पशूनामधिपा असानि मयि पुष्टं पुष्टपतिर्दधातु ।
मह्यमौदुम्बरो मणिर्द्रविणानि नि यच्छतु ॥ ६ ॥

अहम् । पशूनाम् । अधिऽपाः । असानि । मयि । पुष्टम् । पुष्टऽपतिः । दधातु ।
मह्यम् । औदुम्बरः । मणिः । द्रविणानि । नि । यच्छतु ॥ ६ ॥

"मह्यमौदुम्बरः" इति अर्धर्चः उत्तरमन्त्रे वा द्रष्टव्यः । अहं पुष्टिकामः पशूनाम् द्विपदां चतुष्पदां[1] च अधिपाः अधिष्ठाय पालकः स्वामी असानि भवानि । अधिपूर्वात् पातेर्विच् । असानीति । अस्तेर्लोटि "आडुत्तमस्य पिच्च" इति आडागमः । तदर्थं मयि पुष्टिकामे पुष्टम्[2] पोषं पश्वादेः समृद्धिम्[3] । "नपुंसके भावे क्तः" इति क्तः । तत् पुष्टपतिः पश्वादिपोषस्वामी औदुम्बरो मणिः दधातु प्रयच्छतु । एवं मह्यम् औदुम्बरो मणिः द्रविणानि हिरण्यानि नि यच्छतु नियमयतु प्रयच्छतु ॥

सप्तमी ॥

उप मौदुम्बरो मणिः प्रजया च धनेन च ।
इन्द्रेण जिन्वितो मणिरा मागन्त्सह वर्चसा ॥ ७ ॥

उप । मा । औदुम्बरः । मणिः । प्रऽजया । च । धनेन । च ।
इन्द्रेण । जिन्वितः । मणिः । आ । मा । अगन् । सह । वर्चसा ॥७॥

मा माम् औदुम्बरो मणिः प्रजया पुत्रपौत्रादिरूपया च धनेन हिरण्यादिलक्षणेन गवादिरूपेण च सह उप । उपसर्गश्रुतेः सामर्थ्याद् आगन्निति आकृष्यते । आगमत् । एवं स मणिः इन्द्रेण

१ A B[h] C D K K[m] R Dc Cs असानि. P P[2] J असानि ।. We with S[m]. २ A B[h] R उपमौदु°. D उपमौदु°. Dc उपमोदु° We with C K K[m] S[m] V Cs. ३ A B[h] C D K K[m] R S[m] V Dc Cs जिन्वतो. P P[2] J जिन्वतः ।. We with Sâyana, and the accents accordingly.

1 S′ यच्चतुष्पदां. 2 S′ पुष्टिम्, though the text in S′ is पुष्टं. 3 S′ समृद्धम्.

जिन्वितः प्रीणितः प्रेरितः वर्चसा अस्मदभिमतेन तेजोविशेषेण सह मा माम् आगन् आगमत् । ◊जिन्वित इति । इवि जिवि धिवि प्रीणनार्थाः । धातूपदेशावस्थायामेव नुमागमः । कर्मणि निष्ठायाम् इडागमः । इदित्वाद् नकारलोपाभावः । अगन्निति । गमेर्लुङि "मन्त्रे घस॰" इति च्लेर्लुक् । "मो नो धातोः" इति नत्वम्◊ ॥

अष्टमी ॥

देवो मणिः सपत्नहा धनसा धनसातये ।
पशोरन्नस्य भूमानं गवां[1] स्फातिं नि यच्छतु ॥ ८ ॥

देवः । मणिः । सपत्नऽहा । धनऽसाः[2] । धनऽसातये ।
पशोः[3] । अन्नस्य । भूमानम् । गवाम् । स्फातिम्[4] । नि । यच्छतु ॥८॥

देवः द्योतमानो मणिः औदुम्बरः । पुष्ट्यर्थं देवैर्निर्मितत्वाद् देव इत्युच्यते । तादृशो मणिः सपत्नहा सपत्नानां हन्ता तथा धनसाः[1] धनानाम् अस्मदभिलषितानां साता दाता । ◊वन षण संभक्तौ । "जनसनखनक्रमगमो विट्" । "विड्वनोरनुनासिकस्यात्" इति आत्वम्◊ । एवंरूपो मणिः धनसातये धनाना लाभाय भवतु । ◊"जनसनखनां सन्झलोः" इति आत्वम्◊ । किं च पशोः अन्नस्य च भूमानम् बहुभावं समृद्धिं नि यच्छतु । तथा गवां स्फातिम् अभिवृद्धिं च नि यच्छतु[2] । यद्यपि पशुभूम्नैव गोस्फातिरप्युक्ता तथापि गवाम् अतिशयेनोपयोगात् प्राधान्याय पुनरभिधानम् । "देवा वा ऊर्जं व्यभजन्त । तत उदुम्बर उदतिष्ठत्" इति श्रुतेः [तै॰ब्रा॰ १.१.३.१०] ऊर्क्संबन्धाद् अन्नसमृद्धिकारकत्वम् ॥

---

१ A B^h C D R S^m गवां स्फातिर्नि. Dc गवां स्फातिर्नि corrected to गवां स्फातिं नि. K^m V गवां स्फातिं with Sâyaṇa, retaining the accents of the MSS. We with Dc J and Sâyaṇa as regards the case and Dc P^2 as to accents. २ P P^2 J धनसा ।. ३ P पशौः ।. We with P^2 J. ४ P स्फातिः ।. P^2 स्फातिः ।. J स्फातिम् । changed to स्फातिः ।.

---

1 S′ धनसा for धनसाः. 2 S′ यच्छति.

नवमी ॥

यथाग्रे त्वं वनस्पते पुष्ट्या सह जज्ञिषे ।
एवा धनस्य मे स्फातिमा दधातु सरस्वती ॥ ९ ॥

यथा । अग्रे । त्वम् । वनस्पते । पुष्ट्या । सह । जज्ञिषे ।
एव । धनस्य । मे । स्फातिम् । आ । दधातु । सरस्वती ॥ ९ ॥

हे वनस्पते वनस्य पालक औदुम्बरमणे । विकारे प्रकृतिशब्दः । त्वं यथा अग्रे ओषधिवनस्पतिसृष्टिसमये पुष्ट्या पोषेण सह उत्पत्तिसमय एव जज्ञिषे उत्पन्नोसि एव एवं मे धनस्य स्फातिम् अभिवृद्धिं त्वया साधनभूतेन सह सरस्वती सरणवती वाग्देवी आ दधातु करोतु । आङ्पूर्वो दधातिः करोत्यर्थे वर्तते । एवा धनस्येत्यत्र "निपातस्य च" इति सांहितिको दीर्घः ॥

दशमी ॥

आ मे धनं सरस्वती पयस्फातिं च धान्यम् ।
सिनीवाल्युपा वहादयं चौदुम्बरो मणिः ॥ १० ॥

आ । मे । धनम् । सरस्वती । पयःऽस्फातिम् । च । धान्यम् ।
सिनीवाली । उप । वहात् । अयम् । च । औदुम्बरः । मणिः ॥१०॥

सरस्वती देवी मे मम धनम् हिरण्यादिलक्षणं पयस्फातिम् पयसोऽभिवृद्धिं च । अनेन पयसोऽभिवृद्धिप्रार्थनेन गोसमृद्धिः प्रार्थिता भवति । तथा धान्यं च । व्रीहियवादीनाम् ओषधीनां फलानि धान्यानि । अत्र जातावेकवचनम् । आ इति उपसर्गश्रुतेः वहत्विति योग्यक्रियाध्याहारः । एवं सिनीवाली देवता च । "दृष्टचन्द्रा सिनीवाली न-

१ K $K^m$ V वनस्पते पुष्ट्यां. $P^2$ पुष्ट्यां ।. Dc वनस्पते पुष्ट्या changed to वनस्पते पुष्ट्यां. We with A $B^h$ C D R $S^m$ Cs P J. २ A $B^h$ C D K $K^m$ R V Dc Cs जज्ञिषे. P J जज्ञिषे ।. We with $P^2$. ३ A $B^h$ C D R $S^m$ मे स्फातिमा. Dc मे स्फातिमा changed to मे स्फातिमा. P स्फातिम् ।. J स्फातिम् ।. We with $K^m$ V $P^2$ Dc. ४ A $B^h$ °ल्युपा° corrected from °ल्युपा°. ५ P $P^2$ J अवहात् ।.

ष्टचन्द्रा कुहूर्मता" इति श्रुतेः दृष्टचन्द्रामावास्याभिमानिदेवता सिनीवाली । सा च धनादिकम् उपा[1] वहात् । अयं धार्यमाण औदुम्बरो मणिश्च उप[1] वहात् उपावहतु प्रापयतु । ॥ वह प्रापणे । लेटि आडागमः ॥ ॥ अथ वा सरस्वती मे धनम् हिरण्यरजतमणिमुक्तादिलक्षणं हस्तेन धारणयोग्यम् आ गमयतु । पयस्फातिं धान्यं च सिनीवाली औदुम्बरो मणिश्च उपा[1] वहात् समीपदेशं प्रापयतु इति व्यवस्था ॥

एकादशी ॥

त्वं मणीनामधिपा वृषासि त्वयि पुष्टं पुष्टपतिर्जजान ।
त्वयीमे वाजा[1] द्रविणानि सर्वौदुम्बरः स त्वमस्मत्[2] सहस्वारादरातिम[3]-
मतिं क्षुधं च ॥ ११ ॥

त्वम् । मणीनाम् । अधिऽपाः । वृषा । असि । त्वयि । पुष्टम् । पुष्टऽपतिः । जजान ।
त्वयि । इमे इति । वाजाः[4] । द्रविणानि । सर्वाः । औदुम्बरः । सः । त्वम् । अस्मत् । सहस्व । आरात् । अरातिम् । अमतिम् । क्षुधम् । च ॥ ११ ॥

हे औदुम्बर मणे त्वं मणीनाम् इतरेषां रक्षासमृद्धिजयादिसाधनानां दर्भादिनिर्मितानाम् अधिपः[2] स्वामी वृषा अभिमतफलवर्षिता च असि । अधिपत्वे कारणम् आह । यतः त्वयि पुष्टम् गवाश्वादीनां सर्वेषां पोषं पुष्टपतिः[3] सर्वपदार्थपोषकर्ता[4] प्रजापतिः जजान उदपादयद् अकरोत् । अतः मणीनाम् अधिपो वृषा चासि । अस्तु किं तत इत्यत आह । त्वया सर्वसमृद्ध्यास्पदभूतेन मे मह्यं वाजाः "अन्नं वै वाजः" इति

१ D वाजा द्रविणा°. Ŝ वाजा द्रविणा°. Cs वाजा. We with A B̂ K K̂ R V Dc. २ A B̂ D त्वमस्मत्. We with C K̂ R Ŝ V Dc Cs. ३ A B̂ C D K̂ R Ŝ Dc Cs P P̂ °रातिमृतं. P P̂ J अमृतम्।. We with Sâyaṇa, and the accents accordingly. V °रातिममितं, an instance of both wrong borrowing and wrong retention of the old accent. ४ P P̂ J वाजा।.

1 So S′. 2 S′ Sâyaṇa's text, however, exhibits अधिपा वृषा°. 3 S′ पुष्टिपतिः. 4 S′ inserts त्वा after °कर्ता.

[तै॰ सं॰ ५.४.६.६] श्रुतेः बहुविधानि अन्नानि सर्वा सर्वाणि द्रविणानि द्रावयितव्यानि हिरण्यरजतादीनि । सर्वशब्देन मणिमुक्ताप्रवालादिलक्षणानि परिगृह्यन्ते । संभवन्तु इति शेषः । हे औदुम्बर स तादृशः वाजद्रविणादिसाधकस्त्वम् अस्मत् अस्मत्तः सहस्व अभिभव अपगमय । अभिभाव्यानि कानीत्याकाङ्क्षायाम् उच्यते आराद् अरातिम् इति । आरात् अत्यन्तं दूर एव अरातिम् अदानम् अलाभम् अमतिम् दारिद्र्यं मत्यभावं बुद्धिभ्रंशं वा क्षुधम् अशनाभावम् एतत् सर्वम् अस्मत् आरादेव सहस्व ॥

द्वादशी ॥

ग्रामणीरसि ग्रामणीरुत्थायाभिषिक्तोभि मा सिञ्च वर्चसा ।
तेजोसि तेजो मयि धारयाधि रयिरसि रयिं मे धेहि ॥ १२ ॥

ग्रामऽनीः । असि । ग्रामऽनीः । उत्थाय । अभिऽसिक्तः । अभि । मा । सिञ्च । वर्चसा ।
तेजः । असि । तेजः । मयि । धारय । अधि । रयिः । असि । रयिम् । मे । धेहि ॥ १२ ॥

हे औदुम्बर त्वं ग्रामणीरसि । ग्रामं नयतीति ग्रामणीः ग्रामस्वामी । स यथा प्रधानभूतः एवं त्वं सर्वेषां मणीनां प्रधानभूतोसि । अतः अस्माकमपि ग्रामणीर्भव । अभिमतफलप्रापको भवेत्यर्थः । अथ वा मा-

१ A °रुक्थ्याया°. Dc °रुत्थ्यायि° changed to °रुक्थ्यायि°. B̊[h] C °रुत्थाया°. D R S̊[m] °रुत्थ्याया°. K̊[m] V °रुक्थ्याया°. Cs °रुत्थ्याया°. P P̊[2] उच्छ्याय ।. J उत्थ्याय changed to उत्थ्यायि ।. In all the MSS. the त्थ is doubtful between त्थ and च्छ. Sâyaṇa's text reads: °णीछाया° for °णीरुत्थाया°, dropping the रु. May he have read उच्छ्राय? (He says मां श्रेष्ठं कुरु). उच्छ्राय (for उच्छ्रय) may be a better and less difficult reading than उत्थाय, unless the latter can be taken to mean उत्तिष्ठ. We with B̊[h] C. २ A D K̊[m] S̊[m] V Dc षिञ्च. We with B̊[h] C R Cs. ३ So all our MSS. and Vaidikas. But the want of two syllables in the fourth pâda would suggest (the *Sarvânukramaṇikâ* notes: पुष्टिं पशूनां ग्रामणीरसि त्रिष्टुभौ,) that धारयाध्यधिरयिरसि रयिं मे धेहि may have been the original reading. ४ P P̊[2] J ग्रामणीः ।.

मपि श्रेष्ठं कुरु । त्वं वर्चसा अभिषिक्तोसि अभित आच्छन्नोसि । [मा] मामपि वर्चसा अभि षिञ्च अभिषिक्तं कुरु । हे मणे त्वं तेजोसि साक्षात् तेजोरूपोसि अतः मयि तेजो धारय । किं च त्वम् अधिरयिः अधिगतरयिः प्राप्तधनः असि । रयिं मे धेहि स्थापय प्रयच्छ । रयिर्धनम् । ॥ रातेर्दानकर्मणः [नि० ४.१७] ॥ ॥

[त्रयोदशी चतुर्दश्यौ]॥

पुष्टिरसि पुष्ट्या मा समङ्ग्धि गृहमेधी गृहपतिं मा कृणु ।
औदुम्बरः स त्वमस्मासु धेहि रयिं च नः सर्ववीरं नि यच्छ रायस्पोषाय प्रति मुञ्चे अहं त्वाम् ॥ १३ ॥

पुष्टिः । असि । पुष्ट्या । मा । सम् । अङ्ग्धि । गृहऽमेधी । गृहऽपतिम् । मा । कृणु ।
औदुम्बरः । सः । त्वम् । अस्मासु । धेहि । रयिम् । च । नः । सर्वऽवीरम् । नि । यच्छ । रायः । पोषाय । प्रति । मुञ्चे । अहम् । त्वाम् ॥ १३ ॥

अयमौदुम्बरो मणिर्वीरो वीराय बध्यते ।
स नः सनिं मधुमतीं कृणोतु रयिं च नः सर्ववीरं नि यच्छात् ॥ १४ ॥

अयम् । औदुम्बरः । मणिः । वीरः । वीराय । बध्यते ।
सः । नः । सनिम् । मधुऽमतीम् । कृणोतु । रयिम् । च । नः । सर्वऽवीरम् । नि । यच्छात् ॥ १४ ॥

त्रयोदशी ॥ हे मणे त्वं साक्षात् [पुष्टिः] पुष्टिरूपोसि । अतः पुष्ट्या पोषेण मा मां समङ्ग्धि सम्यग् अक्तं कुरु । समृद्धं कुरु । तथा गृहमेधी त्वम् असि । मा मां गृहपतिम् धनकनकादिसमृद्धस्य गृहस्य[1]

१ K K̈ V Dc P̈ पुष्टिरसि पुष्ट्या. We with A B̈ C D R S̈ Cs P J. २ B̈ C R समिन्धि. P P̈ J सम् । इन्धि ।. We with D K̈ S̈ V Dc Cs. ३ A B̈ D S̈ सत्वमस्मा°. We with C K K̈ R V Dc Cs. ४ K K̈ V स नः सनिं. Dc स नः सनिं changed to स नः सनिं. We with A B̈ C D R S̈ Cs.

1 S′ has सर्वदा गृहस्य for गृहस्य.

स्वामिनं सोमयागादिकर्मानुष्ठातारं वा कृणु कुरु । हे औदुम्बर मणे स तादृशः उक्तविधनानाधर्मोपेतस्त्वम्[1] त्वयि विद्यमाना [ये] ग्रामणीत्ववर्चस्वित्वतेजोरूपत्वाधिरयित्वादयो धर्माः सन्ति तान् सर्वान् अस्मासु धेहि स्थापय । किं च नः अस्माकं सर्ववीरम् सर्वे वीराः पुत्रभृत्यादयो यस्यां रय्यां तुष्यन्ति तादृशं रयिम् धनं च नि यच्छ प्रयच्छ । यद्वा[2] सर्ववीरं यथा भवति तथा रयिं प्रयच्छेत्यर्थः ॥

चतुर्दशी ॥ हे मणे अहं धनादिपुष्टिकामस्त्वां रायस्पोषाय धनानां पुष्ट्यै । "षष्ठ्याः पतिपुत्र०" इत्यादिना सत्वम्[3] । प्रति मुञ्चे बध्नामि । प्रतिमोको बन्धनम् । "रुक्मम् अन्तरं प्रति मुञ्चते" इत्यादिश्रुतेः [तै०सं०५.१.१०.३] । एतदेव परोक्षेण पुनरभिधीयते फलान्तरसंबन्धाय । [अयं] वीरः[4] विविधम् ईरयति अमित्रान् इति वीरः । तादृश औदुम्बरो मणिः वीराय[4] वीरत्वाय यथा स्वयं वीरो भवति तथाभावाय बध्यते । स तादृशो मणिः नः अस्माकं मधुमतीम् । मधुवद् उपयुज्यमानत्वं मधुशब्देन उच्यते । तद्वतीं सनिम् धनादिलब्धिं कृणोतु करोतु । तथा नः अस्माकं रयिं च सर्ववीरं यथा भवति तथा । अतिप्रभूतम्[5] इत्यर्थः । यद्वा पुत्रादयो वीराः । तैः सहितं यथा भवति तथा रयिं नि यच्छात् पुत्रादीन् रयिं च नियच्छत्वित्यर्थः ॥

[इति] चतुर्थेनुवाके पञ्चमं सूक्तम् ॥

"शतकाण्डो दुश्च्यवनः" इत्यादिकं षष्ठं सूक्तम् । तस्य "याम्यां यमभये" [न०क०१७.] इति विहितायां याम्याख्यायां महाशान्तौ दर्भमणिबन्धनं कुर्यात् । सूत्रितं हि नक्षत्रकल्पे । "नेच्छत्रुरिति[२.२७] "पाठामूलम् अपराजितायाम् शतकाण्डो दुश्च्यवनः[१९.३२] इति दर्भ- "मणिं याम्याम्[6]" इति [न०क०१९.] ॥

---

1 S′ inserts an अस्मास्वपि after त्वम्. 2 S′ रयिः for यद्वा. 3 S′ inserts त्वा again after सत्वम्. 4 For वीरः ......... वीराय S′ has: वीरः औदुंबरो मणिर्वीराय विविधमीरयति अमित्रानिति वीरः । तादृशोमणिवीराय. 5 S′ अतिप्रभूताम् for अतिप्रभूतम्. 6 The *Nakshatra-kalpa* has: याम्यायाम् for याम्याम्.

तत्र प्रथमा ॥

शतकाण्डो दुश्च्यवनः सहस्रपर्ण उत्तिरः ।
दर्भो य उग्र ओषधिस्तं ते बध्नाम्यायुषे ॥ १ ॥

शतऽकाण्डः । दुःऽच्यवनः । सहस्रऽपर्णः । उत्ऽतिरः ।
दर्भः । यः । उग्रः । ओषधिः । तम् । ते । बध्नामि । आयुषे ॥ १ ॥

अनेन दर्भस्य मणिसाधनभूतस्य स्वरूपाधानपूर्वकं मृत्युभयपरिहाराय मणिरूपेण बन्धनम् अभिधीयते । शतकाण्डः । शतशब्दः अपरिमितवचनः । अनेकैः काण्डैः पर्वभिर्युक्तः । ॥ दश दशतः परिमाणम् अस्येति दशानां शभावः तश्च प्रत्ययो निपातितः ॥ । दुश्च्यवनः । ॥ च्युङ् प्रुङ् गतौ । "छन्दसि गत्यर्थेभ्यः" इति युच् ॥ । दुःखेन च्यावनीयः न केनापि च्याव्यः सहस्रपर्णः अनेकैः पत्रैर्युक्तः । उत्तरमन्त्रे अच्छिन्नपर्णेन दर्भेणेति पर्णानाम् आवश्यकत्वाभिधानाद् अत्र सहस्रपर्ण इति विशेषितः । उत्तरः उत्कृष्टतरः सर्वेषामप्योषधीनां मध्ये अतिशयितवीर्यः । ॥ उदः सुबन्तत्वात् तरप् ॥ । अस्य तथात्वम् उत्तरत्र दर्शयिष्यते । एवंलक्षण उग्रः उद्गूर्णबलः ओषधिः ओषधिविशेष इति विशेषितरूपो यो दर्भः तेन दर्भेण हे मृत्युभयार्दित पुरुष त्वां बध्नामि बन्धनं करोमि । किमर्थम् । आयुषे शतसंवत्सरलक्षणायुरर्थम् ॥

द्वितीया ॥

नास्य केशान् प्र वपन्ति नोरसि ताडमा घ्नते ।
यस्मा अच्छिन्नपर्णेन दर्भेण शर्म यच्छति ॥ २ ॥

---

१ A D R Cs दुश्चवनः. Dc दुश्चवनः corrected to दुश्च्यवनः. We with B C K K S V. २ K V °पर्ण उत्तरः with Sâyaṇa. P P उत्ऽतिरः ।. R उत्तिरः changed from उत्तरः, and J उत्ऽतिरः । changed from उत्ऽतरः ।. We with A B C D K R S Dc Cs. ३ K V °स्तत्ते. Dc °स्तं ते changed to °स्तत्ते. P तम् । corrected to तत् ।. P J तम् ।. We with B C D R S. ४ A B C D R S नोरसि ता°. Dc नोरसि ता° corrected into नोरसि ता°. J उरसि ।. We with K V Cs P P. ५ Such is the accent of all our authorities including P P J.

1 S′ inserts an उत्तरः before दुःखेन. 2 S′ inserts यो दर्भः after एवंलक्षणः though it has यो दर्भः further down.

न । अस्य । केशान् । प्र । वपन्ति । न । उरसि । ताडम् । आ । घ्नते ।
यस्मै । अच्छिन्नऽपर्णेन । दर्भेण । शर्म । यच्छति ॥ २ ॥

अस्य केशान् शिरोरुहान् [न] प्रवपन्ति [न] आकर्षन्ति मृत्युदूताः रक्षःपिशाचाद्या वा । तथा अमुम् उरसि ताडम् उरस्ताडयित्वा न आ घ्नते न हिंसन्ति मृत्युदूताद्याः । "हिंसार्थानां च समानकर्मकाणाम्"[1] इति तृतीयान्त उपपदे[2] विहितो णमुल् सप्तम्युपपदेपि व्यत्ययेन निष्पन्नः । "तत्पुरुषे कृति बहुलम्" इति अलुक्[3] । आ घ्नते इति । "आङो यमहनः" इति अस्वाङ्गकर्मकेपि आत्मनेपदम् । अस्येति उक्तं कस्य इत्यत आह । यस्मै[4] मृत्युभयार्दिताय पुरुषाय अच्छिन्नपर्णेन दर्भेण दर्भमणिबन्धनं कृत्वा शर्म सुखं यच्छति प्रयोक्ता । अस्येति पूर्वत्र संबन्धः ॥

तृतीया ॥

दिवि ते तूलमोषधे पृथिव्यामसि निष्ठितः ।
त्वया सहस्रकाण्डेनायुः प्र वर्धयामहे ॥ ३ ॥

दिवि । ते । तूलम् । ओषधे । पृथिव्याम् । असि । निऽस्थितः ।
त्वया । सहस्रऽकाण्डेन । आयुः । प्र । वर्धयामहे ॥ ३ ॥

हे ओषधे शतकाण्डाख्य ते तव तूलम् अग्रं दिवि द्युलोके । तावत्पर्यन्तं तवोर्ध्वाभिवृद्धिरित्यर्थः । पृथिव्याम् भूम्यां कृत्स्नेनात्मना विष्ठितः विविधम् अवस्थितः असि । सर्वां पृथिवीम् आक्रम्य अवस्थित इत्यर्थः । एवं द्यावापृथिवीव्यापिना त्वया[5] सहस्रकाण्डेन अनेककाण्डोपेतेन अस्य मृत्युभीतस्य आयुः प्र वर्धयामहे प्रकर्षेण अभिवृद्धिं कुर्मः ॥

चतुर्थी ॥

तिस्रो दिवो अत्यतृणत् तिस्र इमाः पृथिवीरुत ।

---

1 S' मणिं बिभ्रतः पुरुषस्य after कर्मकाणाम्" इति. 2 S' उपपदेपि. 3 S' लुक्. 4 S' अस्मै for यस्मै. 5 S' तेन for त्वया though Sâyaṇa's text has त्वया.

त्वयाहं दुर्हार्दो जिह्वां नि तृणद्मि वचांसि[१] ॥ ४ ॥

तिस्रः । दिवः[२] । अति । अतृणत्[३] । तिस्रः । इमाः । पृथिवीः । उत ।

त्वया । अहम् । दुःऽहार्दः । जिह्वाम् । नि । तृणद्मि । वचांसि ॥ ४ ॥

हे शतकाण्डाख्यौषधे त्वं तिस्रो दिवः त्रिविधान्[1] द्युलोकान् । भोक्तृणाम् उत्तममध्यमाधमभेदेन त्रैविध्यात् तद्भोगस्थानस्य द्युलोकस्यापि त्रित्वम् । एवं वक्ष्यमाणायाः पृथिव्या अपि द्रष्टव्यम् । अत्यतृणः[2]* अतिक्रम्य गतवान् असि । वेष्टितवान् असीत्यर्थः । उत अपि च इमाः परिदृश्यमानास्तिस्रः पृथिवीरपि अत्यतृणः* । एवंमहानुभावेन त्वया दुर्हार्दः दुर्हृदयस्य शत्रोर्जिह्वां नि तृणद्मि वेष्टयामि । तस्य वचांसि च वेष्टयामि बन्धयामि । यस्त्वं[3] कृत्स्नां द्यावापृथिवीम् आक्रान्तोसि तादृशेन अतिदीर्घेण त्वया शत्रोर्जिह्वां वाचश्च बध्नामि । [4]उतृदिर् हिंसानादरयोः । रौधादिकः । "हल्ङ्या॰" इत्यादिना सिपो[5] लोपः[4] ॥

पञ्चमी ॥

त्वमसि सहमानोहमस्मि[४] सहस्वान् ।

उभौ सहस्वन्तौ भूत्वा सपत्नान् सहिषीमहि ॥ ५ ॥

त्वम् । असि । सहमानः । अहम् । अस्मि । सहस्वान् ।

उभौ । सहस्वन्तौ । भूत्वा । सऽपत्नान् । सहिषीमहि ॥ ५ ॥

हे शतकाण्डाख्यौषधे त्वं सहमानासि[6]* शत्रूणां सहनशीला भवसि । अहं च सहस्वान् शत्रुहिंसासाधनबलोपेतः अस्मि । सह इति बलनामसु पाठात् । अतिशयेन शत्रूणां सोढास्मीत्यर्थः । उभौ सहस्वन्तौ सहनधर्म-

---

१ Such is the reading of all our authorities, though the metre as well as the syntax requires a च after वचांसि. Sâyaṇa's commentary seems to read it though his text omits it like our authorities. २ P दिवः ।. We with P[2] J. ३ P अत्रिणत् ।. ४ D °मानोयम°.

---

1 S′ विविधान्. 2 Sâyaṇa's text too अत्यतृणस्तिस्र &c. 3 S′ यतस्त्वं for यस्त्वं. 4 All this grammatical note is given in S′ at the end of the commentary on the previous verse, i. e. after कुर्मः instead of here. 5 S′ सिचो. 6 Sâyaṇa's text too: सहमाना.

कौ भूत्वा सपत्नान् अस्मदीयान् शत्रून् सहिषीमहि अभिभवेम । ॥ षह मर्षणे । आशीर्लिङि रूपम् ॥ ॥

षष्ठी ॥

सहस्व नो अभिमातिं सहस्व पृतनायतः ।
सहस्व सर्वान् दुर्हार्दः सुहार्दो मे बहून् कृधि ॥ ६ ॥

सहस्व । नः । अभिऽमातिम् । सहस्व । पृतनाऽयतः ।
सहस्व । सर्वान् । दुःऽहार्दः । सुऽहार्दः । मे । बहून् । कृधि ॥ ६ ॥

हे शतकाण्डौषधे नः अस्माकम् अभिमातिम् अभिहिंसकं[1] शत्रुं पापं वा । "पाप्मा वा अभिमातिः" इति श्रुतेः [तै० सं० २.१.३.५] । सहस्व अभिभव । तथा [पृतनायतः] पृतन्यतः पृतना सेना ताम् आत्मन इच्छतः । मया सह योद्धुम् इति शेषः । तांश्च[2] सहस्व अभिभव । किं बहुना । सर्वान् दुर्हार्दः दुर्हृदयान् सहस्व । एवं कृत्वा[3] मे सुहार्दः सुहृदयान् बहून् कृधि कृणु । सर्वान् मयि अनुकूलान् कृधीत्यर्थः ॥

सप्तमी ॥

दर्भेण देवजातेन दिवि ष्टम्भेन शश्वदित् ।
तेनाहं शश्वतो जनाँ असनं सनवानि च ॥ ७ ॥

दर्भेण । देवऽजातेन । दिवि । स्तम्भेन । शश्वत् । इत् ।
तेन । अहम् । शश्वतः । जनान् । असनम् । सनवानि । च ॥ ७ ॥

देवजातेन देवेभ्यः सकाशाद् उत्पन्नेन दिविष्टम्भेन द्युलोकस्य अधःपाताभावाय स्तम्भकेन द्युलोकस्य स्तम्भभूतेन वा एवंविधेन तेन दर्भेण

१ A C D K̈ R V Dc बहुं कृ°. S̈ बहु कृ°. P P̈ J बहुम् ।. B̈ and V with Sâyaṇa. We with Sâyaṇa. २ A B̈ C D R S̈ Cs देवजातेन. Dc देवजातेन corrected to देवजातेन. P J °जातेन ।. We with K K̈ V P̈. ३ C D K̈ R S̈ V Cs जना अ°. P P̈ J जनाः ।. We with A B̈. ४ A B̈ C D K K̈ असनां. V असनान्त्स°. S̈ असनात्स°. Dc असनाँत्स°. P P̈ J असनाम् ।. Sâyaṇa's text: जनानसनं सनवानि च. We with R Cs.

1 S′ अहिंसकं. 2 S′ तंच. 3 S′ कृता.

शश्वदित् सर्वदा अहं शश्वतः नित्यान् दीर्घजीविनो जनान् [असनम् अलभे अपि च सनवानि] लभे[1] । ※ षणु दाने । तानादिकः । लोटि "आडुत्तमस्य पिच्च" इति आडागमः ※ ॥

अष्टमी ॥

प्रियं[1] मा दर्भ कृणु ब्रह्मराजन्याभ्यां[2] शूद्राय[3] चार्याय च ।
यस्मै[4] च कामयामहे सर्वस्मै च विपश्यते[5] ॥ ८ ॥

प्रियम् । मा । दर्भ । कृणु । ब्रह्मऽराजन्याभ्याम् । शूद्राय । च ।
आर्याय । च ।
यस्मै । च । कामयामहे । सर्वस्मै । च । विऽपश्यते ॥ ८ ॥

हे दर्भ मा मां त्वां धारयमाणं ब्रह्मराजन्याभ्यां ब्राह्मणक्षत्रियाभ्यां वर्णाभ्यां प्रियं कृणु कुरु । ब्राह्मणानां क्षत्रियाणां च यथाहं प्रियो भवामि तथा मां कुर्वित्यर्थः । अनेन तेषां वशीकरणं प्रार्थितं भवति । तथा शूद्राय च आर्याय च । जात्यभिप्रायम् इदम् । शूद्राणाम् आर्याणां च मां प्रियभूतं कुरु । किं च अहं यस्मैयस्मै अनुलोमेषु प्रतिलोमेषु च जातीयेषु मध्ये यस्मैयस्मै प्रियभावं कामयामहे तस्मै सर्वस्मै विपश्यते पापम् अन्विष्यते पुरुषाय मां प्रियं[2] कुरु ॥

नवमी ॥

यो जायमानः पृथिवीमदृंहद् यो अस्तभ्नादन्तरिक्षं[6] दिवं च ।
यं बिभ्रतं ननु पाप्मा विवेद[7] स नोयं दर्भो वरुणो दिवा कः ॥ ९ ॥

यः । जायमानः । पृथिवीम् । अदृंहत् । यः । अस्तभ्नात् । अन्तरिक्षम् ।
दिवम् । च ।

---

१ A प्रयं for प्रियं. २ K $\overset{m}{K}$ V °राजन्याभ्यां. We with A $\overset{h}{B}$ C D R $\overset{m}{S}$ Dc Cs. ३ A $\overset{h}{B}$ C D R Cs सूर्याय. Dc सूर्याय corrected to शूद्राय. $\overset{m}{K}$ V with Sâyaṇa. P $\overset{2}{P}$ सूर्याय ।. J सूर्याय ।. We with $\overset{m}{S}$. ४ C अस्मै. We with A $\overset{h}{B}$ D K $\overset{m}{K}$ R $\overset{m}{S}$ V Dc Cs. ५ A $\overset{h}{B}$ C D $\overset{m}{K}$ R V Cs विपश्यते. Dc विपश्यते changed to विपश्यते. $\overset{m}{S}$ विपश्यते. P J वि । पश्यते ।. $\overset{2}{P}$ विऽपश्यते ।. ६ A अस्त°. ७ Such is the accent of all our authorities inlcuding P $\overset{2}{P}$ J.

---

1 So S′. 2 S′ विप्रियं for प्रियं.

यम् । बिभ्रतम् । ननु । पाप्मा । विवेद । सः । नः । अयम् । दर्भः । वरुणः ।
दिवा । कः ॥ ९ ॥

यो दर्भः शतकाण्डाख्यो जायमानः प्रादुर्भवन्नेव पृथिवीं सर्वाम् अदृंहत् दृढां कृतवान् । ॥ दृह दृहि वृद्धौ ॥ । यथा अप्सु विलीना [न] भवति तथा स्वमूलेन भुवं दृढां चकारेत्यर्थः । यश्च जातमात्रः सन् स्वकाण्डैः अन्तरिक्षम् अन्तरा क्षान्तं भवतीति अन्तरिक्षम् । तच्च दिवम् द्योतमानं द्युलोकं च अस्तभ्नात् स्तम्भितवान् । यथा ते न निपतेतां तथा तस्तम्भ । यम् उक्तलक्षणं शतकाण्डदर्भमणिं बिभ्रतम् धारयन्तं पाप्मा ननु विवेद न जानाति । न स्पृशतीत्यर्थः । स तादृशोयं वरुणः अन्धकारनिवारको दर्भो नः अस्माकं दिवा प्रकाशम् अकः करोतु । ॥ लुङि "मन्त्रे घस०" इति च्लेर्लुक् ॥ ।

दशमी ॥

सपत्नहा शतकाण्डः सहस्वानोषधीनां प्रथमः सं बभूव ।
स नोयं दर्भः परि पातु विश्वतस्तेन साक्षीय पृतनाः पृतन्यतः ॥ १० ॥

सपत्नऽहा । शतऽकाण्डः । सहस्वान् । ओषधीनाम् । प्रथमः । सम् । बभूव । सः । नः । अयम् । दर्भः । परि । पातु । विश्वतः । तेन । साक्षीय । पृतनाः । पृतन्यतः ॥ १० ॥

सपत्नहा सपत्नानाम् । सपत्नीवत् सपत्नः । एकस्मिन् विषये समानपतित्वम् इच्छतां शत्रूणां हन्ता शतकाण्डः शतसंख्याकैरनेकैः काण्डैरुपेतः सहस्वान् सहो बलं तद्वान् एवंमहानुभावः ओषधीनाम् इतरासां प्रथमः

१ S V सहस्वानौ°. A B C D K R Dc Cs सहस्वनौ°, which shows that the mistake arose from सहस्वानो° being misread into सहस्वानो (=सहस्वनौ). The mistake has been perpetuated for ages. २ R पृतन्यतः. P पृतन्यतः ।. ३ J °स्वान् । changed to °स्वना, and P P °स्वना ।, which would show that the padas are not older than the mistake which read सहस्वानो° into सहस्वानो°.

1 S' अन्तरि. 2 S' स्तंभ. 3 S' पाप्मानमेव वद् for पाप्मा ननु विवेद. 4 S' कस्मिन् for एकस्मिन्.

मुख्यः[1] प्रथमभावी वा । अतिशयितवीर्यत्वात् । प्रथम इति मुख्यनाम प्रतमो भवतीति निरुक्तम् [नि° २, २२] । एवंभूतः सन् सं बभूव । स तादृशः संभूतः अयं दर्भो नः अस्मान् विश्वतः सर्वतः सर्वाभ्यो दिग्भ्यस्तज्जन्येभ्यो भयेभ्यः परि पातु परिरक्षतु । तेन दर्भमणिना पृतन्यतः पृतनां सेनाम् इच्छतः शत्रोः पृतनाः सेनाः साक्षीय अभिभवानि । पृतन्यत इति । पृतनाशब्दात् क्यचि "कव्यध्वरपृतनस्यर्चि लोपः" इति आकारलोपः । साक्षीयेति । षह अभिभवे । अस्मात् लिङि "सिब्बहुलं छन्दसि णित्" इति सिप् । णिद्भावाद् उपधावृद्धिः ॥

[इति] चतुर्थेऽनुवाके षष्ठं सूक्तम् ॥

"सहस्रार्घः शतकाण्डः" इति सप्तमं सूक्तम् । अस्य याम्यां महाशान्तौ दर्भमणिबन्धने विनियोगः पूर्वसूक्तेन सह उक्तः ॥

तत्र प्रथमा ॥

सहस्रार्घः[१] शतकाण्डः पयस्वानपामग्निर्वीरुधां राजसूयम् ।
स नोऽयं दर्भः परि पातु विश्वतो देवो मणिरायुषा सं सृजाति नः ॥१॥

सहस्रऽअर्घः[१] । शतऽकाण्डः । पयस्वान् । अपाम् । अग्निः । वीरुधाम्[२] ।
राजऽसूयम् ।
सः । नः । अयम् । दर्भः । परि । पातु । विश्वतः । देवः । मणिः । आयुषा ।
सम् । सृजाति । नः ॥ १ ॥

सहस्रार्घः बहुमूल्यः शतकाण्डः अनेककाण्डोपेतः । शतम् इति । दश दशतः परिमाणम् अस्येति दशानां शभावः तश्च प्रत्ययो निपातितः । सहस्वान्* बलवान् अपाम् उदकानाम् अग्निः अग्निस्थानीयः । "अग्नेरापः" इति श्रुतेः [तै° आ° ८, १] । अपां स्व-

---

१ A B[h] C D R Cs सहस्रार्घः. Dc सहस्रार्घः changed to सहस्रार्घः. P J सहस्रऽअर्घः ।. We with K K[m] S[m] V P[2]. २ R Cs °वीरुधं. We with A B[h] C D K[m] S[m] V Dc P P[2] J.

---

1 S′ प्रथममुख्यः for मुख्यः.

ष्टेत्यर्थः । यद्वा अपां शोषको वा । वीरुधाम् लतादीनां राजसूयम् । राजसूयकर्मवत्प्रशस्त इत्यर्थः । यथा राजसूययागः सर्वेषां राज्ञां स्वामिनः सार्वभौमस्य विषयः । यद्वा [1]इतरेषां यागानां मध्ये श्रेष्ठत्वात् प्रशस्तः [तथायं] वी[2]रुधां मध्ये प्रशस्तभूत इति राजसूयस्थानीयत्वम् । "राजसूयसूर्य°" इत्यादिना क्यबन्तो राजसूयशब्दो निपातितः । स तादृशः अयं दर्भः नः अस्मान् विश्वतः परि पातु परितो रक्षतु । स देवः देवसृष्टो मणिः नः अस्मान् आयुषा सं सृजाति संसृजेत् ॥

द्वितीया ॥

घृतादुल्लु॑प्तो मधु॑मान् [1]पय॑स्वान् भूमिदृं[2]होऽच्यु॑तश्च्यावयि॒ष्णुः[3] ।
नुदन्त्सपत्ना॒नध॑रांश्च कृण्वन् द[4]र्भा रो॑ह मह॒ताम्मि॑न्द्रि॒येण॑ ॥ २ ॥

घृतात् । उत्ऽलु॑प्तः । मधु॑ऽमान् । पय॑स्वान् । भूमि॒ऽदृंह॒ः । अच्यु॑तः । च्य॒वयि॒ष्णुः ।

नुदन् । स॒ऽपत्ना॑न् । अध॑रान् । च॒ । कृ॒ण्व[5]न् । द॒र्भ॑ । आ । रो॒ह॒ । म॒ह॒ताम् । इ॒न्द्रि॒येण॑ ॥ २ ॥

घृतात् आज्यात् हुतशिष्टाद् [3]उल्लुप्तः उल्लिप्तः संपातावनयनेन सर्वतो[4]ऽक्तः । "[5]आश्यबन्ध्याप्लवनयानभक्ष्याणि संपातवन्ति" इति [कौ° १. ७] परिभाषितत्वाद् घृताक्तत्वम् । मधुमान् माधुर्योपेतः पयस्वान् प्रभूतक्षीरो भूमिदृंहः भूम्याः स्वमूलैर्दृढीकर्ता अच्युतः च्युतिर्नाशस्तद्रहितः बहुधा छिन्नस्यापि पुनःप्ररोहदर्शनात् । च्यावयिष्णुः दृढस्यापि शत्र्वादेश्च्यावनशीलः एवंगुणोपेत [हे दर्भ]मणे त्वं सपत्नान् शत्रून् नुदन् सुदूरं प्रेरयन्

१ A °पय्°. २ A R °द्रंहोच्युत°. $\overset{m}{K}$ $\overset{m}{S}$ °द्दहोच्युत°. K V °दृंहमच्युत°. We with $\overset{h}{B}$ D K Dc Cs. ३ K $\overset{m}{K}$ V omit the visarga in च्यावयिष्णुः. We with $\overset{h}{B}$ C D R $\overset{m}{S}$ Dc Cs P $\overset{2}{P}$ J. ४ $\overset{h}{B}$ C $\overset{m}{S}$ °दर्भा रोह. We with A D K $\overset{m}{K}$ R V Dc Cs. ५ P कृण्वत् ।. J changes कृण्वन् । to कृण्वत् ।. We with $\overset{2}{P}$.

1 S′ दितरेषां. 2 S′ वीरुधामाप्रशस्त° for वीरुधां मध्ये प्रशस्त°. 3 S′ हुतशिष्टादुर्लुप्तः. Sâyaṇa's text also घृतादुर्लुप्तो. 4 S′ सर्वतोप्तः. 5 S′ आश्यबंध्ययायानि for आश्यबन्ध्याप्लवनयानभक्ष्याणि.

तानेव अधरान् निकृष्टान् बलहीनांश्च कृण्वन् कुर्वन् महताम् महत्त्वोपेतानाम् अतिशयितवीर्याणाम् अन्येषाम् ओषधीनाम् इन्द्रियेण इन्द्रसृष्टेन सामर्थ्येन सहितः सन् आ रोह भुजादिप्रदेशम् अधितिष्ठ ॥

तृतीया ॥

त्वं भूमिमत्येष्योजसा त्वं वेद्यां सीदसि चारुरध्वरे ।
त्वां पवित्रमृषयोभरन्त त्वं पुनीहि दुरितान्यस्मत् ॥ ३ ॥

त्वम् । भूमिम् । अति । एषि । ओजसा । त्वम् । वेद्याम् । सीदसि । चारुः । अध्वरे ।
त्वाम् । पवित्रम् । ऋषयः । अभरन्त । त्वम् । पुनीहि । दुःऽइतानि । अस्मत् ॥ ३ ॥

हे मणिभूत दर्भ त्वम् ओजसा बलेन भूमिम् अत्येषि अतिगच्छसि । तथा चारुस्त्वम् अध्वरे ध्वरो हिंसा तद्रहितः अध्वरो यागः । न हि यागं कुर्वन् विनश्यति स्वर्गादिफलसाधनत्वात् । तस्मिन् वेद्यां सीदसि निषण्णो भवसि हविरासादनार्थम् । किं च पवित्रम् शोधकं त्वाम् । "पवित्रं वै दर्भाः । पुनात्येवैनम्" इति श्रुतेः [तै॰ब्रा॰ १. ३. ७. १] । ऋषयः अतीन्द्रियद्रष्टारः स्वपावनार्थम् अभरन्त आहृतवन्तः । यस्माद् एवं तस्मात् त्वं दुरितानि दुष्कृतानि अस्मत् अस्मत्तः सकाशात् पुनीहि पावय च्यावय ॥

चतुर्थी ॥

तीक्ष्णो राजा विषासही रक्षोहा विश्वचर्षणिः ।
ओजो देवानां बलमुग्रमेतत् तं ते बध्नामि जरसे स्वस्तये ॥ ४ ॥

तीक्ष्णः । राजा । विऽससहिः । रक्षःऽहा । विश्वऽचर्षणिः ।
ओजः । देवानाम् । बलम् । उग्रम् । एतत् । तम् । ते । बध्नामि । जरसे । स्वस्तये ॥ ४ ॥

---

१ A B[h] C K[m] R V Dc Cs °मृषयोभरंतस्त्वं पु°. D °मृषयोभरंतःस्त्वपु°. S[m] °मृषयोभरंतस्त्वं पु°. P P[2] J भरंतः।. We with Sâyaṇa's text and commentary, and accent accordingly.
२ P ऊर्जः।.

---

1 S′ तामेव. 2 S′ त्वम् for चारुस्त्वम्.

तीक्ष्णः अतिनिशितशक्तिः । यस्मै प्रयोजनाय प्रयुज्यते तस्य आशुकारीत्यर्थः । राजा सर्वासाम् ओषधीनां सर्वेषां मणीनां वा राजवच्छ्रेष्ठः विषासहिः विशेषेण सोढा शत्रुमर्षकः रक्षोहा राक्षसानां हन्ता विश्वचर्षणिः विश्वद्रष्टा तथा देवानाम् इन्द्रादीनाम् ओजः ओजःस्थानीयः । तेषाम् असुरसंग्रामे जयप्रदत्वात् । उग्रम् परैरसह्यं बलम् बलस्वरूपम् एतत् रक्षासाधनं दर्भाख्यं[1] वस्तु । अथ वा एतत् इदानीम् । अत्र बलसाधने मणौ बलत्वव्यवहारः । तं तादृशं मणिं ते हे रक्षाकाम पुरुष तव बध्नामि । किमर्थम् । जरसे जरापरिहारार्थं स्वस्तये क्षेमाय च बध्नामि ॥

पञ्चमी ॥

दुर्भेण त्वं कृ॑ण्वद्[1] वीर्या॑णि दुर्भं बिभ्र॑दात्मना मा व्य॑थिष्ठाः ।
अति॑ष्ठाया वर्च॒साधा॒न्यान्त्सूर्य॑ इ॒वा भा॑हि प्र॒दिश॒श्चत॑स्रः ॥ ५ ॥

दुर्भेण॑ । त्वम् । कृ॒ण्वत् । वीर्या॑णि । दुर्भम् । बिभ्र॑त् । आ॒त्मना॑ । मा । व्य॒थि॒ष्ठाः ।
अति॑ऽस्थाय । वर्च॑सा । अधि॑ । अ॒न्यान् । सूर्यः॑ऽइव । आ । भा॒हि॒ । प्र॒ऽदिशः॑ । चत॑स्रः ॥ ५ ॥

हे पुरुष त्वं दर्भेण मणिना साधनेन[2] वीर्याणि वीरस्य कर्माणि वी-

१ A B^h C D R S^m कृणवं°. P^2 J कृणवत् ।. We with K^m V Dc Cs P. २ A B^h R Cs वर्चसैध्यन्यां. C वर्चसैंध्यन्यां. The ध्य in these readings may have been a misreading for an original धा, as in most old MSS. the two letters are very similar to each other. D K^m V वर्चसैधन्यां. S^m वर्चसैंधन्यां. Dc वर्चसीधन्यां corrected to वर्चसैध्यन्यां. Sâyaṇa's text: वर्चसौधन्यां. J एद्धि । अन्यांम् ।. P ऐधि । अन्याम् ।. P^2 एधन्यांम् corrected from ऐधि । अन्यांम् ।. If वर्चसा एधि अन्यान् were meant the *Saṁhitâ*-MSS. would have exhibited वर्चसैध्यन्यान्, which none of our MSS. read. Besides एधि so used would not be in accordance with its usual use in the Veda: it is usually accompanied by the predicate in the nominative or the dative, or is accompanied by some such adverb as इहैव, सजातैः सह &c; but it is not used absolutely as it would be in the present passage. We with Sâyaṇa's commentary, the accents being altered to suit the reading adopted.

1 S′ दर्भाख्य°. 2 S′ inserts another त्वं after साधनेन.

र्याणि शत्रुजयादीनि कृणवत् कुर्याः । अतः दर्भे वीर्यसाधनं बिभ्रत् धारयंस्त्वम् आत्मना निश्चलेन युक्तः सन्[1] । अथ वा आत्मना आत्मनि बिभ्रत् मा व्यथिष्ठाः व्यथां मा कुरु । शत्रवः पराभविष्यन्तीत्येवं मनसि व्यथां मा कार्षीरित्यर्थः । अधि[2] अपि च[3] वर्चसा शरीरबलेन अन्यान् अधि*ष्ठाय सूर्य इव स यथा लोकान् स्वतेजसा आलोकेन प्रकाशयति तद्वत् प्रदिशः प्रकृष्टाः प्रागादिचतस्रो दिशः आ भाहि प्रकाशय ॥

चतुर्थेनुवाके सप्तमं सूक्तम् ॥

चतुर्थोनुवाकः समाप्तः ॥

पञ्चमेनुवाके द्वादश सूक्तानि । तत्र "जङ्गिडोसि" इति प्रथमद्वितीयाभ्यां सूक्ताभ्यां "वायव्यां वातवात्यायाम्" इति [न° क° १७.] विहितायां वायव्याख्यायां महाशान्तौ जङ्गिडवृक्षनिर्मितं मणिं बध्नीयात्[4] । तथा नक्षत्रकल्पे सूत्रितम् । "वाताज्जातः [४.१०] इति शङ्खं वारुण्याम् । जङ्गिडोसि जङ्गिडो रक्षितासि [१९.३४] इति जङ्गिडं वायव्यायाम्" इति [न° क° १९.] ॥

तत्र प्रथमा ॥

जङ्गिडोऽसि जङ्गिडो रक्षितासि जङ्गिडः ।
द्विपाच्चतुष्पादस्माकं सर्वं रक्षतु जङ्गिडः ॥ १ ॥

जङ्गिडः । असि । जङ्गिडः । रक्षिता । असि । जङ्गिडः ।
द्विऽपात् । चतुःऽपात् । अस्माकम् । सर्वम् । रक्षतु । जङ्गिडः ॥ १ ॥

जङ्गिडो नाम कश्चिद् ओषधिविशेषः । स च उत्तरदेशे[5] प्रसिद्धः । हे जङ्गिड[*6] मणे जङ्गिडोसि यतो जातानां कृत्यानां कृत्याकृतां च निगरणकर्तासि[7] अतो जङ्गिड इत्युच्यते । तस्मात् जङ्गिडस्त्वं रक्षितासि स-

1 S' inserts another बिभ्रत् after सन्. 2 S' अथ. 3 S' inserts अन्यान् after च again. 4 S' inserts after this: तथा पिलकादित्वाल्लत्वम् । पूर्ववदस्यस्य सुपो लुगभावश्छांदसः, a note which belongs to the comment on the following verse, where see. 5 Conf. Kes'ava on *Kaus'ika* 1. 8: जङ्गिडो वाराणस्यां प्रसिद्धः. Dârila in the same place: जङ्गिडोर्जुनः । अचल इति दाक्षिणात्याः. 6 Sâyaṇa's text has: जंगिडोसि जंगिडो रक्षितासि जंगिड. 7 S' निगिरण°.

वेभ्यो भयेभ्यः पालयिता भवसि । पिच्छादित्वाद् इलच् । यद्वा जङ्गम्यते शत्रून् बाधितुम् इति जङ्गिडः । गमेर्यङ्लुगन्ताद् रूपसिद्धिः । अथ वा जनेर्जयतेर्वा[1] डप्रत्यये ज इति भवति । जं गिरतीति जङ्गिरः । [कपिलकादित्वाद् लत्वम् । पूर्वपदस्थस्य सुपो लुगभावश्छान्दसः । ] खच् प्रत्ययो वा द्रष्टव्यः ॥ अथ परोक्षम् अभिधीयते । अस्माकं यद् द्विपात् यत् पादद्वयोपेतं मनुष्यादिलक्षणम् अस्ति तथा चतुष्पात् पादचतुष्टयोपेतं गोमहिषादिलक्षणम् अस्ति । उभयत्र "संख्यासुपूर्वस्य" इति लोपः समासान्तः । तत् सर्वं [जङ्गिडः] जङ्गिडाख्यो मणी रक्षतु पालयतु ॥

द्वितीया ॥

या गृत्स्यस्त्रिपञ्चाशीः शतं कृत्याकृतश्च ये ।
सर्वान् विनक्तु तेजसोऽरसां जङ्गिडस्करत् ॥ २ ॥

याः[१] । गृत्स्यः । त्रिऽपञ्चाशीः । शतम् । कृत्याऽकृतः । च । ये ।
सर्वान् । विनक्तु[२] । तेजसः । अरसान् । जङ्गिडः । करत् ॥ २ ॥

या गृत्स्यः गर्धनशीला यास्त्रिपञ्चाशीः त्र्यधिकपञ्चाशत्संख्याकाः कृत्याः सन्ति । पूरणार्थे डट् । डित्वात् टिलोपः । "टिड्ढाणञ्" इति ङीप् । तथा ये शतम् शतसंख्याकाः कृत्याकृतः । कृत्या नाम मृद्दार्वादिना निर्मितपुत्तल्यादि । [तासां] कृत्यानां कर्तारः सन्ति तान् सर्वान् [जङ्गिडः] जङ्गिडाख्यौषधिनिर्मितो मणिः विनष्टतेजसः हतवीर्यान् सर्वान् [जङ्गिडः] जङ्गिडाख्यौषधिनिर्मितो मणिः विनष्टतेजसः हतवीर्यान्

---

१ S ज्यागृत्स्यास्त्रि°. R यागृत्स्यस्तृं°. A B V जागृत्स्यास्त्रि°. C जागृत्स्यास्त्रि°. D ज्यागृत्स्य-
स्त्रि°. K Dc ज्यागृत्स्यास्त्रि°. Cs यागृत्स्यस्तृं°. P P J जागृत्स्यः । त्रिपञ्चऽअशीः ।. We with
Sâyaṇa and accents accordingly. २ V विनिष्टतेजसा°. A D भनक्ति तेजसो°. B C R
S Cs विनक्ततेजसो° (changed to भिनक्ति तेजसो° in S). K मिनक्तु तेजसो corrected
into मिनक्तु तेजसा°. Dc विनक्तु changed to मिनक्तु. P विनक्तऽ° । corrected from विन-
क्तिऽ°. P विनक्तु । changed from विनक्तुऽ°. J विनक्तऽ° ।. We with the original reading
of Dc and with the correction of P.

---

1 S' जनेर्यजतेर्वा.

रहितान् ऋजीषप्रायान् करत् कुर्यात् । ᳚करोतेर्लेटि अडागमः᳚ ॥

तृतीया ॥

अरसं कृत्रिमं नादमरसाः सप्त विस्रसः ।
अपेतो जङ्गिडामतिमिषुमस्तेव शातय ॥ ३ ॥

अरसम् । कृत्रिमम् । नादम् । अरसाः । सप्त । विऽस्रसः ।
अप । इतः । जङ्गिड । अमतिम् । इषुम् । अस्ताऽइव । शातय ॥ ३ ॥

कृत्रिमम् क्रियया निर्वृत्तम् । ᳚"क्रेर्मम्नित्यम्" इति मप् प्रत्ययः᳚ । अभिचरता उत्पादितं नादम् ध्वनिं शिरःकर्णाद्यङ्गेषु[1] स्थितम् अयं जङ्गिडो मणिः अरसम् गतसारम् । करत् इति अनुवर्तते । करोतु । एवं सप्त विस्रसः सप्तसंख्याका विस्रंसनाः । ᳚स्रंसेः क्विप्᳚ । मूर्धनिष्ठेषु नासारन्ध्रद्वयचक्षुर्गोलकद्वयश्रोत्रच्छिद्रद्वयमुखकुहररूपेषु सप्तसु च्छिद्रेषु अभिचरता उत्पादिताः सप्त निष्यन्दा अपि अरसाः सन्तु । जङ्गिडमणिमाहात्म्याद् इति शेषः ॥ अथ प्रत्यक्षेणाह । हे जङ्गिड त्वम् अमतिम् दारिद्र्यं दुर्बुद्धिं वा इतः अस्माद् मणिधारकसकाशाद् अपसार्य इषुम् अस्तेव । अस्ता इषुक्षेप्ता । ᳚असु क्षेपणे । "रधादिभ्यश्च" इति इड्विकल्पः᳚ । शत्रुषु प्रयोक्ता यथा शातयति तनूकरोति एवं शातय तनूकुरु । ᳚"[शदेरगतौ तः" इति णिचि शदेस्तकारादेशः]᳚ ॥

चतुर्थी ॥

कृत्यादूषण एवायमथो अरातिदूषणः ।

१ B^h कृतृमन्नाद॰. C R कृतृमंन्नाद॰. Cs कृतृमंन्नाद॰. D Dc कृत्रिमंन्नाद॰. P P^2 J कृत्रिम् । अन्नऽअदम् ।. We with A K^m S^m V. २ R अपेतो जंगिडामंति॰. A B^h S^m अपेतो जंगिडाम-ति॰. D K^m V Dc अपेतो जंगिडामति॰. P P^2 J जंगिड ।. P^2 अमतिम् ।. We with C Cs P J. ३ A C D R S^m Cs एवाय॰. We with B^h K^m Dc.

1 S′ reads °ङ्गंगेष्वजाद्यंपस्थितं for °द्यङ्गेषु स्थितम्. 2 S′ puts here part of the grammatical note which ought to be in the next comment. Thus: विस्रंसनाः दुष वैकृत्ये णिचि दोषेणावित्यूकारादेशः ।. 3 In S′ this note is found not here, but in the commentary of the following verse after the words अवधारणार्थ एवशब्दः.

अथो सहस्वाञ्जङ्गिडः प्र ण आयूंषि तारिषत् ॥ ४ ॥
कृत्याऽदूषणः । एव । अयम् । अथो इति । अरातिऽदूषणः ।
अथो इति । सहस्वान् । जङ्गिडः । प्र । नः । आयूंषि । तारिषत् ॥ ४ ॥

अयं जङ्गिडो मणिः [कृत्यादूषणः] कृत्यायाः परोत्पादितायाः दूषणः निराकर्तैव । [दुष वैकृत्ये] । अस्मात् [णिचि] कर्तरि करणे वा ल्युट् । "[दोषो णौ" इति ऊकारादेशः] । अवधारणार्थ एवशब्दः । अथो अपि च अरातिदूषणः शत्रुच्यावनसाधनः अथो अपि च अयं जङ्गिडः सहस्वान् उक्तव्यापारोचितबलोपेतः । स तादृशो मणिः कृत्यादूषणादिकं कृत्वा न आयूंषि प्र तारिषत् । प्रपूर्वस्तरतिर्वर्धनार्थः । वर्धयतु ॥

पञ्चमी ॥

स जङ्गिडस्य महिमा परि णः पातु विश्वतः ।
विष्कन्धं येन सासह संस्कन्धमोज ओजसा ॥ ५ ॥
सः । जङ्गिडस्य । महिमा । परि । नः । पातु । विश्वतः ।
विऽस्कन्धम् । येन । ससह । समऽस्कन्धम् । ओजः । ओजसा ॥ ५ ॥

स तादृशः उत्तरार्धेऽभिधीयमानलक्षणो [जङ्गिडस्य] महिमा तन्महत्त्वं नः अस्मान् विश्वतः सर्वस्माद् भयजातात् परि पातु परितो रक्षतु । कोसौ महिमेति तमाह । यो[1] महिमा विष्कन्धम् विश्लिष्टस्कन्धम् एवंनामानं वातविशेषं महारोगम् ओजसा सह तस्य यद् विष्कन्धीकरणसामर्थ्यम् अस्ति तेन सह अपुनरुद्भवं नाशयति । यश्च महिमा संस्कन्धम् । येन रोगेण स्कन्धः संनतः संलग्नो भवति स रोगः संस्कन्धः । तं महारोगं वातलक्षणम् ओजः महिमा ओजसा सह रोगस्य सामर्थ्येन सह नाशयति । स महिमेति पूर्वत्र संबन्धः ॥

---

१ B^h C R Cs तार्षत्. We with D K^m S^m V Dc. २ S^m येन सासह. A येनं सासहे. B^h C R Cs येनं सासह. D येनं सासह. K^m V येनं सासह corrected from येनं सासह. Dc येनं सासह changed to येनं सासह. P J ससहं ।. P^2 ससह । corrected into ससह ।.

1 Sâyaṇa's text of the second half: विष्कंधमोजसा सह संस्कंधमोज ओजसा.

षष्ठी ॥

त्रिष्ट्वा देवा अजनयन् निष्ठितं भूम्यामधि ।

तमु त्वाङ्गिरा इति ब्राह्मणाः पूर्व्या विदुः ॥ ६ ॥

त्रिः । त्वा । देवाः । अजनयन् । निऽस्थितम् । भूम्याम् । अधि ।

तम् । ऊं इति । त्वा । अङ्गिराः । इति । ब्राह्मणाः । पूर्व्याः । विदुः ॥ ६ ॥

इदानीं भूम्याम् अधि । ✱अधिः सप्तम्यर्थानुवादी✱ । भूम्यां तिष्ठन्तं त्वा त्वां देवाः इन्द्राद्याः त्रिः त्रिवारम् अजनयन् उदपादयन् । त्रिषु लोकेषु अवस्थानायेति भावः । अथ वा एकद्विवारप्रयत्नेन अनुत्पद्यमानं त्वां त्रिवारम् अजनयन् । अनेन अत्यन्तप्रयोजकत्वेन अवश्यम् उत्पादनीयत्वम् उक्तं भवति । तं तादृशं प्रयत्नेन उत्पादितं [त्वा] त्वाम् अङ्गिरा इति । ब्रह्मणोऽङ्गसंभूतो रसः अङ्गिरआख्यो महर्षिः । [यद्वा] अङ्गिरा अङ्गाराः । "येङ्गारा आसंस्तेङ्गिरसोभवन्" इति ब्राह्मणम् [ऐ० ब्रा० ३. ३४] । एवंनामा महर्षिरिति पूर्व्याः पूर्वे भवा ब्राह्मणा महर्षयो विदुः ब्रुवते ॥

सप्तमी ॥

न त्वा पूर्वा ओषधयो न त्वा तरन्ति या नवाः ।

विबाध उग्रो जङ्गिडः परिपाणः सुमङ्गलः ॥ ७ ॥

न । त्वा । पूर्वाः । ओषधयः । न । त्वा । तरन्ति । याः । नवाः ।

विऽबाधः । उग्रः । जङ्गिडः । परिऽपानः । सुऽमङ्गलः ॥ ७ ॥

हे जङ्गिड त्वा त्वां पूर्वाः पूर्वं सृष्ट्यादावुत्पन्ना ओषधयो न तरन्ति

१ A B̊ C D K K̊ R S̊ V Dc Cs तृष्ट्वा, and P P̊ J तृष्ट्वा ।. २ A B̊ C D R S̊ Cs तमु त्वाङ्गिरा. Dc तमुं त्वांगिरा, changed to तमु त्वांगिरा. P त्वा । आंगिराः ।. J त्वा । अंगिराः ।. We with K K̊ V Dc and P̊. ३ D R Cs om. the visarga in नवाः. We with A B̊ C K̊ S̊ V Dc. ४ P तरंति ।. We with P̊ J.

1 Sâyaṇa's text: तिष्ठंतं भूम्यामधि. 2 S' एकं for एक°. 3 S' अंगिराख्यो. 4 S' जंगिल. Sâyaṇa's text is: विबाध उग्रो जंगिल परि°.

नातिक्रामन्ति । सर्वेष्वपि प्रयोगेषु अतिशयितवीर्यत्वाद् इति भावः । एवं या ओषधयो नवाः नूतनाः सन्ति ता अपि त्वा त्वां न तरन्ति अतिशयितुं न प्रभवन्ति । कुत एतद् इति तत्राह । हे जङ्गिड यत[2]स्त्वं विबाधः बाधयतीति बाधः विशेषेण शत्रुरोगादे[3]र्बाधकः उग्रः उद्गूर्णबलः परिपाणः परितः पाता सुमङ्गलः सुष्ठु मङ्गलकारी । अनेन शत्र्वादिजयभयरक्षणलक्ष्मीकरत्वलक्षणगुणा अस्योक्ता भवन्ति ॥

अष्टमी ॥

अथो[1]*पदान भगवो जङ्गिडामितवीर्य ।
पुरा त उग्रा ग्रसत उपेन्द्रो वीर्यं ददौ ॥ ८ ॥

अथो[*] । उप[*]ऽदान । भग[3]ऽवः । जङ्गि[4]*ड । अमितऽवीर्य ।
पुरा । ते । उग्राः[5] । ग्रसते । उप । इन्द्रः । वीर्यम् । ददौ ॥ ८ ॥

अथशब्दः अभिमुखीकरणार्थः । हे उपदान उपादीयते स्वीक्रियेत कृत्यानिर्हरणादिव्यापारेष्विति उपदानः । तस्य संबोधनम् । हे उपदान हे भगवः भगवन् अतिशयितमाहात्म्य हे अमितवीर्य अपरिच्छिन्नसामर्थ्य हे जङ्गिड ते[4] त्वाम् उग्राः उद्गूर्णबलाः प्राणिनः पुरा ग्रसते भक्षयिष्यन्तीति विज्ञाय इन्द्रः यथा त्वाम् उग्रा न भक्षयन्ति तथा वीर्यम् परैरनभिभाव्यं सामर्थ्यम् उप ददौ प्रादात् । तस्माद् इन्द्रेण[5] दत्तवीर्यत्वाद् अतिशयितवीर्यस्त्वमसीति स्तुतिः ॥

नवमी ॥

उग्र इत् ते वनस्पत इन्द्र ओज्मानमा दधौ[2] ।
अमीवाः[6] सर्वाश्चातयं जहि रक्षांस्योषधे ॥ ९ ॥

---

१ A B^h C K K^m R S^m V Dc Cs अथो पदा न भगवो जं°. D अथो पदा न भगवो जं°. P P^2 J अथो इति । पदा । न ।. We with Sâyaṇa, and accents accordingly. २ D दधौ. ३ P भगवः ।. P^2 J भगवः ।. ४ P P^2 J जंगिड ।. ५ P P^2 J उग्रा ।. Was पुरा तं उग्रा ग्रसंत उपेन्द्रो the correct reading ? ६ A B^h अमीवा. We with C D K^m R S^m V Dc Cs.

---

1 See note 4 on the previous page. 2 S′ omits त्वं in यतस्त्वं, reading यतो. 3 S′ शत्रुरोगादिर्बाधकः. 4 S′ त्वा for ते, though its text has पुरा त उग्रा°. 5 S′ omits ण in इन्द्रेण.

उग्रः । इत् । ते । वनस्पते । इन्द्रः । ओज्मानम् । आ । दधौ ।
अमीवाः । सर्वाः । चातयन् । जहि । रक्षांसि । ओषधे ॥ ९ ॥

हे वनस्पते जङ्गिड त्वम् उग्र इत् उग्र एव अतिशयितवीर्य एव नात्र विचारणा । यतः ते त्वयि इन्द्रो देवः ओज्मानम् ओजो बलम् आ दधौ स्थापितवान् । अतस्त्वम् हे [ओषधे] वनस्पते सर्वा अमीवाः साध्यासाध्यविभागम् अकृत्वा सर्वानपि रोगांश्चातयन् नाशयन् रक्षांसि । रक्षितव्यम् अस्माद् इति रक्षः । भयोपादानभूतान् राक्षसान् जहि घातय ॥

दशमी ॥

आशरीकं विशरीकं बलासं पृष्ट्यामयम् ।
तक्मानं विश्वशारदमरसां जङ्गिडस्करत् ॥ १० ॥

आऽशरीकम् । विऽशरीकम् । बलासम् । पृष्टिऽआमयम् ।
तक्मानम् । विश्वऽशारदम् । अरसान् । जङ्गिडः । करत् ॥ १० ॥

आशरीकम् सर्वतो हिंसकम् एतन्नामानं रोगं तथा विशरीकम् विशेषेण हिंसकम् एतन्नामानं च बलासम् बलस्य असनकर्तारं बलक्षयकारकम् एतन्नामानं पृष्ट्यामयम् सर्वाङ्गव्यापिनम् एतन्नामानं च रोगं तक्मानम् कृच्छ्रजीवनकर्तारं यस्मिन् सति कृच्छ्रेण जीवनं भवति तादृशं विश्वशारदम् सर्वस्य सर्वदा वा विशरणकर्तारम् एवम् अन्यानपि रोगान् जङ्गिडो मणिः अरसान् पीडनासमर्थान् करत् करोतु ॥

[इति] पञ्चमेनुवाके प्रथमं सूक्तम् ॥

"इन्द्रस्य नाम" इति द्वितीयं सूक्तम् । तस्य जङ्गिडमणिबन्धने पूर्वसूक्तेन सह उक्तो विनियोगः ॥

तत्र प्रथमा ॥

इन्द्रस्य नाम गृह्णन्त ऋषयो जङ्गिडं ददुः ।

---

१ P उग्रः ।. २ A D R Cs पृष्ट्यामयम्. B^h S^m पृष्ठ्यामियम्. V पृष्ठ्यामयम्. We with C K^m Dc P P^2 J. ३ D विदुः. We with A B^h C R S^m V Dc Cs.

देवा यं चक्रुर्भेषजमग्रे विष्कन्धदूषणम् ॥ १ ॥

इन्द्रस्य । नाम । गृह्णन्तः । ऋषयः । जङ्गिडम् । ददुः ।

देवाः । यम् । चक्रुः । भेषजम् । अग्रे । विस्कन्धऽदूषणम् ॥ १ ॥

पूर्वं ऋषयः अतीन्द्रियद्रष्टारोऽङ्गिराद्या इन्द्रस्य देवस्य नाम गृह्णन्तः उच्चारयन्तो [जङ्गिडम्] जङ्गिडाख्यं मणिम् अतिशयितवीर्यत्वाय रक्षाकामेभ्यः पुरुषेभ्यो ददुः दत्तवन्तः । तस्माद् इदानींतनैरपि रक्षाबन्धनसमये इन्द्रस्य नाम ब्रुवाणैरेव जङ्गिडमणिर्धार्य इत्यभिप्रायः । किं[1] च अग्रे सृष्ट्यादौ [देवाः] इन्द्राद्या यं [जंङ्गिडं] जङ्गिडाख्यौषधिं विष्कन्धभेषजम्[*1] विष्कन्धाख्यस्य महारोगस्य औषधं चक्रुः कृतवन्तः । अतस्तं विष्कन्धभेषजार्थं प्रयुञ्ज्याद् इत्यर्थः । स नो रक्षत्विति उत्तरत्र संबन्धः ॥

द्वितीया ॥

स नो रक्षतु जङ्गिडो धनपालो धनेव ।

देवा यं चक्रुर्ब्राह्मणाः परिपाणमरातिहम् ॥ २ ॥

सः । नः । रक्षतु । जङ्गिडः । धनऽपालः । धना[2]ऽइव ।

देवाः । यम् । चक्रुः । ब्राह्मणाः । परिऽपानम् । अरातिऽहम् ॥ २ ॥

स उक्तविशेषणविशिष्टो जङ्गिडो मणिः नः अस्मान् रक्षतु । तत्र दृष्टान्तः । धनपालः लोके कस्यचिद् राज्ञो धनाध्यक्षो [धनेव] धनानि यथा महता प्रयत्नेन रक्षति तद्वत् । यं जङ्गिडं देवा ब्राह्मणाश्च । ब्राह्मणा महर्षयः । यद्वा दे[3]वाः श्रुताध्ययनादिना द्योतमाना ब्राह्मणा भृग्वङ्गिरःप्रभृतयः परिपाणम् परितो रक्षकम् अरातिहम् अरातेः शत्रोर्हन्तारं चक्रुः । स नो रक्षत्विति संबन्धः ॥

---

१ R विस्कन्ध°. We with A B[h] C D K[m] S[m] V Dc Cs. २ P P[2] J धनऽइव ।

1 S′ किंच यः किंच अग्रे सृष्ट्यादौ यमिंद्राद्याः जंगिडाख्यमोषधिं विष्कंधभेषजं. 2 S′ Sâyaṇa's text, however, is: देवा यं चक्रुर्भेषजमग्रे विष्कंधदूषणं. 3 S′ देवाद्याः.

तृतीया ॥

दुर्हार्दः संघोरं चक्षुः पापकृत्वानमागमम् ।
तांस्त्वं सहस्रचक्षो प्रतीबोधेन नाशय परिपाणोसि जङ्गिडः ॥ ३ ॥

दुःऽहार्दः । सम्ऽघोरम् । चक्षुः । पापऽकृत्वानम् । आ । अगमम् ।
तान् । त्वम् । सहस्रचक्षो इति सहस्रऽचक्षो । प्रतिऽबोधेन । नाशय ।
परिऽपानः । असि । जङ्गिडः ॥ ३ ॥

हे जङ्गिडमणे त्वं दुर्हार्दः दुष्टहृदयस्य शत्रोः संघोरम् अत्यन्तक्रूरं चक्षुः । नाशयेति उत्तरत्र संबन्धः । एवं पापकृत्वानम् हिंसादिलक्षणस्य पापस्य कर्तारम् । "राजनि युधिकृञः" इति राजोपपदात् करोतेर्विहितः क्वनिप् पापोपपदादपि अत्र व्यत्ययेन निष्पन्नः । एवंलक्षणम् आगतम् हन्तुं प्राप्तं च नाशय । तान् उक्तलक्षणान् सर्वान् हे सहस्रचक्षो बहुधा द्रष्टः । चक्षेरौणादिक उम्प्रत्ययः । अनेन बाधकहननविषयपरिज्ञानम् अस्योक्तं भवति । तादृशस्त्वं प्रतिबोधेन प्रतिकूलया तव बुद्ध्या । यद्वा तत्कृतापराधोद्घाटनेन[1] नाशय ॥ एवंविधप्रार्थनाया विषयभावस्तस्य कुत इति तत्राह । जङ्गिडस्त्वं परिपाणोसि परितो रक्षकोसि यतः अतो नाशयेत्यर्थः ॥

चतुर्थी ॥

परि मा दिवः परि मा पृथिव्याः पर्यन्तरिक्षात् परि मा वीरुद्भ्यः ।
परि मा भूतात् परि मोत भव्याद् दिशोदिशो जङ्गिडः पात्वस्मान् ॥ ४ ॥

परि । मा । दिवः । परि । मा । पृथिव्याः । परि । अन्तरिक्षात् । परि ।
मा । वीरुत्ऽभ्यः ।

---

१ A B^h दुर्हादः. २ Dc °मागमं changed to °मार्दभन्. K^m S^m °मार्दभन्. We with A B^h C D R Cs P P^2 J. ३ R ताःस्त्वं. ४ B^h C D R S^m Cs परि मोत. Dc परि मोत changed to परि मोत. We with K^m Dc. ५ B^h C D R S^m Cs P J भव्या°. Dc भव्या° changed to भव्यां°. P J भव्यात् ।. We with K K^m V P^2.

---

1 S' यत्कृता°.

परि॑ । मा । भूतात् । परि॑ । मा । उत । भव्या॑त् । दिशः॒ऽदि॑शः । ज॒ङ्गि॒डः ।
पा॒तु॒ । अ॒स्मान् ॥ ४ ॥

अयं जङ्गिडो मणिः मा मां दिवः द्युलोकात् । ततः संभूताद् भयाद् इत्यर्थः । एवं पृथिव्यादिष्वपि द्रष्टव्यम् । परि पात्विति उत्तरत्र संबन्धः । तथा पृथिव्याः सकाशात् पृथिव्यां संभूतेभ्यो बाधकेभ्यः पातु । एवम् अन्तरिक्षात् तत्रत्याद् रक्षःप्रभृतेः पातु । वीरुद्भ्यः विविधं रोहन्तीति वीरुधः । तेभ्यः पातु । उपलक्षणम् एतत् । तरु[1]गुल्मादिभ्य इत्यर्थः । तेष्वपि विषादिदोषसंभवात् तद्रक्षाप्रार्थना युक्ता । एवं भूतात् अतीतात्[2] कालात् । भूतसंबन्धिनः प्राणिजाताद् इत्यर्थः । एवं भव्यात् भविष्यतोपि परि पातु । एवं दिशोदिशः प्रागादेः[3] । वीप्सया सर्वा अपि दिशः परिगृह्यन्ते । सर्वाभ्यो दिग्भ्यः तत्रत्येभ्यो भयेभ्यः अस्मान् जङ्गिडो मणिः पातु ॥

पञ्चमी ॥

यँ[*] ऋ॒ष्ण[*]वो[1] दे॒वकृ॑ता॒ य उ॒तो व॑वृ॒[*]तेऽन्यः ।
सर्वां॒स्तान् वि॒श्वभे॑षजोऽर॒सां ज॑ङ्गि॒डस्क॑रत् ॥ ५ ॥

ये॑[*][2] । ऋ॒ष्ण[*][2]वः॑ । दे॒व[3]ऽकृ॑ताः । यः[4] । उ॒तो इति॑ । व॑[*][5]वृ॒ते । अ॒[5][*]न्यः ।
सर्वा॑न् । तान् । वि॒श्वऽभे॑षजः । अ॒र॒सान् । ज॒ङ्गि॒डः । क॒र॒त् ॥ ५ ॥

देवकृताः देवैर्निष्पादिता ये ऋष्णवः गन्तारो हिंसकाः पुरुषाः सन्ति । उतो अपि च ये[*] अँ[*]न्ये मनुष्यादिप्रेरिता बाधका ववृते[4] ववृतिरे

१ A B[h] C यः कृ॒ष्णवो॑ दे॒वकृ॒ताय॑ उ॒तो व॑भृ॒तेन्य॒ः. D S[m] यः कृ॒ष्णवो॑ दे॒वकृ॒ताय॑ उ॒तो व॑भृ॒थेन्य॒ः. K K[m] V Dc यः कृ॒ष्णवो॑ दे॒वकृ॑ता य उ॒तो व॑भृ॒तेन्यः. R यः कृ॒ष्णवो॑ दे॒वकृ॒ता य उ॒तो व॑भृ॒थेन्यः. Cs यः कृ॒ष्णवो॑ दे॒वकृ॑ताय उ॒तो व॑भृ॒तेन्यः. Sâyaṇa's text: य ऋष्णवो देवकृता य उतो ववृतेन्यः. We with Sâyaṇa's text. २ P P[2] J यः । कृ॒ष्णवः॑ ।. We with Sâyaṇa. ३ P[2] J दे॒वऽकृ॒ताः ।. We with P. ४ So we read with P P[2] J. ५ P J व॒भृ॒तेन्यः॑ । (changed in J to व॒भृ॒तेन्यः॑ ।). P[2] व॒भृ॒तेन्यः॑. We with the *Saṁhitâ*.

1 S′ तत्र for तरु°. 2 S′ अतीतातत्कालात् for अतीतात् कालात्. 3 S′ प्रागादि for प्रागादेः. 4 S′ instead of reading the words ववृते ववृतिरे in this place reads them between तादृशो and जङ्गिडः lower down.

तान् सर्वान् विश्वभेषजः विश्वानि भेषजानि यस्य तथोक्तः । विश्वेष्वपि भेषजेषु यत् साध्यं तद् अनेन भवतीति विश्वभेषजः । सर्वरोगादिपरिहारकत्वस्यास्य[1] वर्णितत्वात् । तादृशो[2] जङ्गिडः अरसान् गतसामर्थ्यान् करत् करोतु ॥

इति पञ्चमेनुवाके द्वितीयं सूक्तम् ॥

"शतवारो अनीनशत्" इति तृतीयं सूक्तम् । तेन "संततिं कुलक्षये प्रयुञ्जीत" इति [न॰क॰१७.] विहितायां संतत्याख्यायां महाशान्तौ शतवारं मणिम् अभिमन्त्र्य बध्नीयात् । सूत्रितं हि । "शतवारो अनीनशद् इति शतवारं[3] संतत्याम्" इति [न॰क॰१९.] ॥

तत्र प्रथमा ॥

शतवारो अनीनशद् यक्ष्मान् रक्षांसि तेजसा ।
आरोहन् वर्चसा सह मणिर्[1]दुर्णामचातनः ॥ १ ॥

शतऽवारः । अनीनशत् । यक्ष्मान् । रक्षांसि । तेजसा ।
आऽरोहन् । वर्चसा । सह । मणिः[1] । दुर्नामऽचातनः ॥ १ ॥

शतवारः शतं वारा[4] मूलानि शूका वा यस्य स शतवारः । यद्वा शतसंख्याकान् रोगान् निवारयतीति शतवारः "शतवारेण वारये" इति उत्तरत्र शतसंख्याकरोगवारणश्रवणाद् ओषधिविशेषः । तदात्मको मणिः यक्ष्मान् रोगान् तेजसा स्वमहिम्ना अनीनशत् भृशं नाशयतु । ⌶ नशेश्छान्दसे लुङि चङि रूपम् ⌶ । तथा तेजसा रक्षांस्यपि अनीनशत् । कदेत्युच्यते आरोहन्निति । दुर्नामचातनः दुर्नामा त्वग्दोषः त्वग्दोषाणां चातयिता नाशयिता मणिः वर्चसा दीप्त्या सह सहितः सन् आरोहन् पुरुषस्य भुजादिप्रदेशम् अधितिष्ठन् । अनीनशद् इति संबन्धः ॥

१ A B^h मणिं दुर्णामचातन. C D K K^m R S^m Cs Dc मणि दुर्णामचातनः (Dc मणि changed to मणिं). P P^2 J मणिम् ।. We with Sâyaṇa.

1 S' °हारकत्वस्य for °हारकत्वस्यास्य. 2 S' तादृशे. 3 So S'. The *Nakshatra-kalpa*: शातावरी (sic). 4 S' वारावारा.

द्वितीया ॥

शृङ्गाभ्यां रक्षो नुदते मूलेन यातुधान्यः ।
मध्येन यक्ष्मं बाधते नैनं पाप्माति तत्रति ॥ २ ॥

शृङ्गाभ्याम् । रक्षः । नुदते । मूलेन । यातुऽधान्यः ।
मध्येन । यक्ष्मम् । बाधते । न । एनम् । पाप्मा । अति । तत्रति ॥२॥

अयं शतवारः शृङ्गाभ्याम् शृङ्गवद् अवस्थिताभ्याम् अग्रभागाभ्यां रक्षः राक्षसजातिं राक्षसान् अन्तरिक्षस्थान् नुदते अपसारयति । मूलेन अधःप्रदेशेन [यातुधान्यः यातुधानीर्नुदते । मध्येन] काण्डेन यक्ष्मम् सकलं रोगं बाधते । एनं सर्वस्य बाधकं शतवारमणिं पाप्मा पापी पापं वा न अति तत्रति नातिक्रामति । यद्वा एनं प्रकृतम् उक्तविधमणिविशिष्टं पाप्मा पापं बाधकं नाति तत्रति । ॥ तॄ प्लवनतरणयोः । श्लुः शश्चेति विकरणद्वयम् ॥ ॥

तृतीया ॥

ये यक्ष्मासो अर्भका महान्तो ये च शब्दिनः ।
सर्वां दुर्णामहा मणिः शतवारो अनीनशत् ॥ ३ ॥

ये । यक्ष्मासः । अर्भकाः । महान्तः । ये । च । शब्दिनः ।
सर्वान् । दुर्नामऽहा । मणिः । शतऽवारः । अनीनशत् ॥ ३ ॥

ये प्रसिद्धा अर्भकाः अप्ररूढा उत्पन्नमात्रा यक्ष्मासः यक्ष्मा रोगाः सन्ति ये च महान्तः अभिवृद्धा यक्ष्माः ये च शब्दिनः शब्दवन्तः एते दुश्चिकित्स्या इति शब्द्यमानाः शब्दवन्तो वा [तान्] सर्वान् उक्तलक्षणान् रोगान् दुर्नामहा दुर्नामाख्यस्य रोगस्य हन्ता शतवारो मणिः अनीनशत् भृशं नाशयतु ॥

---

१ P अर्भकः ।. We with P[2] J.

चतुर्थी ॥

शतं वीरांनजनयच्छतं यक्ष्मानपावपत् ।
दुर्णाम्नः सर्वान् हत्वाव रक्षांसि धूनुते ॥ ४ ॥

शतम् । वीरान् । अजनयत् । शतम् । यक्ष्मान् । अप । अवपत् ।
दुःऽनाम्नः । सर्वान् । हत्वा । अव । रक्षांसि । धूनुते ॥ ४ ॥

अयं धार्यमाणो मणिः शतम् शतसंख्याकान् वीरान् विविधम् ईरयन्ति अपनुदन्तीति वीराः पुत्राः । तान् अजनयत् जनयतु उत्पादयतु प्रयच्छतु । "शतवारो अनीनशद् इति शतवारं संतत्याम्" इति सूत्राद् वीरजनकत्वम् । तथायं[1] शतम् शतसंख्याकान् यक्ष्मान् व्याधीन् अपावपत् । ॥अपपूर्वो वपिर्नाशार्थः॥ । अपवपतु नाशयतु । सर्वान् त्वग्दोषभेदा ये ये सन्ति श्वित्रदद्रूपामादिकास्तान् सर्वान् दुर्नाम्नो हत्वा नाशयित्वा रक्षांसि अव धूनुते अव निकृष्टम् अपुनरुद्भवं नाशयति ॥

पञ्चमी ॥

हिरण्यशृङ्ग ऋषभः शातवारो अयं मणिः ।
दुर्णाम्नः सर्वांस्तृड्ढ्वाव रक्षांस्यक्रमीत् ॥ ५ ॥

हिरण्यऽशृङ्गः । ऋषभः । शातऽवारः । अयम् । मणिः ।
दुःऽनाम्नः । सर्वान् । तृड्ढ्वा । अव । रक्षांसि । अक्रमीत् ॥ ५ ॥

हिरण्यशृङ्गः यस्याग्रं हिरण्यवद् अवभासते स हिरण्यशृङ्गः । शतवारस्याग्रम् एवं भवति । ऋषभः ओषधीनां श्रेष्ठः शातवारः एतन्नामा

१ A D K K̈ R S̈ V वीरानजन॰. B̈ C वीरा अजन॰. Dc वीरा अ॰ changed to वीरान॰. Cs वीरान्नं जन॰. P J वीराः ।. P̈ वीरान् ।. None of our authorities have वीराँ अ॰. २ B̈ C Dc ॰जनयन्छतं. R ॰जनयन्शतं. P J अजनयन् ।. We with A D K K̈ S̈ V Cs P̈. ३ R Cs धूनते. We with A B̈ C D K K̈ S̈ V Dc. ४ C शंतवारो. K K̈ शतवारो. V शातवारो and also शतवारो. Dc शातवारो changed to शातवारो. We with A B̈ D R S̈ Cs P P̈ J. ५ Our MSS. ॰ढ्वा॰.

1 S' यः for ॰यं.

अयं मणिविशेषः सर्वान् दुर्नाम्नः त्वग्रोगभेदान्[1] सर्वान् तृड्ढ्वा[2] हिंसित्वा रक्षांसि राक्षसान् अवाक्रमीत् न्यकार्षीत्[3] आक्रमतु ॥

षष्ठी ॥

शतमहं दुर्णाम्नीनां गन्धर्वाप्सरसां[1] शतम् ।
शतं शश्वन्वतीनां शतवारेण वारये ॥ ६ ॥

शतम् । अहम् । दुःऽनाम्नीनाम् । गन्धर्वऽअप्सरसाम् । शतम् ।
शतम् । शश्वन्ऽवतीनाम् । शतऽवारेण । वारये ॥ ६ ॥

अहं दुर्नाम्नीनाम् दुर्नाम्नीरोग[4]भेदानां श्वित्रदद्रूपामादीनां[5] व्याधीनां शतम् । व्याध्यपेक्षया दुर्नाम्नीति स्त्रीलिङ्गनिर्देशः । "अन उपधालोपिनोऽन्यतरस्याम्" इति ङीप् । शतवारेण वारय इति संबन्धः । एवं गन्धर्वाप्सरसाम् गन्धर्वा अप्सरसश्च अन्तरिक्षसंचारिणो देवयोनयो मनुष्यान् बल्यर्थं गृह्णन्ति । अप्सरस इति नियतं बहवः स्त्रीलिङ्गाभिधेयाश्च । तेषां शतं वारये निवारयामि । तथा शश्वन्वतीनाम् । मुहुर्मुहुः पीडार्थम् आगन्त्र्यो ग्रहापस्माराद्या व्याधयः शश्वन्वत्यः । दकारस्य नकारोपजनः । तासां शतं [शतवारेण] वारये । यतोयं शतवाराह्वः अतः शतस्य वारकत्वं युक्तम् इति भावः ॥

इति पञ्चमेनुवाके तृतीयं सूक्तम् ॥

"इदं वर्चः" इति चतुर्थं सूक्तम्[6] ॥

---

१ A B^h C D R गन्धर्वा°. We with K K^m S^m V Dc P P^2 J.

---

1 S′ तद्रो for त्वग्रो°. 2 S′ तढ्वा. 3 S′ निकर्षिः. 4 S′ दुनाम्नीरभेदानीं. 5 S′ inserts शतं after °दद्रूपामादीनां. 6 S′ gives no *viniyoga* of this hymn here. Some such as the following introduction was perhaps required: अस्य सूक्तस्य "त्वाष्ट्रीं वक्ष्यये" इति [न° क° १७] विहितायां महाशान्तौ त्रिवृन्मणिबन्धने विनियोगः । तद् उक्तं नक्षत्रकल्पे । "इदं वर्च इति त्रिवृतं त्वाष्ट्र्याम्" इति [न° क° १९] ॥ Sâyaṇa does not appear to have been conscious that the hymn was about the *trivṛinmaṇi*, as otherwise he would not have spoken of the object as merely प्रतिग्रहविषयभूत पदार्थ (verse 3) and पदार्थ (verse 4). Did he doubt the correctness of the directions in the *Nakshatra-Kalpa* on the hymn?

तत्र प्रथमा ॥

इदं वर्चो अग्निना दत्तमागन् भर्गो यशः सह ओजो वयो बलम्।
त्रयस्त्रिंशद् यानि च वीर्याणि तान्यग्निः प्र ददातु मे ॥ १ ॥

इदम्। वर्चः। अग्निना। दत्तम्। आ। अगन्। भर्गः। यशः। सहः। ओजः। वयः। बलम्।
त्रयःऽत्रिंशत्। यानि। च। वीर्याणि। तानि। अग्निः। प्र। ददातु। मे ॥१॥

अग्निना देवेन दत्तम् इदं वर्चः दीप्तिः आगन् आगच्छतु। इदम् इदानीम् इति वा व्याख्येयम्। एवं भर्गः भर्जकं तेजः यशः कीर्तिः सहः पराभिभावुकं तेजः ओजः ओजो नामाष्टमो[1] धातुः धनुरानमनादिसामर्थ्यम् वयः। नित्ययौवनम् अत्राभिमतम्। बलम् परैरनभिभाव्यं सामर्थ्यम्। आगन्निति प्रत्येकम् अभिसंबध्यते। किं च यानि त्रयस्त्रिंशत्संख्याकानि प्रतिनियतानि [वीर्याणि] सन्ति [तानि] मे मह्यम् अग्निः प्र ददातु प्रयच्छतु ॥

द्वितीया ॥

वर्च आ धेहि मे तन्वां३ सह ओजो वयो४ बलम्।
इन्द्रियाय त्वा कर्मणे वीर्याय प्रति गृह्णामि शतशारदाय ॥ २ ॥

वर्चः। आ। धेहि। मे। तन्वाम्। सहः। ओजः। वयः। बलम्।
इन्द्रियाय। त्वा। कर्मणे। वीर्याय। प्रति। गृह्णामि। शतऽशारदाय ॥ २ ॥

हे अग्ने मे मम तन्वाम् शरीरे वर्चः त्वदीयं शत्रूणाम् आवर्जकं तेजः आ धेहि विधेहि। सहओजोवयोबलानि व्याख्यातानि। अत्रापि

१ A B̊ C D R S̊ Cs वयों बलम्. Dc वयों बलम् changed to वयो बलम्. P J बलम्।. We with K K̊ V Dc P̊. २ A B̊ C D K K̊ R V Dc Cs तन्वं and not तन्वां. P̊ P J तन्वम्।. We with S̊. Sâyaṇa's text too तन्वां. ३ B̊ D K K̊ V Dc १ for ३. We with A C. ४ A C D R S̊ Cs वयों बलम्. Dc वयों बलम् changed to वयो बलम्।. P̊ बलम्।. We with K K̊ V P J.

1 S' नामो for नामाष्टमो.

आ धेहीति प्रत्येकम् अभिसंबध्यते । वर्चःप्रभृतीनि अग्नेरसाधारणानि । तानि स्वशरीरे स्थापयेति आशास्ते । इन्द्रियाय । ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च इन्द्रियशब्देन विवक्ष्यन्ते । इन्द्रियाणां दार्ढ्याय हे प्रतिगृह्यमाण पदार्थ त्वा त्वां प्रति गृह्णामि स्वीकरोमि । न केवलम् इन्द्रियसामर्थ्याय किंतु कर्मणे अग्निहोत्रादिलक्षणाय कर्मसिद्ध्यर्थम् । तथा वीर्याय वीरस्य कर्म वीर्यं शत्रुजयादि तत्सिद्ध्यर्थम् । एवं शतशारदाय शतसंवत्सरजीवनाय । हिरण्यादिके प्रतिगृहीते सति तेन शरीर[1]पोषणादिद्वारा इन्द्रियाणां[2] दार्ढ्यसंभवाद् एवम् आह ॥

तृतीया ॥

ऊर्जे त्वा बलाय त्वौजसे सहसे त्वा ।
अभिभूयाय त्वा राष्ट्रभृत्याय पर्यूहामि शतशारदाय ॥ ३ ॥

ऊर्जे । त्वा । बलाय । त्वा । ओजसे । सहसे । त्वा ।
अभिऽभूयाय । त्वा । राष्ट्रऽभृत्याय । परि । ऊहामि । शतऽशारदाय ॥ ३ ॥

हे प्रतिग्रहविषयभूत पदार्थ त्वा त्वाम् ऊर्जे । ऊर्ग् इति अन्ननाम । अन्नलाभाय त्वा पर्यूहामि परिवहामि । प्रतिगृह्णामीत्यर्थः । तथा बलाय शरीरसामर्थ्याय त्वा पर्यूहामि । एवम् ओजसे सहसे च त्वा पर्यूहामि । [अभिभूयाय] अभिभूयः अभिभवनं तस्मै शत्रुजयाय प्रयोजनाय [त्वा] पर्यूहामि । एवं राष्ट्रभृत्याय राज्यभरणप्रयोजनाय तथा शतशारदाय शतशरत्पर्यन्तजीवनाय पर्यूहामि ॥

चतुर्थी ॥

ऋतुभ्यष्ट्वार्तवेभ्यो माद्भ्यः संवत्सरेभ्यः ।
धात्रे विधात्रे समृधे भूतस्य पतये यजे ॥ ४ ॥

ऋतुऽभ्यः । त्वा । आर्तवेभ्यः । मातऽभ्यः । समऽवत्सरेभ्यः ।

१ Except Dc (which has ऋतुभ्यष्ट्वेत्येका) our MSS. have ऋतुभिष्ट्वेत्येका. The reference is to III. 10. 10 where, however, the MSS. all read ऋतुभ्यष्ट्वा° and not ऋतुभिष्ट्वा.

1 S′ शरीरे°. 2 S′ om. °णां दार्ढ्य°.

धात्रे । विऽधात्रे । समृऽऋधे । भूतस्य । पतये । यजे ॥ ४ ॥

हे पदार्थ त्वा त्वाम् ऋतुभ्यः ग्रीष्मादिभ्यः तेषां प्रीणनाय यजे संगतं करोमि ददामि वा । एवम् आर्तवेभ्यः ऋतुसंबन्धिनीभ्यो देवताभ्यः तथा माद्भ्यः मासेभ्यश्चैत्रादिरूपेभ्यो द्वादशसंख्याकेभ्यः तथा संवत्सरेभ्यः संवसन्ति एषु मासादिकालावयवा इति संवत्सराः तेभ्यः एवं धात्रे स्रष्ट्रे एवंनामकाय देवाय तथा विधात्रे विविधस्य भूतजातस्य कर्त्रे एवं समृधे समर्धयति सृष्टानि प्राणिजातानीति समृत् तस्मै यजे । तथा[1] भूतस्य उत्पन्नस्य कृत्स्नस्य पदार्थस्य पतये स्वामिने यजे ॥

इति पञ्चमेनुवाके चतुर्थं सूक्तम् ॥

"न तं यक्ष्माः" इति पञ्चमं सूक्तम् । तस्य "ऐतु देवः" इति उत्तरसूक्तस्य च पुरोहितकर्तव्ये रात्रौ राज्ञः शय्यागृहप्रवेशनकर्मणि गुग्गुलुधूपं कुष्ठौषधिधूपं च दद्यात् ॥

"अथ पिष्टमयीं रात्रिं चतुर्भिर्दीपकैः सह"

इति प्रक्रम्य उक्तं परिशिष्टे । "एह्यश्मानम् आ तिष्ठ [२. १३. ४] इति "पञ्चमीम् अधिष्ठापयेत् । न तं यक्ष्माः [१९. ३८] ऐतु देवः [१९. ३९] "इति गुग्गुलु[कुष्ठ]धूपं दद्यात्" इति [प॰ ४. ४] ॥

तत्र प्रथमा ॥

न तं यक्ष्मा अरुन्धते[1] नैनं शपथो[2] अश्नुते ।
यं भेषजस्य गुल्गुलोः[3] सुरभिर्गन्धो अश्नुते[4] ॥ १ ॥

न । तम् । यक्ष्माः । अरुन्धते[5] । न । एनम् । शपथः । अश्नुते ।
यम् । भेषजस्य । गुल्गुलोः[3] । सुरभिः । गन्धः । अश्नुते[4] ॥ १ ॥

तं राजानं यक्ष्माः व्याधयो नारुन्धते रोधं न कुर्वन्ति न पीडय-

१ So the form and accent in A B^h C D K K^m R S^m V Dc Cs P P^2 J. Sâyaṇa also अरुन्धते, though his text is अरुंधत. २ Cs शपथोऽश्नुते for शपथो अश्नुते. ३ A B^h C K V गुग्गुलोः. J गुग्गुलोः।. We with D K^m R S^m V Dc Cs P P^2. ४ All our authorities: अश्नुते. ५ So P P^2 J.

1 S' भूतस्य तथा भूतस्य for तथा भूतस्य.

न्ति । ⌛ रुधिर् आवरणे । रौधादिकः ⌛ । तथा एनं राजानं शपथः परकृतोऽभिशापो नाश्नुते न व्याप्नोति न स्पृशति । तम् इत्युक्तं कम् इत्यत आह । यं राजानं भेषजस्य औषधरूपस्य[1] गुग्गुलोः एतन्नामकस्य सुरभिः घ्राणसंतर्पको गन्धो अश्नुते व्याप्नोति । तम् इति पूर्वत्रान्वयः ॥

विष्वञ्चस्तस्माद् यक्ष्मा मृगा अश्वा इवेरते ।
यद् गुल्गुलु सैन्धवं यद् वाप्यासि[2] समुद्रियम् ॥ २ ॥
उभयोरग्रभं नामास्मा अरिष्टतातये ॥ ३ ॥[3]

विष्वञ्चः । तस्मात् । यक्ष्माः । मृगाः । अश्वाःऽइव[4] । ईरते[5] ।
यत् । गुल्गुलु । सैन्धवम् । यत् । वा । अपि । असि[6] । समुद्रियम् ॥ २ ॥
उभयोः । अग्रभम् । नाम । अस्मै । अरिष्टऽतातये ॥ ३ ॥

द्वितीया ॥ तस्मात् यं भेषजस्येति उक्ताद्[2] गुल्गुलुगन्धम् आघ्रातवतः सकाशाद् यक्ष्माः व्याधयो विष्वञ्चः विष्वगञ्चना नानादिगभिमुखाः सन्तः ईरते वेगेन धावन्ति । ⌛ ईर गतौ । आदादिकः ⌛ । ईरणे दृष्टान्तः । मृगा अश्वा इव । अश्वाः आशुगामिनो मृगा इव हरिणादय इव । अथवा[3] मृगा इव अश्वा इव । उभयेषामपि आशुगमनसंभवात् । यद्वा अयम् अर्धर्चः पूर्वमन्त्रेण सह व्याख्येयः यं भेषजस्येत्यनेन [एक]-वाक्यतासंभवात् ॥

तृतीया ॥ गुल्गुलुः* औषधं[4] यत् यदि सैन्धवम् सिन्धुदेशजम् । ⌛ "त-

---

१ A B̊ C V गुंग्गुलु. P J गुग्गुलु ।. We with D K̊ R S̊ V Dc Cs P̊. २ A K K̊ Dc Cs यद्वाप्यासिं. We with B̊ C D R S̊ V. Sâyaṇa's text: यद्वाप्यसि. ३ D S̊ Dc P P̊ J and the *Sarvânukramaṇikâ* consider the first two lines विष्वं° up to समुद्रियम् as forming one *ṛik* and the last line (उभयों°) as forming another (an ekâvasânâ). A B̊ R regard the three lines as forming one *ṛik* (a tryavasânâ). We with D S̊ Dc P P̊ J and the *Sarvânukramaṇikâ*. ४ P J अश्वांऽइव ।. We with P̊. ५ P P̊ J इरते ।. ६ P P̊ J आऽअसिं ।.

---

1 S' ओषध°. 2 S' उक्ताव्यद्गु° for उक्ताद् गु°. 3 S' अपवी for अथवा. 4 S' ओषधं.

त्र भवः" इति अण्॥ यद्वापि समुद्रियम् समुद्रभवम् असि । ॥"समुद्राभ्राद् घः" इति भवार्थे घः॥ । हे गुल्गुलो[1] उभयोः उभयविधयोस्तव स्वरूपयोः नाम अग्रभम् गृह्णामि कीर्तयामि । ॥गृह्णातेर्लुङि च्लेर्लुक् छान्दसः । "हृग्रहोर्भः॰" इति भत्वम्॥ । किमर्थम् । अस्मै प्रसक्ताय प्रवर्तमानाय[2] अरिष्टतातये अरिष्टकर्त्रे असुखकर्त्रे रोगाय द्वेष्याय वा । तत्परिहारायेत्यर्थः[3] । यद्वा अस्मै व्याधिशान्तिकामाय तदर्थम् तस्य अरिष्टनाशनायेति व्याख्येयम् । ॥"शिवशमरिष्टस्य करे" इति तातिल् प्रत्ययः॥ । यद्वा । ॥अत्र स्वार्थिकस्तातिः॥ । अरिष्टपरिहारायेत्यर्थः ॥

[इति] पञ्चमेनुवाके पञ्चमं सूक्तम् ॥

"ऐतु देवः" इति षष्ठं सूक्तम् । अस्य रात्रीकल्पे कुष्ठधूपप्रदाने विनियोगः पूर्वसूक्तसमय उक्तः ॥

तत्र प्रथमा ॥

ऐतु॑ दे॒वस्त्राय॑माणः कुष्ठो॑ हि॒मव॑त॒स्परि॑ ।
त॒क्मानं॒ सर्वं॑ नाशय॒ सर्वा॑श्च यातु॒धान्यः॑ ॥ १ ॥

आ । ए॒तु॑ । दे॒वः । त्राय॑माणः । कुष्ठः॑ । हि॒मऽव॑तः । परि॑ ।
त॒क्मान॑म् । सर्व॑म् । ना॒श॒य॒ । सर्वाः॑ । च॒ । या॒तु॒ऽधा॒न्यः॑ ॥ १ ॥

देवः दिवि भवः । द्युलोके उत्पत्तिर्वक्ष्यते । वीर्यातिशयैर्द्योतमानो [वा] । [कुष्ठः] कुष्ठाख्यौषधिविशेषो[4] हिमवतस्परि एतन्नामकात् पर्वतात् सकाशात् त्रायमाणः अस्मान् पालयमानः आ[5] एतु[5] आगच्छतु ॥ एवं परोक्षाभिधानेन आगमनम् आशास्य अभ्यागतम् अभिमुखीकृत्य आह । हे कुष्ठाख्यौषधिविशेष त्वं तक्मानम् क्लेशकारिणं रोगं सर्वम् योयो रोगविशेषस्तं सर्वं नाशय । किंचिद् औषधं कस्यचिद् रोगस्य नाशकम्

१ B[h] C R Cs एतुं. P P[2] J ऐतुं । for आ । ए॒तु । . We with A D K S[m] V Dc.

1 S' गुग्गुलो. 2 S' प्रवर्तनाय. 3 S' °परिहारेत्यर्थः for °परिहारायेत्यर्थः. 4 S' °विशेषवा for °विशेषो. 5 So Sâyaṇa separately.

अथ वा कतिपयानां नाशकं भवति । इदं तु सर्वरोगनाशकम् इति सर्वम् इत्युच्यते । किं च सर्वाश्च यातुधान्यः यातवो यातना धीयन्ते यासु ता यातुधान्यः ताः सर्वा नाशय । यावन्ति रक्षांसि सन्ति तानि सर्वाण्यपि नाशय ॥

द्वितीया ॥

त्रीणि ते[1] कुष्ठ नामानि नद्यमारो[2,*] नद्यारिषः[3]। नद्यायं पुरुषो रिषत् ।
यस्मै परिब्रवीमि त्वा सायंप्रातरथो दिवा ॥ २ ॥

त्रीणि । ते । कुष्ठ । नामानि । नद्यऽमारः[4] । नद्यऽरिषः ॥ नद्य । अयम् ।
पुरुषः । रिषत् ।
यस्मै । परिऽब्रवीमि । त्वा । सायम्ऽप्रातः । अथो इति । दिवा ॥ २ ॥

हे कुष्ठ ते त्रीणि नामानि अत्यन्तरहस्यानि । कानि तानीति तान्याह । नद्यमारः इति एकं नाम । नद्यां भवा नद्याः । नदीशब्देन नदीस्थानि उदकानि लक्ष्यन्ते[1] । उदकदोषोद्भवा रोगा इत्यर्थः । यद्वा नद्या नदनीयाः[2] शब्दनीयाः अत्यन्तदुष्परिहरत्वेन शब्द्यमाना इत्यर्थः । तान् मारयतीति नद्यमारः । तथा नद्यरिषः । उक्तो नद्यशब्दार्थः । तान् रिष्यतीति नद्यरिषः । इदं द्वितीयं नाम । केवलो नद्य इति तृतीयं नाम । नद्यानां मारकः स्वयमपि नद्य इत्युच्यते । तं संबोध्य ब्रूते । हे

१ B̊ C D R S̊ ते. P कुष्टं. J कुष्ट। changed to कुष्ठ।. We with K̊ V Dc Cs P̊. २ R S̊ नद्यमारो नद्यारिषो नद्यायं पुरुषो रिषत् ( R ऋषत् )। यस्मै परि ब्रवीमि. A नद्यमारो नद्यायुषो नद्यायं पुरुषो रिषत् । यस्मै परि ब्रवीमि. B̊ C नद्यमारो नद्यायुषो नद्यायं पुरुषोर्षत् । यस्मै परि ब्रवीमि. D नद्यमारो नद्यायुषो नद्यायं पुरुषो रिषत् । यस्मै परि ब्रवीमि. K K̊ नद्यमारो नद्यायुषः । नद्यायं पुरुषो रिषत् । यस्मै परि ब्रवीमि. Dc नद्यमारो नद्यारिषो (corrected to नद्यायुषः ।) नद्यायं पुरुषो रिषत् । यस्मै परि ब्रवीमि. Cs नद्यमारो नद्यारिषो ( corrected to नद्यायूषो) नद्यायं पुरुषो रिषत् । यस्मै परि ब्रवीमि. The accents on नद्यमारो, नद्यायं and परिब्रवीमि are ours. ३ A B̊ C D R̊ S Cs do not end the pâda here, but K K̊ and Dc ( the latter subsequently ) do. The *Sarvânukramaṇikâ* considers the mantra as tryavasâna. ४ P P̊ J नद्य । मारः । नद्य । आयुषः । नद्य । अयम् । पुरुषः । ऋषत् ॥ यस्मै । परि । ब्रवीमि ।. We with the *Saṃhitâ*.

1 S′ लक्ष्यते. 2 S′ नदीयाः for नदनीयाः.

नद्य कुष्ठाख्यौषधे तव नामग्रहणाभावे अयं व्याधितः पुरुषो रिषत् हिंसितो भवेत्। अतः व्याधितरक्षक इति समुदितं नामेति मन्तव्यम्। एवं नामत्रयेण अभिधीयमान कुष्ठाख्यौषधे त्वा त्वां यस्मै रोगार्ताय पुरुषाय परिब्रवीमि मन्त्रत्वेन तव नामानि उच्चारयामि। कस्मिन् काल इत्युच्यते। सायंप्रातश्च उभयसंध्ययोः। अथो अपि च दिवा द्योतमाने। मध्याह्ने इत्यर्थः। औषधप्रयोगे उक्तकालत्रयस्य प्राशस्त्यात्। यद्वा दिवा कृत्स्नेप्यहनि उभयोः संध्ययोश्च॥ उक्तमेवार्थं नामव्यपदेशेन[1] आदरार्थं पुनराह नद्यायं[2] पुरुषो रिषत् इति। यद्वा हे नद्य हे औषध[3] यस्मै द्वेष्याय त्वां परि ब्रवीमि अयं द्वेष्यः पुरुषो रिषत् नश्यतु इति व्याख्येयम्॥

तृतीया॥

जीवला नाम ते माता जीवन्तो नाम ते पिता। नद्यायं पुरुषो रिषत्।
यस्मै परिब्रवीमि त्वा सायंप्रातरथो दिवा॥ ३॥

जीवला। नाम। ते। माता। जीवन्तः। नाम। ते। पिता॥ नद्य। अयम्। पुरुषः। रिषत्।
यस्मै। परिऽब्रवीमि। त्वा। सायम्ऽप्रातः। अथो इति। दिवा॥ ३॥

हे कुष्ठाख्यौषधे ते तव माता जीवला नाम जीवयतीति जीवला। मत्वर्थीयो लः। जीवयित्रीत्यर्थः। एतन्नामिका। एवं ते तव पिता जनकोपि जीवन्तः जीवयतीति जीवन्तः। वसन्त इतिवत्। एतत्संज्ञकः। यतस्तव पितरौ रोगादिपरिहारेण जीवप्रदौ अतस्त्वमपि तादृङ्महिमोपेत इति भावः॥ नद्यायं[4] पुरुष इत्यादि पूर्ववत्॥

---

१ A B^h C D K K^m R S^m V यस्मै परि ब्रवीमि. See note २ on mantra २.

---

1 S′ नामव्यपदेशेनोक्तमादरार्थं. 2 Sâyaṇa's text reads the words नद्यायं पुरुषो रिषत् again after सायंप्रातरथो दिवा, and it is to this repetition that Sâyaṇa refers in the present passage. All our MSS. and Vaidikas omit the second नद्यायं पुरुषो रिषत्, both in this and in the two following mantras. 3 S′ ओषध. 4 See note 2.

चतुर्थी ॥

उत्तमो अस्योषधीनामनड्वान् जगतामिव व्याघ्रः श्वपदामिव । नद्या॑यं पुरुषो रिषत् ।
यस्मै परिब्रवीमि त्वा सायंप्रातरथो दिवा ॥ ४ ॥

उत्ऽतमः । असि । ओषधीनाम् । अनड्वान् । जगताम्ऽइव । व्याघ्रः । श्वपदाम्ऽइव ॥ नद्य[1] । अयम् । पुरुषः । रिषत्[2] ।
यस्मै । परिऽब्रवीमि[3] । त्वा । सायम्ऽप्रातः । अथो इति । दिवा ॥ ४ ॥

हे कुष्ठ त्वम् ओषधीनाम् इतरासां व्याधिनिर्हन्त्रीणां मध्ये[1] उत्तमः उत्कृष्टतमोसि । जन्मादिना उत्तमत्वम् उत्तरत्र वर्ण्यते । तत्र दृष्टान्तः । अनड्वान् अनोवहनसमर्थः अनड्वान् । स यथा जगताम् गच्छतां प्राणिनां मध्ये उत्तमः । सर्वप्राण्युपभोगसाधनत्वात् । स यथा अत्यन्तं लोकस्य उपकारकः एवं त्वमपीत्यर्थः । एवं शरीरपीडनेनापि उपकारकत्वेन उत्तमत्वम् अनडुद्दृष्टान्तेन[2] अभिधाय अतिक्रूरवीर्यवत्त्वेनापि उत्तमत्वं व्याघ्रदृष्टान्तेन उपपादयति व्याघ्रः श्वपदामिवेति । व्यादाय हन्तीति व्याघ्रः श्वापदविशेषः । स च श्वपदाम् इतरेषां वृकादीनां मध्ये यथा क्रौर्येण उत्तमः एवं त्वमपि वीर्येण उत्तम इत्यर्थः । नद्यायम्[3] इत्यादि पूर्ववद् व्याख्येयम् ॥

पञ्चमी ॥

त्रिः शाम्बुभ्यो अङ्गिरेभ्यस्त्रिरादित्येभ्यस्परि[4] ।
त्रिर्जातो विश्वदेवेभ्यः ।
स कुष्ठो विश्वभेषजः । साकं सोमेन तिष्ठति ।
तक्मानं सर्वं नाशय सर्वाश्च यातुधान्यः ॥ ५ ॥

---

१ P P$^2$ J नद्य । २ P P$^2$ ऋषत् । ३ P P$^2$ J परि । ब्रवीमि । ४ R अंगिरेभ्य° corrected to अंगिरेयेभ्य° . V अङ्गिरेयेभ्य° and अङ्गिरेभ्य° . A अंगिरयेभ्य° . B$^h$ C D K$^m$ S$^m$ Dc अंगिरेयेभ्य° . We with R V Cs P P$^2$ J.

1 S′ has another त्वं after मध्ये. 2 S′ °दृष्टांतत्वेन. 3 See note 2 on mantra २ at page ४३५.

त्रिः । शाम्बुऽभ्यः । अङ्गिरेभ्यः । त्रिः । आदित्येभ्यः । परि ।
त्रिः । जातः । विश्वऽदेवेभ्यः ।
सः । कुष्ठः । विश्वऽभेषजः ॥ साकम् । सोमेन । तिष्ठति ।
तक्मानम् । सर्वम् । नाशय । सर्वाः । च । यातुऽधान्यः ॥ ५ ॥

यः कुष्ठाख्यौषधिः अङ्गिरेयेभ्यः[1] अङ्गिरसाम् अपत्यभूतेभ्यः शाम्बुभ्यः[2] एतन्नामकेभ्यो महर्षिभ्यः त्रिर्जातः उत्पन्नः त्रयाणां लोकानाम् उपकाराय त्रिरुत्पादितः । अथ वा ब्राह्मणक्षत्रियवैश्यजातित्रयात्मना त्रिर्जातः । अङ्गिरसां भूमिस्थानत्वात्[3] तेभ्यः[3] सकाशात् पृथिव्यां त्रिर्जात इत्युच्यते । तथा आदित्येभ्यस्परि । परीति पञ्चम्यर्थानुवादी । दिवि आदित्येभ्यस्त्रिर्जातः । त्रिर्जननप्रयोजनं पूर्ववद् द्रष्टव्यम् । एवं विश्वदेवेभ्यः मध्यस्थानेभ्यो देवगणेभ्यस्त्रिर्जातः । स तादृशः कुष्ठाख्यौषधिविशेषो[4] विश्वभेषजः विश्वेषां सर्वेषां रोगाणां भैषज्यरूपः सर्वरोगशमनवीर्योपेतत्वात् । स पुरा कुत्र तिष्ठतीत्यत्राह साकं सोमेन तिष्ठतीति । सोमेन सह अवस्थानाभिधानं तत्समानवीर्यत्वद्योतनार्थम् ॥ अथ प्रत्यक्षीकृत्य उच्यते तक्मानम् इति । सर्वम् नानाभेदभिन्नं तक्मानम् रोगं नाशय तथा सर्वाश्च यातुधान्यः यातुधानीर्नाशय ॥

षष्ठी ॥

अश्वत्थो देवसदनस्तृतीयस्यामितो दिवि ।
तत्रामृतस्य चक्षणं ततः कुष्ठो अजायत ।
स कुष्ठो विश्वभेषजः साकं सोमेन तिष्ठति ।
तक्मानं सर्वं नाशय सर्वाश्च यातुधान्यः ॥ ६ ॥

अश्वत्थः । देवऽसदनः । तृतीयस्याम् । इतः । दिवि ।
तत्र । अमृतस्य । चक्षणम् । ततः । कुष्ठः । अजायत ।

१ A B[h] C D R S[m] Cs ततः कुष्ठो अ°. P J कुष्ठः ।. Dc ततः कुष्ठो अ° changed to ततः कुष्ठो अ°. We with Dc P[2].

1 S′ अंगिरयेभ्यः. Sâyaṇa's text, however, has अंगिरेयेभ्यः. 2 S′ सांबुभ्यः. 3 S′ °स्वानत्वेचेभ्यः for °स्थानत्वात् तेभ्यः. 4 S′ कुष्टाख्यो°.

सः । कुष्ठः । विश्वऽभेषजः । साकम् । सोमेन । तिष्ठति ।
तक्मानम् । सर्वम् । नाशय । सर्वाः । च । यातुऽधान्यः ॥ ६ ॥

इतः अस्माद् भूलोकात् तृतीयस्यां दिवि तृतीये द्युलोके देवसदनः । देवाः सीदन्ति निवसन्ति अत्रेति देवसदनः । देवानाम् आवासस्थानभूतः अश्वत्थः यतोऽग्निरश्वात्मना तत्रावस्थितः अतोश्वत्थ इति नाम संपन्नम्[1] अस्येत्यश्वत्थस्तिष्ठति[1] । तत्र अश्वत्थे अमृतस्य अमरणधर्मकस्य सोमस्य चक्षणम्[2] प्रकाशनं[3] स्फुटीभावो विद्यते । अथ वा अश्वत्थशब्देन आदित्य उच्यते अमृतावस्थानश्रवणात् । "असौ वा आदित्यो देवमधु" इति श्रुतेः [छा॰ उ॰ ३. ६. ३] । ततोऽश्वत्थात् कुष्ठाख्यौषधिरजायत उत्पन्नोऽभूत् ॥ स कुष्ठ इत्यादि पूर्ववद् योज्यम् ॥

सप्तमी ॥

हिरण्ययी नौरचरद्धिरण्यबन्धना दिवि ।
तत्रामृतस्य चक्षणं ततः कुष्ठो अजायत ।
स कुष्ठो विश्वभेषजः साकं सोमेन तिष्ठति ।
तक्मानं सर्वं नाशय सर्वाश्च यातुधान्यः ॥ ७ ॥

हिरण्ययी । नौः । अचरत् । हिरण्यऽबन्धना । दिवि ।
तत्र । अमृतस्य । चक्षणम् । ततः । कुष्ठः । अजायत ।
सः । कुष्ठः । विश्वऽभेषजः । साकम् । सोमेन । तिष्ठति ।
तक्मानम् । सर्वम् । नाशय । सर्वाः । च । यातुऽधान्यः ॥ ७ ॥

दिवि द्युलोके हिरण्ययी हिरण्यनिर्मिता तथा हिरण्यबन्धना हिरण्यमयैः शङ्कुपाशादिभिर्बद्धा नौः अचरत् सर्वदा चरति । अस्तु । ततः कुष्ठाख्यस्यौषधस्य किम् आयातम् इति तत्राह तत्रामृतस्येति । अनेन अस्यापि अमृतत्वसाधनधर्मः[4] सहैव उक्तो भवति ॥

1 S′ संपन्नस्येश्वत्थतिष्ठति. 2 S′ व्यचक्षणं. 3 S′ प्रकाशन॰. 4 S′ ॰धर्मसहैव for ॰धर्मः सहैव.

अष्टमी ॥

यत्र नाव[1]प्रभ्रंशनं यत्र हिमवतः शिरः ।
तत्रामृतस्य चक्षणं ततः कुष्ठो अजायत ।
स कुष्ठो विश्वभेषजः साकं सोमेन तिष्ठति ।
तक्मानं सर्वं नाशय सर्वाश्च यातुधान्यः ॥ ८ ॥

यत्र । न । अव[2]ऽप्रभ्रंशनम् । यत्र । हिमऽवतः । शिरः ।
तत्र । अमृतस्य । चक्षणम् । ततः । कुष्ठः । अजायत ।
सः । कुष्ठः । विश्वऽभेषजः । साकम् । सोमेन । तिष्ठति ।
तक्मानम् । सर्वम् । नाशय । सर्वाः । च । यातुऽधान्यः ॥ ८ ॥

यत्र द्युलोके नावप्रभ्रंशनम् तत्रस्थानां सुकृतिनाम् अवाङ्मुखप्रभ्रंशो नास्ति । यत्र च हिमवतः एतन्नाम्नः पर्वतस्य शिरः । हिमवच्छिरःप्रदेश एव स्वर्गभूमिरिति प्रसिद्धिः । तत्रामृतस्येत्यादि पूर्ववत् ॥

नवमी ॥

यं त्वा वेद पूर्व इक्ष्वाको[3] यं वा त्वा कुष्ठ काम्यः ।
यं वा वसो[4] यमात्स्य[5]स्तेनासि विश्वभेषजः ॥ ९ ॥

यम् । त्वा । वेद[6] । पूर्वः । इक्ष्वाकः[3] । यम् । वा । त्वा । कुष्ठ । काम्यः[7] ।
यम् । वा । वसः[4] । यम् । आत्स्यः । तेन । असि । विश्वऽभेषजः ॥ ९ ॥

हे कुष्ठाख्यौषधे यस्माद् यं प्रसिद्धं त्वा त्वां पूर्वः पुरातन इक्ष्वाकू[1] राजा वेद सर्वव्याधिहन्तायम् इति ज्ञातवान् । यस्माद् यं वा यं च त्वा त्वाम् हे कुष्ठ काम्यः कामपुत्रो वेद सर्वौषधिरूप इति ज्ञातवान् ।

१ D नावः. We with A $\overset{h}{\mathrm{B}}$ C K $\overset{m}{\mathrm{K}}$ R $\overset{m}{\mathrm{S}}$ Dc Cs. २ P $\overset{2}{\mathrm{P}}$ J अव । प्रऽ॰. We with Sâyaṇa. ३ $\overset{m}{\mathrm{K}}$ R $\overset{m}{\mathrm{S}}$ V Dc Cs इष्वा॰ (changed from इक्ष्वा॰ in $\overset{m}{\mathrm{S}}$). P $\overset{2}{\mathrm{P}}$ इष्वाकः ।. We with A $\overset{h}{\mathrm{B}}$ C D J. ४ A $\overset{h}{\mathrm{B}}$ C R $\overset{m}{\mathrm{S}}$ वसो. Dc वसो changed to वासो. D K $\overset{m}{\mathrm{K}}$ V Cs वासो. P $\overset{2}{\mathrm{P}}$ वासः ।. J वसः । changed from वासः ।. ५ R Cs यमाछ॰. ६ P J वेद ।. We with $\overset{2}{\mathrm{P}}$. ७ P काम्याः ।. We with $\overset{2}{\mathrm{P}}$ J.

1 Sâyaṇa's text: इक्ष्वाको यं वा &c.

यस्माद् यं यमास्यः यमस्य आस्यमिव आस्यं यस्य स तादृशो [वसः][1] एतन्नामा देवो वेद । तेन कारणेन त्वं विश्वभेषजोसि विश्वव्याधिनिर्मोचको भवसि सकलभेषजात्मको वासि ॥

दशमी ॥

शीर्षलोकं तृतीयकं सदन्दिर्यश्च हायनः ।
तक्मानं विश्वधावीर्याधराञ्चं परा सुव ॥ १० ॥
शीर्षऽलोकम् । तृतीयकम् । सदम्ऽदिः । यः । च । हायनः ।
तक्मानम् । विश्वधाऽवीर्य । अधराञ्चम् । परा । सुव ॥ १० ॥

हे कुष्ठ तृतीयकम् भूलोकापेक्षया तृतीयं लोकं द्युसंज्ञकं तव शीर्षं शिर आहुः । द्युलोके प्रथमम् उत्पन्नत्वाद् भूमिष्ठस्यापि तृतीयलोकपर्यन्तव्याप्तेश्च । यश्च हायनः कालस्तवावस्थानावलम्बनः । स कीदृशः । सदन्दिः । सदम् इत्यव्ययं सदेत्यस्यार्थे । सदा रोगाणां खण्डयिता । तादृङ्महिमोपेतस्त्वं विश्वधावीर्यम् विश्वतो व्याप्तसामर्थ्य[2] तक्मानम् रोगम् अधराञ्चम् अवागञ्चनं यथा भवति तथा परा सुव निकृष्टं प्रेरय । नाशयेत्यर्थः ॥

[इति] पञ्चमेनुवाके षष्ठं सूक्तम् ॥

"यन्मे छिद्रम्" इति सप्तमं सूक्तम् । तस्य[3] [पवित्रनाशनिमित्तप्रायश्चित्ते आज्यहोमे विनियोगः । तद् उक्तं परिशिष्टे समुच्चयप्रायश्चित्तप्रकरणे ।

"अथ पवित्रे प्रणश्यति कर्ममध्यात् प्रमादतः ।
"अन्यं छित्त्वानुमन्त्रयेत कर्मशेषम् उपक्रमेत् ।

"* * * * यन्मे छिद्रम् १९. ४०. १ पुनर्मैत्विन्द्रियम् ७. ६९ मा
"न आपो मेधाम् १९. ४०. २ मा नो मेधाम् १९. ४०. ३ मा नः पी-

१ A B[h] सदंदी°. R S[m] Cs सदंडि°. We with C D K K[m] V Dc Cs. २ A C D S[m] विश्वधां. We with B[h] K K[m] R V. Sâyaṇa's text: विश्वधावीर्याधरांचं. ३ P[2] तृतीयकम् ।.

1 So Sâyaṇa's text which is: यं वा वसो य°. 2 S′ व्याप्तं. 3 S′ has a blank space for about ten letters after तस्य. May it be that Sâyaṇa meant to insert the necessary preface at a subsequent revision but forgot to do so?

"परिदश्विना १९. ४०. ४ इति संनतिभिराज्यं जुहुयाद् व्याहृतिभिश्च गां "च कर्त्रे दद्यात् सा तत्र प्रायश्चित्तिः" इति । प॰ ३७. ४ ॥

तथा उपयामस्य हस्तात् पतने आज्यहोमे अस्य विनियोगः । तद् उक्तम् "अथ यस्योपयामो वा पतेद्धस्तात् स यन्मे उपयाम इत्यादधीत" इत्युपक्रम्य परिशिष्टे । "यन्मे छिद्रम् १९. ४० यदस्मृति ७. १११ इति जुहुयात्" इति । प॰ ३७. १४] ॥

तत्र प्रथमा ॥

यन्मे छिद्रं मनसो यच्च वाचः सरस्वती[2] मन्युमन्तं जगाम ।
विश्वैस्तद् देवैः सह संविदानः सं दधातु बृहस्पतिः ॥ १ ॥

यत् । मे । छिद्रम् । मनसः । यत् । च । वाचः । सरस्वती । मन्युऽमन्तम् । जगाम ।

विश्वैः । तत् । देवैः । सह । सम्ऽविदानः । सम् । दधातु । बृहस्पतिः ॥१॥

मे मम मनसः यज्ञदानध्यानादिलक्षणस्य मनोव्यापारस्य यच्छिद्रम् यश्छेदोस्ति तथा वाचः[1] मन्त्रादिविषयाया यच्छिद्रम् अस्ति । तत् सं द-धात्विति उत्तरत्र संबन्धः । या च मम सरस्वती सरणवती वाग् मन्यु-मन्तम् अस्मद्विषयक्रोधोपेतं द्वेष्यं जगाम अगच्छद् इति यत् । यद्वा म-न्युमन्तम् मन्युः क्रोधो मानसिको धर्मः तद्वन्तम् । मां विहायेति शेषः । अन्यत्र जगाम गतेति । तस्माद् मनसो वाचश्च च्छिद्रम् अवश्यं संधा[2]-तव्यम् इत्यर्थः । [तत्] उक्तलक्षणं सर्वं छिद्रं बृहस्पतिः बृहतो मन्त्रस-मूहस्य वेदस्य पतिः पालयिता अभिमानी एतन्नामको देवः विश्वैः इतरै-रिन्द्राद्यैर्देवैः सह संविदानः ऐकमत्यं प्राप्तः सन् सं दधातु संधानं क-रोतु ॥ केवलं बृहस्पतिना छिद्रसंधाने क्रियमाणे इतरेषां देवानाम् अना[3]नुकूल्ये सति संधानस्य अघटनात् तैः सहितस्य ऐकमत्यम् आ-शास्यते[4] ॥

---

१ A C D K̄ S̄ V Dc सरस्वतीं. P P̄ J सरस्वतीम् ।. We with B̄ K R Cs. २ A B̄ D K K̄ R V Cs जगाम. Dc जगाम changed to जगाम. P P̄ J जगाम ।. We with S̄.

1 S′ वचः. 2 S′ समाधातव्यम्. 3 S′ अननुकूल्ये. 4 S′ आभिशायीस्यते.

द्वितीया ॥

मा न[१] आपो मेधां मा ब्रह्म प्र मथिष्टन[२] ।
सुष्यदा[*३] यूयं स्यन्दध्वमुपहूतोहं[*४] सुमेधा वर्चस्वी ॥ २ ॥

मा । नः । आपः । मेधाम् । मा । ब्रह्म । प्र । मथिष्टन[२] ।
सुऽस्यदाः[३*] । यूयम् । स्यन्दध्वम्[*४] । उपऽहूतः । अहम् । सुऽमेधाः[*५] । वर्चस्वी ॥२॥

हे[*] आपो देवताः यूयं नः अस्माकं मेधाम् । अधीतस्य वेदादेर्धारयित्री बुद्धिर्मेधा । तां मा प्र मथिष्ट[1*] प्रमथनं भ्रंशं मा कुरुत । तथा नः[*] ब्रह्म । [ब्रह्म] वेदः । अधीतं[2] वेदं मा प्र मथिष्ट[*3] । किं च मम संबन्धि यद्यत् कर्म शुष्यत्[4*] शोषं प्राप्नोति तत्तद् अभिलक्ष्य यूयम् आ[*] स्यन्दध्वम् सर्वतः प्रवहत । आर्द्रं कुरुतेत्यर्थः । उपहूतः युष्माभिरनुज्ञातः अनुगृहीतः अहं सुमेधाः । भूयासम् इति शेषः । मेधां मा प्र मथिष्टेति प्रार्थितत्वात् सुमेधा भूयासम् इति आशास्यते । ब्रह्मणो वेदस्य प्रमथनाभावस्यापि प्रार्थनाद् वर्चस्वी ब्राह्मेण वर्चसा युक्तो भूयासम् इति प्रार्थ्यते ॥

तृतीया ॥

मा नो मेधां मा नो दीक्षां मा नो हिंसिष्टं यत् तपः ।
शिवा नः[६] शं[*] सन्त्वायुषे शिवा भवन्तु मातरः ॥ ३ ॥

मा । नः । मेधाम् । मा । नः । दीक्षाम् । मा । नः । हिंसिष्टम्[७] । यत् । तपः ।

---

१ So we with A B[h] D K K[m] R S[m] V Dc Cs P P[2] J. २ A B[h] V मथिष्ट नः. P P[2] J मथिष्टन ।. We with C D R S[m] Dc Cs. ३ A B[h] D K K[m] R S[m] Dc Cs शुष्यदा. P P[2] J शुष्यदा ।. The emendation is ours, suggested by the accent of all our MSS. and by स्यन्दध्वम्. ४ A B[h] C स्यन्नध्व°. R S[m] स्यनध्व°. D Cs स्यनध्व°. Dc स्यंचध° changed to स्यंदध्व°. P P[2] J स्यन्नध्वम् ।. We with Sâyaṇa. ५ P P[2] J °मेधा ।. ६ A B[h] D K K[m] R S[m] V Dc Cs नः संस्वंत आयुषे. C नः सस्वंत आयुषे (without accents). P P[2] J सम्ऽस्वंतः ।. Sâyaṇa's text: शंसंत्वायुषे. ७ J हिंसिष्ठम् ।. We with P P[2].

---

1 S′ मथिष्ठा. Sâyaṇa's text is: मा ब्रह्म प्र मथिष्ट नः. 2 S′ अधीतवेदं for अधीतं वेदं. 3 S′ मथिष्ठ. 4 S′ शुछुष्यत्. Sâyaṇa's text: शुष्यदायुर्यस्यंनदध्वमुप°.

शिवाः । नः । शम्* । सन्तु । आयुषे । शिवाः । भवन्तु । मातरः ॥ ३ ॥

अत्र हिंसिष्टम् इति द्विवचनाद् द्यावापृथिव्यौ [संबोध्ये ।] उत्तरमन्त्रेऽ[पि अश्विनोः संबुद्धिः तयोश्च द्यावापृथिव्यात्मकता मता । हे द्यावापृथिव्यौ नो मेधाम् अधीतधारणबुद्धिं मा हिंसिष्टम् मा नाशयतम् । तथा नो दीक्षाम् नवनीताभ्यङ्गमुष्टीकरणवाग्यमनदण्डमेखलादिधारणसाध्यां] च मा हिंसिष्टम् । एवं नः अस्माकं यत् तपः पयोव्रतादिरूपं क्लेशसहनात्मकं तपोऽस्ति तद् मा हिंसिष्टम् । तथा आपो देव्यः शिवाः मङ्गलाः सुखकारिण्यः सत्यः नः अस्माकम् आयुषे आयुरभिवृद्धये शंसन्तु[1]* साधीयान् अयम् इति स्तुवन्तु । तथा मातरः मातृवद्धितकारिण्यो जगन्निर्मात्र्यो वा आपः शिवा भवन्तु ॥

चतुर्थी ॥

या[2] नः पीपरदश्विना ज्योतिष्मती तमस्तिरः ।
तामस्मे रासतामिषम् ॥ ४ ॥

या । नः । पीपरत् । अश्विना । ज्योतिष्मती । तमः । तिरः ।
ताम् । अस्मे । रासताम् । इषम् ॥ ४ ॥

हे* अश्विना अश्विनौ नः अस्मान् तमः सर्वस्यावरकं सर्वव्यवहारप्र-

---

१ P J शिवा ।. $\overset{2}{\text{P}}$ शिवा । corrected to शिवाः ।. २ A D K $\overset{m}{\text{K}}$ R Dc मा नः पिपरिद्श्विना ज्योतिष्मती तमस्तिरः । तामस्मै रासतामिषुम् (R °सिता°) ।. $\overset{h}{\text{B}}$ reads like A D K $\overset{m}{\text{K}}$ Dc except that it has तामस्मे for तामस्मै, a change doubtless borrowed from the *Ṛigveda*. C मा नः पिपरिदश्विना &c । तामस्मै रासतामिषुम्, i. e. without accents. $\overset{m}{\text{S}}$ मा नः पिपरिदश्विना &c । तामस्मै रासितामिषुम्. V मा नः पीपरदश्विना &c । तामस्मै रासतामिषुम्, the change to पीपरत् being doubtless borrowed from Sâyaṇa's text. Cs मा नः पिपरिदश्विना ज्योतिष्मती तमस्तिरः । तामस्मै रासिता(corrected to रासता° )मिषुं. P रासताम् ।. $\overset{2}{\text{P}}$ J रासताम् ।. We reject the corruptions मा, पिपरित् and अस्मै (conf. *Ṛigveda* 1. 46. 6) though they are doubtless ancient, Sâyaṇa himself recognising the chief of them (मा). Sâyaṇa's text: मा नः पीपरदश्विना ज्योतिष्मती तमस्तिरः । तामस्मे रासातामिषम्. We take या from the *Ṛigveda* reading and from the presence of the accent on पीपरत् and of the pronoun ताम्; पीपरत् from V, अश्विना from $\overset{m}{\text{S}}$, and इषम् from the *Ṛigveda*.

---

1 S′ संतु for शंसन्तु.

तिबन्धकोऽन्धकारः मा* पीपरत् पारं मा गमयतु । किं तु ज्योतिष्मती सकलव्यवहारानुकूलप्रकाशोपेता रात्रिः तमः तिरस्करोतु । ताम् तादृशीम् इषम् सर्वैरिष्यमाणां ताम् उक्तलक्षणां रात्रिम् अस्मे अस्माकं रासा*थाम् प्रयच्छतम् । यद्वा इट्शब्देन सर्वैरिष्यमाणम् अन्नम् अभिधीयते । सैव ज्योतिष्मती प्रकाशवती अन्नवतो लोके प्रकाशदर्शनात् । यद्वा तमो नाम दारिद्र्यम् । तिरः सर्वस्य तिरोधायकम् । तमः मा पीपरत् ज्योतिष्मत्येव इट् पीपरत् । [तां] तादृशीम् इषं रासा*थाम् इति व्याख्येयम् । शाखान्तरे तु "या नः पीपरत्" इति आम्नायते [ऋ° १. ४६. ६] ॥

इति पञ्चमेनुवाके सप्तमं सूक्तम् ॥

"भद्रमिच्छन्तः" इत्येतद् अष्टमं सूक्तम् एकर्चम् । तत्पाठस्तु

भद्रमिच्छन्त ऋषयः स्वर्विदस्तपो दीक्षामुपनिषेदुरग्रे ।
ततो राष्ट्रं बलमोजश्च जातं तदस्मै देवा उपसंनमन्तु ॥ १ ॥

भद्रम् । इच्छन्तः । ऋषयः । स्वःऽविदः । तपः । दीक्षाम् । उपऽनिसेदुः । अग्रे । ततः । राष्ट्रम् । बलम् । ओजः । च । जातम् । तत् । अस्मै । देवाः । उपऽसंनमन्तु ॥ १ ॥

अग्रे सृष्ट्यादौ पूर्वम् ऋषयः अतीन्द्रियार्थद्रष्टारः । ऋषिर्दर्शनात् स्तोमान् ददर्शेत्यौपमन्यव इति निरुक्तम् [नि° २. ११] । ते भद्रम् कल्याणं क्षेमम् इच्छन्तः स्वर्विदः स्वर्गं लभमानाः तत्साधनत्वेन तपः पयोव्रतादिलक्षणं दीक्षाम् नवनीताभ्यङ्गमुष्टीकरणवाग्यमनदण्डमेखलादिधारण[1]साध्यां च उपनिषेदुः प्राप्ताः । ततः तत्सामर्थ्याद् राष्ट्रम् राज्यं बलम् [सामर्थ्यम् ओजश्च जातम् निष्पन्नम् । तत् राष्ट्रादिकं देवा अस्मै पुरुषाय उपसंन]म[2]न्तु संयोजयन्तु ॥

इति पञ्चमेनुवाके अष्टमं सूक्तम् ॥

१ B दीक्षामुप°. We with A C D K K R S V Dc Cs P P J. २ A B R V Cs उपसंन°. We with D K S Dc P P J.

1 S' °धारणं°. 2 S' शमंत for °मन्तु.

"ब्रह्म होता" इति नवमं सूक्तम्॥

[तत्र प्रथमा॥]

ब्रह्म होता ब्रह्म यज्ञा ब्रह्मणा स्वरवो मिताः।
अध्वर्युर्ब्रह्मणो जातो ब्रह्मणोऽन्तर्हितं हविः॥ १॥

ब्रह्म। होता। ब्रह्म। यज्ञाः। ब्रह्मणा। स्वरवः। मिताः।
अध्वर्युः। ब्रह्मणः। जातः। ब्रह्मणः। अन्तःऽहितम्। हविः॥ १॥

ब्रह्म जगदुपादानकारणं तत्त्वम्। तदेव यज्ञाङ्गभूतहौत्रकर्तृत्वोपाधिना होता इत्युच्यते। कृत्स्नस्य कार्यकारणप्रपञ्चस्य ब्रह्मात्मकत्वात् "ब्रह्मैवेदं सर्वम्" [मु० २. २. ११] "तत् सृष्ट्वा तदेवानुप्राविशत्" इति [तै० आ० ८. ६] स्वसृष्टसकलपदार्थानुप्रवेशश्रुतेश्च। "त्वं स्त्री त्वं पुमान् असि त्वं कुमार उत वा कुमारी" इति [श्वे० ४. ३] श्रुतेर्ब्रह्मव्यतिरिक्तस्य कस्यचिदभावाद् ब्रह्मणो होत्रादिरूपत्वम्। तथा यज्ञाः ज्योतिष्टोमादयोपि ब्रह्मैव। "तस्माद् ऋचः साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च" इति मुण्डकश्रुतेः [मु० २. १. ६] ब्रह्मैव यज्ञा इत्युच्यन्ते। एवं ब्रह्मणैव स्वर्गामिता[2] स्वराणां क्रुष्टादीनां[3] सप्तानाम् उदात्तादीनां च चतुर्णां गामिता यज्ञानुप्रवेष्टृता[4]। उद्गातृत्वादिभाव इत्यर्थः। यद्वा स्वर्गं गन्तृता। ज्योतिष्टोमाद्यनुष्ठातृभ्य इति शेषः। अध्वर्युरपि ब्रह्मण एव जातः उत्पन्नः। प्रागुक्तनीत्या ब्रह्मणः सकाशाद् उत्पत्तिरवगन्तव्या। तथा

१ A B D R S स्वरवामिता. C सरवामिता. K K V Dc स्वरवामिता. Cs सरवामिता. P P J स्वः। अवामिता।. Sâyaṇa's text: स्वरगामिता. Our emendation is one that is suggested by the accent in A B C D R S, a correction which Rw have already very rightly conjectured. Sâyaṇa's reading we do not adopt, first because it is inconsistent with our traditional accent (his accent must be ब्रह्मणा स्वरगामिता), and secondly because a word like स्वरगामिता (apart from the question whether स्वरगामी can mean उद्गाता) has the look of being very un-Vedic. २ A B C R S Cs अध्वर्युब्रह्मणो. We with D K V Dc. ३ A B C D K K R S V Dc Cs °हिते for °हितं. P P J अन्तःऽहिते।. We with Sâyaṇa.

1 S' °हौकर्तृपोधिना for °हौत्रकर्तृत्वोपाधिना. 2 So Sâyaṇa's text also. 3 S' क्रुष्टादीनां. 4 S' °प्रवेष्टता.

हविः यज्ञसाधनभूतं चरुपुरोडाशाज्यसोमादिलक्षणं ब्रह्मणि[1] अन्तर्हितम् इ-न्द्राद्युद्देशेन दत्तमपि ब्रह्मण्येवावतिष्ठते । "ब्रह्मार्पणं ब्रह्म हविः" इत्या-दिस्मृतेः [भ॰गी॰४.२४] । "ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचः । ब्रह्म यज्ञानां हविषाम् आज्यस्य" इति [तै॰ब्रा॰३.७.११.१] मन्त्रवर्णाद् ब्रह्मणि हविषाम् अवस्थानम् ॥ अथ वा अत्र ब्रह्मशब्देन "अथर्वाङ्गि-रोविदं ब्रह्माणं वृणीत" इति [गो॰ब्रा॰२.२४] श्रुतेः ब्रह्माख्य ऋत्विग् वाभिमतः । तस्य सर्वानुज्ञातृत्वात् होत्रादिरूपत्वेन स्तुतिः ॥

द्वितीया ॥

ब्रह्म स्रुचो[1] घृतवतीर्ब्रह्मणा[2] वेदिरुद्धिता[3] ।
ब्रह्म यज्ञस्य तत्त्वं च ऋत्विजो ये हविष्कृतः[4] । शमिताय[5] स्वाहा ॥ २ ॥

ब्रह्म । स्रुचः[1] । घृतऽवतीः । ब्रह्मणा । वेदिः । उद्धिता[3] ।
ब्रह्म । यज्ञस्य । तत्त्वम् । च । ऋत्विजः । ये । हविःऽकृतः[4] ॥ शमिताय[5] ।
स्वाहा ॥ २ ॥

स्रुचः होमसाधनभूता जुहूपभृदादयोपि ब्रह्म । ताश्च घृतवतीः घृत-वत्यो होमार्थेन घृतेन पूर्णाः । ब्रह्मणैव वेदिः हविरासादनसाधना ब्र-ह्मणैव उद्धृता[2] उद्धननखनननिर्माणैः[3] संपादिता । यज्ञस्य ज्योतिष्टोमा-द्यात्मकस्य यागस्य तत्त्वम् पारमार्थिकं रूपं च ब्रह्मैव । अत्र तत्त्वं चेति विशेषितत्वाद् अत्रोक्तानां होत्रादीनां पारमार्थिकं रूपं ब्रह्मैव तत्रैव परि-कल्पितत्वात् कृत्स्नप्रपञ्चस्य । यथा मृदुपादानभूताः शरावादयो मृदेव एवं ब्रह्मोपादानभूतास्तत्त्वतो ब्रह्मैवेत्यभिप्रायः । ये च हविष्कृतः हवि-ष्कर्तार ऋत्विजः उक्तव्यतिरिक्ताः प्रतिप्रस्थात्राद्याः तेपि ब्रह्मैव ॥

---

१ A B̊ C D R S̊ Cs ब्रह्म स्रुचो. Dc ब्रह्म स्रुचो changed to ब्रह्म स्रुचो. P J स्रुचः ।. We with K K̊ V Dc P̊. २ B̊ R S̊ Cs घृतवती ब्रह्म°. We with A C D K K̊ V Dc P P̊ J उत्ऽहिता ।. ३ V °रुद्धिता and °रुद्धृता. Sâyaṇa's text: °रुद्धृता. We with A B̊ C D K K̊ R S̊ Dc Cs P P̊ J. ४ B̊ C हविःकृतः. R S̊ Cs हविष्कृतः. D हविष्कृतः changed to हविष्कृतः. P J हविःऽकृतः ।. We with A D K K̊ V P̊. ५ V शमिताय and संमिताय. Sâyaṇa संमिताय. We with A B̊ C D K K̊ R S̊ P P̊ J.

---

1 Sâyaṇa's text: ब्रह्मणोंतर्हितं. 2 S' ब्रह्मण्यंवा. 3 S' डयिननन° for उद्धनन° which is conjectural.

संमिताय उक्तप्रकारेण होत्राद्यात्मना संमिताय । अभेदम् आपन्नाय ब्रह्मण इत्यर्थः । तस्मै स्वाहा स्वाहुतम् अस्तु । अथ वा अयम् उक्तब्रह्महोतेत्यादिमन्त्रद्वयशेषो द्रष्टव्यः ॥

तृतीया ॥

अंहोमुचे प्र भरे मनीषामा सुत्राव्णे सुमतिमावृणानः ।

इममिन्द्र प्रति हव्यं गृभाय सत्याः सन्तु यजमानस्य कामाः ॥ ३ ॥

अंहःऽमुचे । प्र । भरे । मनीषाम् । आ । सुऽत्राव्ने । सुऽमतिम् । आऽवृणानः ।

इमम् । इन्द्र । प्रति । हव्यम् । गृभाय । सत्याः । सन्तु । यजमानस्य । कामाः ॥ ३ ॥

अहम् अंहोमुचे अंहसां पापानां मोचयित्रे सुत्राम्णे सुतरां त्रात्रे इन्द्राय । प्र भर इति संबन्धः । सुमतिम् शोभनां स्तुतिं मयि शोभनमतिं वा इन्द्रस्य गृणानः उच्चारयन् कुर्वन् अहं मनीषाम् मनस ईशित्रीं स्तुतिं [प्र] भरे संपादयामि । हे इन्द्र त्वम् इमम् इदम् इदानीं हव्यां हव्यानि प्रति गृभाय स्वीकुरु । यजमानस्य कामाः आयुरादिविषयाः सत्याः अवितथाः सन्तु भवन्तु ॥

चतुर्थी ॥

अंहोमुचं वृषभं यज्ञियानां विराजन्तं प्रथममध्वराणाम् ।

अपां नपातमश्विना हुवे धिय इन्द्रियेण त इन्द्रियं दत्तमोजः ॥ ४ ॥

अंहःऽमुचम् । वृषभम् । यज्ञियानाम् । विऽराजन्तम् । प्रथमम् । अध्वराणाम् ।

१ B̊ D K K̊ R S̊ V Dc सुमतिं मा. C सुमतिं मा. P P̊ J सुऽमतिम् । मा । वृणानः ।. We with A Cs. २ P̊ °मुचम् ।. We with P J. ३ V हुवे धिय इन्द्रियेण त इन्द्रियं धत्त(and दत्त)मोजः. C D S̊ हुवे. P̊ हुवे ।. Dc हुवे changed to हुवे. We with A B̊ K K̊ R Cs P J.

1 Before this Sâyaṇa reads the text संमिताय स्वाहा ॥. He does not read it at the end of the mantra ब्रह्म स्रुचो &c. 2 S′ शोभनमतिवइमिंद्र for शोभनमतिं वा इन्द्रस्य. 3 Sâyaṇa's text is: सुमतिं गृणानः. 4 S′ शंसंपादयामि for संपादयामि.

अपाम् । नपातम् । अश्विना । हुवे । धियः । इन्द्रियेण । ते । इन्द्रियम् । दत्तम् । ओजः ॥ ४ ॥

यज्ञियानाम् यज्ञार्हाणां देवानां मध्ये वृषभम् श्रेष्ठम् । सर्वेषां देवानां स्वामित्वाद् यज्ञेषु इन्द्रेण विना सोमादिहविःसंबन्धाभावाच्च यज्ञियेषु वृषभत्वम् । "अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे" [तै० सं० ४.७.६.१] इत्यादिषु सर्वत्र इन्द्रस्य प्रतिदेवतम् अनुप्रवेशाद् "यत् सर्वेषाम् अर्धम् इन्द्रः प्रति तस्माद् इन्द्रो देवतानां भूयिष्ठभाक्तमः" इति श्रुतेः [तै० सं० ५.४.८.३] "माध्यंदिनं सवनं केवलं ते" [ऋ० ४.३५.७] इति मन्त्रवर्णाच्च इन्द्रस्य यज्ञियेषु सर्वत्रानुगतेर्वृषभत्वम् । अत एव अध्वराणाम् यज्ञानां मध्ये विराजन्तम् विशेषेण दीप्यमानं प्रथमम् मुख्यम् । अथ वा अध्वराणां प्रथमम् आदिभूतम् । तेषाम् इन्द्रार्थत्वात् । एवंमहानुभावम् इन्द्रं हुवे इति संबन्धः । अपि च अपां नपातम् उदकानां न पातयितारं स्रष्टारम् । अग्नौ हुतया आहुत्या वृष्ट्युत्पत्तेः "अग्नेरापः" इति श्रुतेश्च [तै० आ० ८.१] । अथ वा अपां नप्तारम् अद्भ्य ओषधयः [ओषधीभ्योऽग्निर्जायत इति प्रसिद्धम् । अग्निं तथा अश्विना अश्विनौ हुवे आह्वयामि । तावश्विनौ इन्द्रियेण इन्द्रसामर्थ्येन ते तव] धियम् प्रकृष्टां बुद्धिम् इन्द्रियम् दर्शनश्रवणादिसामर्थ्यम् ओजः बलं च धत्ताम्[1*] धारयतां प्रयच्छताम् ॥

इति पञ्चमेऽनुवाके नवमं सूक्तम् ॥

"यत्र ब्रह्मविदः" इति दशमं सूक्तम् ॥

तत्र प्रथमा ॥

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
अग्निर्मा तत्र नयत्वग्निर्मेधा[1] दधातु मे । अग्नये स्वाहा ॥ १ ॥

यत्र । ब्रह्मऽविदः । यान्ति । दीक्षया । तपसा । सह ।
अग्निः । मा । तत्र । नयतु । अग्निः । मेधाः । दधातु । मे ॥ अग्नये । स्वाहा ॥ १ ॥

१ A K K̆ᵐ V Dc °मेधां. P J मेधा ।. P̆² मेधाम् ।. We with B̆ʰ C D R S̆ᵐ Cs.

1 Sâyaṇa's text, however, has धत्तम्.

यत्र यस्मिन् स्थाने सुकृतफलभोगाश्रये ब्रह्मविदः सगुणब्रह्मस्वरूपं जानन्तः । अथ वा ब्रह्म परिवृढं कर्म तद्विदः तद्विषयज्ञानवन्तो महान्तो दीक्षया दण्डकृष्णाजिनमेखलादिधारणात्मिकया । "दण्डेन दीक्षयति" । "मेखलया दीक्षयति" [तै° सं° ६.१.३.५] "कृष्णाजिनेन दीक्षयति" [तै° सं° ६.१.३.२] इत्यादिश्रुतेः । तप[1]सा सह पयोव्रतादिनियमजन्येन सह यान्ति गच्छन्ति । उपलक्षणम् एतत् । दीक्षातपआदिधर्मोपेतेन अग्निष्टोमादिकर्मणेत्यर्थः । तत्र तत् स्थानम् अग्निर्देवः [मा] नयतु प्रापयतु ग[2]मयतु । तदर्थम् अग्निर्देव एव मे मह्यं मेधाः तद्विषयप्रज्ञा दधातु प्रयच्छतु ॥ अग्नये स्वाहा य एवं स्वर्गं गमयति यश्च मेधां प्रयच्छति तस्मा अग्नये स्वाहा इदं हविः स्वाहुतम् अस्तु ॥

द्वितीया ॥

यत्र॑ ब्रह्म॒विदो॒ यान्ति॑ दी॒क्षया॒ तप॑सा स॒ह ।

वा॒युर्मा॒ तत्र॑ नयतु वा॒युः प्रा॒णान् द॑धातु मे । वा॒यवे॒ स्वाहा॑ ॥ २ ॥

यत्र॑ । ब्रह्म॒ऽविदः॑ । यान्ति॑ । दी॒क्षया॑ । तप॑सा । स॒ह ।

वा॒युः । मा॒ । तत्र॑ । न॒य॒तु॒ । वा॒युः । प्रा॒णान् । द॒धा॒तु॒ । मे॒ ॥ वा॒यवे॑ । स्वाहा॑ ॥ २ ॥

पूर्वार्धर्चः पूर्ववद् व्याख्येयः । तृतीयपादे अग्निरित्यस्य स्थाने वायुरिति विशेषः । तादृशो वायुः मे मम प्राणान् दधातु मयि स्थापयतु । अत्र प्राणान् इति बहुवचनेन प्राणापानादयः पञ्च प्राणा ग्राह्याः । वायोः प्राणानां च बा[3]ह्याभ्यन्तरभेदमात्रेण भेदात् "वायुः प्राणो भूत्वा नासिके प्राविशत्" [ऐ° आ° २.४.२] इति श्रुतेः वायोः प्राणस्थापनप्रार्थना युक्ता ॥ वायवे स्वाहेति स्पष्टम् ॥

तृतीया ॥

यत्र॑ ब्रह्म॒विदो॒ यान्ति॑ दी॒क्षया॒ तप॑सा स॒ह ।

सूर्यो॑ मा॒ तत्र॑ नयतु॒ चक्षुः॒ सूर्यो॑ दधातु मे । सूर्या॑य॒ स्वाहा॑ ॥ ३ ॥

यत्र॑ । ब्रह्म॒ऽविदः॑ । यान्ति॑ । दी॒क्षया॑ । तप॑सा । स॒ह ।

---

1 S' पयसोसा for तपसा सह. 2 S' यमयतु. 3 S' बाह्याबाह्या° for बाह्या°.

सूर्यः । मा । तत्र । नयतु । चक्षुः । सूर्यः । दधातु । मे ॥ सूर्याय । स्वाहा ॥ ३ ॥

"आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत्" [ऐ॰ आ॰ २. ४. २] इति श्रुतेः सूर्यस्य चक्षुरानुकूल्यं युक्तम् ॥ गतम् अन्यत् ॥

चतुर्थी ॥

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।

चन्द्रो मा तत्र नयतु मनश्चन्द्रो[1] दधातु मे । चन्द्राय[2] स्वाहा ॥ ४ ॥

यत्र । ब्रह्मऽविदः । यान्ति । दीक्षया । तपसा । सह ।

चन्द्रः । मा । तत्र । नयतु । मनः । चन्द्रः । दधातु । मे ॥ चन्द्राय[3] । स्वाहा ॥ ४ ॥

[चन्द्रः प्रसिद्धः । तस्य मनआह्लादकत्वाद् मनस आनुकूल्यं युक्तम् ॥]

पञ्चमी ॥

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।

सोमो मा तत्र नयतु पयः सोमो दधातु मे । सोमाय स्वाहा ॥ ५ ॥

यत्र । ब्रह्मऽविदः । यान्ति । दीक्षया । तपसा । सह ।

सोमः । मा । तत्र । नयतु । पयः । सोमः । दधातु । मे ॥ सोमाय । स्वाहा ॥ ५ ॥

सोमोऽत्र अभिषूयमाणो वल्लीरूपः परिगृह्यते तस्य च[1] "सोमो वा ओषधीनां राजा" इति [तै॰ ब्रा॰ ३. ९. १७. १] श्रुतेः ओषधीनां सोमस्य च रसात्मकत्वात् पयःस्थापकत्वं युक्तम्[2] ॥

षष्ठी ॥

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।

इन्द्रो मा तत्र नयतु बलमिन्द्रो दधातु मे । इन्द्राय स्वाहा ॥ ६ ॥

यत्र । ब्रह्मऽविदः । यान्ति । दीक्षया । तपसा । सह ।

इन्द्रः । मा । तत्र । नयतु । बलम् । इन्द्रः । दधातु । मे ॥ इन्द्राय । स्वाहा ॥ ६ ॥

---

१ S′ omits the portion from मनश्चन्द्रो &c. of this verse up to तत्र नयतु in the next one, both inclusive. २ D चंद्राय. ३ P चंद्राय ।. J चंद्राय । changed to चंद्राय ।.

1 S′ has तस्य च यः for तस्य च. 2 S′ °स्थापकत्वमुक्तं for °स्थापकत्वं युक्तम्.

इन्द्रस्य बलरूपत्वं श्रुतिस्मृतिप्रसिद्धम् ॥

सप्तमी ॥

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
आपो मा तत्र नयन्त्वमृतं मोप तिष्ठतु । अद्भ्यः स्वाहा ॥ ७ ॥

यत्र । ब्रह्मऽविदः । यान्ति । दीक्षया । तपसा । सह ।
आपः । मा । तत्र । नयन्तु । अमृतम् । मा । उप । तिष्ठतु ॥ अत्ऽभ्यः । स्वाहा ॥ ७ ॥

"अमृतं वा आपः" इति [तै° आ° १. २६. ७] श्रुतेः गतप्राणस्यापि उदकसंबन्धेन आप्यायनसंभवाद् अपाम् अमृतप्रदानप्रार्थना युज्यते । मा माम् अमृतम् उप तिष्ठतु प्राप्नोतु ॥

अष्टमी ॥

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
ब्रह्मा मा तत्र नयतु ब्रह्मा ब्रह्म दधातु मे । ब्रह्मणे स्वाहा ॥ ८ ॥

यत्र । ब्रह्मऽविदः । यान्ति । दीक्षया । तपसा । सह ।
ब्रह्मा । मा । तत्र । नयतु । ब्रह्मा । ब्रह्म । दधातु । मे ॥ ब्रह्मणे । स्वाहा ॥ ८ ॥

[ब्रह्मा] जगत्स्रष्टा हिरण्यगर्भः ब्रह्म स्वस्वरूपभूतं श्रुताध्ययनजन्यं तेजो वा दधातु ॥

इति पञ्चमेनुवाके दशमं सूक्तम् ॥

"आयुषोसि" इति एकादशं सूक्तम् । अनेन सूक्तेन उत्तरेण च "नैर्ऋतीं[1] निर्ऋतिगृहीतस्य" इति [न° क° १७.] विहितायां नैर्ऋत्याख्यायां महाशान्तौ आञ्जनमणिम् अभिमन्त्र्य बध्नीयात् । उक्तं हि नक्षत्रकल्पे । "हरिणस्येति [३. ७] विषाणाग्रं कौमार्याम् । आयुषोसि प्रतरणम् [१९. ४४] इत्याञ्जनं नैर्ऋत्याम्" इति [न° क° १९] ॥

---

१ So A B^h C D K K^m R S^m V Dc Cs and P P^2 J, and even Sâyaṇa's text.

---

1 S' नैर्ऋती.

तत्र प्रथमा ॥[1]

आयुषोसि प्रतरणं विप्रं भेषजमुच्यसे ।[1]
तदाञ्जन त्वं शंताते शमापो अभयं कृतम् ॥ १ ॥[2]

आयुषः । असि । प्रऽतरणम् । विप्रम् । भेषजम् । उच्यसे ।
तत् । आऽअञ्जन । त्वम् । शम्ऽताते । शम् । आपः । अभयम् । कृतम् ॥ १ ॥[3] [4]

हे आञ्जन त्वम् आयुषः प्रतरणम् शतसंवत्सरपर्यन्तनयनंप्रवर्धकं[2] विप्रम् प्रीणयितृ विप्रवच्छुद्धं वा भेषजम् औषधम् उच्यसे सर्वैर्निदानज्ञैः । तत् तस्मात् कारणात् हे आञ्जन हे शंताते शंरूपं[3] । स्वार्थिकस्तातिल् प्रत्ययः । हे उदकलक्षण आञ्जन त्वम् आपश्च अब्देवता च शम् सुखम् अभयम् भयराहित्यं च कृतम् कृणुतम् ॥

द्वितीया ॥

यो हरिमा जायान्योङ्गभेदो विसल्पकः ।
सर्वं ते यक्ष्ममङ्गेभ्यो बहिर्निर्हन्त्वाञ्जनम् ॥ २ ॥[5]

यः । हरिमा । जायान्यः । अङ्गऽभेदः । विऽसल्पकः ।[6]
सर्वम् । ते । यक्ष्मम् । अङ्गेभ्यः । बहिः । निः । हन्तु । आऽअञ्जनम् ॥२॥

यो हरिमा शरीरे हरिद्वर्णकारकः[4] पाण्ड्वाख्यो रोगविशेषः । स च ज्यायान् अतिप्रवृद्धः दुश्चिकित्सः । तथा यः अङ्गभेदः वातादिजन्यः अवयवविश्लेषरूपो रोगः । यो विसर्पकः विविधं सरणशीलो व्रणविशेषः । स च प्रायेण जान्वोरधःप्रदेशे जायते । हे आञ्जनमणिधर्तः तं सर्वं य-

१ C °मुच्यते changed to °मुच्यसे. R °मुच्यसे changed to °मुच्यते. A D °मुच्यते. We with B^h S^m V Dc Cs, and P P^2 J. २ A B^h C D K K^m S^m V Dc Cs P P^2 J कृतम् for कृतम्. We with R. ३ So P P^2 J as always. ४ P P^2 J शंताते ।. ५ S^m बहिर्निरहंत्वांजनं (sic). B^h C R Cs बहिर्निरहंत्वा°. D बहिर्निर्हरहंत्वांजनं. K^m बहिनिरहंत्वा° changed to बहिर्निरहंत्वा°, which V also recites. K बहिर्निरहन्त्वा°. Dc बहिर्निरहंत्वांजनं corrected to बहिर्निरहंत्वांजनं. P P^2 J बहिः । (J बहिः) । निः । अहंतु ।. ६ P जायान्यः ।.

1 S′ प्रथमसूक्ते प्रथमा for प्रथमा. 2 S′ °नयनं°. 3 S′ शंरूपं. 4 S′ हरिद्वर्ताता for हरिद्वर्णकारकः.

क्ष्मम् व्याधिं ते तव अङ्गेभ्यः अवयवेभ्यः बहिः पृथक्कृत्य आञ्जनं निर्हन्तु नितरां नाशयतु ॥

तृतीया ॥

आञ्जनं पृथिव्यां जातं भद्रं पुरुषजीवनम् ।
कृणोत्वप्रमायुकं रथजूतिमनागसम् ॥ ३ ॥

आऽअञ्जनम् । पृथिव्याम् । जातम् । भद्रम् । पुरुषऽजीवनम् ।
कृणोतु । अप्रऽमायुकम् । रथऽजूतिम् । अनागसम् ॥ ३ ॥

पृथिव्याम् भूमौ जातम् उत्पन्नं भद्रम् कल्याणं मङ्गलप्रदं पुरुषजीवनम् पुरुषाणां स्वधारकाणां जीवयितृ एवंमहानुभावम् आञ्जनं माम् अप्रमायुकम् अमरणशीलं कृणोतु । तथा रथजूतिम् रथजवं रथवद्वेगगामिनम् अथ वा रथजवोपेतं रथवन्तं कृणोतु । अनागसम् अपापम् । सर्वत्र कृणोत्विति संबन्धः ॥

प्राणं प्राणं त्रायस्वासो असवे मृड ।
निर्ऋते निर्ऋत्या नः पाशेभ्यो मुञ्च ॥ ४ ॥

प्राणं । प्राणम् । त्रायस्व । असो इति । असवे । मृड ।
निःऽऋते । निःऽऋत्याः । नः । पाशेभ्यः । मुञ्च ॥ ४ ॥

सिन्धोर्गर्भोसि विद्युतां पुष्पम् ।
वातः प्राणः सूर्यश्चक्षुर्दिवस्पयः ॥ ५ ॥

सिन्धोः । गर्भः । असि । विऽद्युताम् । पुष्पम् ।
वातः । प्राणः । सूर्यः । चक्षुः । दिवः । पयः ॥ ५ ॥

---

१ A B̊ पुरुष°. We with C D K K̊ R S̊ V Dc Cs. २ A B̊ C D R प्राणः. Dc प्राणः changed to प्राणं. We with K K̊ S̊ V Cs and P P̊ J. ३ A मुच. C मुंच. S̊ मुंचत. J मुञ्च ।. We with B̊ D K K̊ R V Dc Cs and P P̊. ४ A B̊ C D R S̊ V Dc Cs सिंधो गर्भोसि. P P̊ J सिंधो इति ।. We with Sâyaṇa's text and commentary. ५ J पुष्पम् ।. We with P P̊.

देवाञ्जनं त्रैककुदं परि मा पाहि विश्वतः ।
न त्वा तरन्त्योषधयो बाह्याः पर्वतीया उत ॥ ६ ॥

देवऽआञ्जनं । त्रैककुदम् । परि । मा । पाहि । विश्वतः ।
न । त्वा । तरन्ति । ओषधयः । बाह्याः । पर्वतीयाः । उत ॥ ६ ॥

वीदं मध्यमवासृपद् रक्षोहामीवचातनः ।
अमीवाः सर्वाश्चातयन् नाशयदभिभा इतः ॥ ७ ॥

वि । इदम् । मध्यम् । अव । असृपत् । रक्षःऽहा । अमीवऽचातनः ।
अमीवाः । सर्वाः । चातयत् । नाशयत् । अभिऽभाः । इतः ॥ ७ ॥

चतुर्थी ॥ हे प्राण प्राणरूप आञ्जन त्वं मम प्राणं त्रायस्व रक्ष यथा अकाले नापगच्छति तथा कुरु । हे असो असुरूप आञ्जन त्वम् असवे असोरर्थाय मृळ* सुखय । हे निर्ऋते निर्ऋत्यात्मक आञ्जन त्वं निर्ऋत्याः पापदेवतायाः पाशेभ्यः बन्धकेभ्यो मां* मुञ्च मोचय । त्वं च सिन्धोः समुद्रस्य गर्भः गर्भस्थानीयः असि । एवं विद्युतां पुष्पम् वृष्ट्युदकम् असि ॥

पञ्चमी ॥ हे आञ्जन त्वं वातः बाह्यवाय्वात्मकः प्राणोसि । अतः प्राणान् रक्षेत्यभिप्रायः । "वायुः प्राणो भूत्वा नासिके प्राविशत्" इति [ऐ॰आ॰२.४.२] श्रुतेः । तथा सूर्यः सूर्यात्मकः चक्षुः चक्षुरिन्द्रियम् असि । अतश्चक्षुः पाहीत्यभिप्रायः । "आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत्" इति श्रुतेः [ऐ॰आ॰२.४.२] । वायोरंशीभूतः प्राणोसि सूर्यस्य च अंशीभूतं चक्षुरसीति तात्पर्यार्थः । तथा दिवः द्युलोकस्य पयः सारभूतम् उदकम् असि । हे त्रैककुदम् । त्रिककुन्नाम ककुत्त्रयोपेतः पर्वतविशेषः तत्संबन्धि आञ्जनं त्रैककुदम् । तादृश देवाञ्जन देवैः स्वरक्षार्थं धार्यमाण

१ A B[h] C D K K[m] R S[m] Dc देवांजनं. P P[2] J देवऽआंजनम् ।. We with Cs and Sâyaṇa's text. २ A B[h] C D K K[m] R S[m] V Cs °धयो बाह्याः पर्व°. Dc °धयो बाह्याः पर्व° changed to °धयो बाह्याः पर्व°. P J बाह्याः ।. We with Dc P[2]. ३ P P[2] J चातयन् ।.

1 Sâyaṇa's text: नः. 2 S' वायोसि. 3 So S'. And so Sâyaṇa's text too.

आञ्जन यद्वा देवैः प्राण्युपकाराय सृष्ट आञ्जन मां विश्वतः सर्वतः परि पाहि रक्ष ॥

षष्ठी ॥ हे आञ्जन त्वा त्वां बाह्याः पर्वतबाह्याः[2] पर्वतव्यतिरिक्तस्थलेषूत्पन्ना ओषधयो न तरन्ति न लङ्घयन्ति नातिशेरते किं तु त्वत्तो न्यूनवीर्या एवेत्यर्थः । उत अपि च पर्वतीयाः पर्वते भवाः स्वयं त्रिककुदाख्यपर्वतोत्पन्नत्वाद् इतरहिमविन्ध्यादिपर्वतजा अपि ओषधयस्त्वा त्वा न तरन्ति । ⌛ "पर्वताच्च" इति छः ⌛ । किं च रक्षोहा रक्षोविघाती अमीवचातनः रोगाणां नाशकोयम् इदं परिदृश्यमानं यद् अस्ति तस्य मध्यं व्यवासृपत् प्रतिपदार्थम् अवाङ्मुखं[3] पर्वताद्[3] अधोऽगच्छत् । सर्वव्याप्यभूद् इत्यर्थः । ⌛ सृपेर्ऌदित्वाद् अङ् ⌛ । किं[4] कुर्वत् । सर्वा अमीवाः येये रोगा आभ्यन्तरा नानाभेदभिन्नाः सन्ति तान् सर्वान् चातयत् नाशयत् । पुनः किं कुर्वत् । अभिभाः अभिभवतीति अभिभा सर्वं रोगादिकम् इतो नाशयत् तिरस्कुर्वद्[5] आञ्जनम् ॥

सप्तमी ॥

बह्वी३दं राजन् वरुणानृतमाह पूरुषः ।
तस्मात् सहस्रवीर्य मुञ्च नः पर्यंहसः ॥ ८ ॥

बहु । इदम् । राजन् । वरुण । अनृतम् । आह । पुरुषः ।
तस्मात् । सहस्रऽवीर्य । मुञ्च । नः । परि । अंहसः ॥ ८ ॥

हे राजन् वरुण प्राणिनां शिक्षाकर्तर्देव पूरुषः पुरुषः इदम् इदानीं

---

१ R $\overset{m}{S}$ Cs राजंन्वरुणानृतं॰. $\overset{h}{B}$ C राजंन्वरुणानृत॰. D राजन्वरुणानृत॰. $\overset{m}{K}$ V राजन्वरुणानृतं॰. Dc राजंन्वरुणानृतं॰ changed to राजन्वरुणानृतं॰. P J राजंन् ।. $\overset{2}{P}$ राजन् । J अनृतंम् ।. P $\overset{2}{P}$ अनृतम् ।. We with A $\overset{2}{P}$. २ A $\overset{h}{B}$ C D K R $\overset{m}{S}$ पर्यंहसः. $\overset{2}{P}$ P J परिऽअंहसः ।. Dc पर्यंहसः changed to पर्यंहसः. We with $\overset{m}{K}$ V Dc Cs both here and in the next mantra. ३ P आहं ।. We with $\overset{2}{P}$ J.

---

1 Sâyaṇa's text: मा. 2 S′ पर्वतव्यतिरिक्तबाह्याः. 3 S′ अवाङ्मुखपर्वतात्. 4 For the portion of the commentary from here up to the end (आञ्जनम्) S′ has: पुनः किं कुर्वन् अभिभाः अभिभवतीत्यभिभा सर्वं रोगादिकं तिरस्कुर्वन् आंजनं सर्वा अमीवाः ये ये रोगा आभ्यंतरा नानाभेदभिंनाः संति तान् सर्वान् नाशयत् ॥ The emendation is ours. 5 S′ तिरस्कुर्वन्.

बहु अनृतम् प्रातःप्रभृति शयनकालपर्यन्तम् अपरिमितम् असत्यम् आह ब्रूते । तद् अनृतं त्वं क्षमस्व तत्प्रयुक्तां शिक्षां मा कुरु । किं च हे सहस्रवीर्य आञ्जनौषधे त्वं तस्मात् वरुणशिक्षानिमित्तभूताद् अनृतवदनप्रयुक्ताद् अंहसः पापाद् नः अस्मान् परि मुञ्च परितः सर्वतो मुक्तान् कुरु ॥

अष्टमी ॥

यदापो अघ्न्या इति वरुणेति यदूचिम ।
तस्मात् सहस्रवीर्य मुञ्च नः पर्यंहसः ॥ ९ ॥

यत् । आपः । अघ्न्याः । इति । वरुण । इति । यत् । ऊचिम ।
तस्मात् । सहस्रऽवीर्य । मुञ्च । नः । परि । अंहसः ॥ ९ ॥

आपो यूयं जानीध्वे[1] साक्षितया यद् ऊचिम उक्तवन्तः स्मः[2] । तथा अघ्न्या इति । अघ्न्या अहन्तव्या गाव उच्यन्ते । हे अघ्न्याः यूयं मम चित्तं जानीध्व इति यद् ऊचिम । तथा हे वरुण त्वं जानासीति यद् ऊचिम । हे सहस्रवीर्य अपरिमितसामर्थ्य त्रैककुदाञ्जन[3] तस्मात्[4] सर्वस्माद् अंहसः नः अस्मान् परि मुञ्च ॥

नवमी ॥

मित्रश्च त्वा वरुणश्चानुप्रेयतुराञ्जन[1] ।
तौ त्वानुगत्य दूरं भोगाय पुनरोहतुः[2] ॥ १० ॥

मित्रः । च । त्वा । वरुणः । च । अनुऽप्रेयतुः । आऽअञ्जन ।
तौ । त्वा । अनुऽगत्य । दूरम् । भोगाय । पुनः । आ । ऊहतुः ॥ १० ॥

हे आञ्जन ओषधे त्वा त्वां मित्रश्च वरुणश्च उभौ अहोरात्राभिमानिनौ देवौ द्युलोकाद् भूमिम् आगत्य पुनः केनचिन्निमित्तेन पराङ्मुखं गच्छन्तं त्वा त्वाम् अनुप्रेयतुः अनुसृत्य जग्मतुः । तौ मित्रावरुणौ त्वा

१ B̊ D R S̊ Cs वरुण°. V वरुण° though he recites अनुऽप्रेयतुः in the padas. We with A C K K̊ Dc P P̊ J २ A B̊ C D K K̊ R S̊ V Dc Cs पुनरोहतु. V पुनराहतुः with Sâyaṇa and Sâyaṇa's text. P P̊ J पुनः । रोहतु ।.

1 S′ जानीध्व. 2 S′ स्म. 3 S′ °दांजान. 4 S′ ततस्मात्.

त्वां दूरम् अनुगत्य भोगाय प्राणिनाम् उपभोगाय पुनराहतुः पुनरागन्तव्यम् इति ऊचतुः। प्रतिनिवर्तितवन्तावित्यर्थः। एवंमहानुभावस्त्वम् असीति त्रैककुदाञ्जनस्तुतिः॥

इति पञ्चमेनुवाके एकादशं सूक्तम्॥

"ऋणादृणमिव" इति द्वादशसूक्तस्य आञ्जनमणिबन्धने पूर्वसूक्तेन सह उक्तो विनियोगः॥

तत्र प्रथमा॥

ऋणादृणमिव संनयन् कृत्यां कृत्याकृतो गृहम्।
चक्षुर्मन्त्रस्य दुर्हार्दः पृष्टीरपि शृणाञ्जन॥ १॥

ऋणात्। ऋणम्ऽइव। सम्ऽनयन्। कृत्याम्। कृत्याऽकृतः। गृहम्।
चक्षुःऽमन्त्रस्य। दुःऽहार्दः। पृष्टीः। अपि। शृण। आऽअञ्जन॥ १॥

यथा लोके कस्यचिद् धनिनो हस्ताद् गृहीताद् ऋणात् सकाशाद् भीतः सन् यद्वा ऋणात् ऋणदातुरुत्तमर्णाद् आनीतम् ऋणं तदीयं यथा तस्यैव प्रत्यर्पयति एवं कृत्याम् पीडार्थं प्रेषितां पिशाचिकां देवतां कृत्याकृतः कृत्याम् उत्पादितवतः पुरुषस्य गृहं प्रति संनयन् सम्यग्गमयन् मित्रस्य आदित्यस्य चक्षुः चक्षुस्थानीयः। यद्वा मित्रभूतस्य मम चक्षुस्थानीयस्त्वम् हे आञ्जनौषधे दुर्हार्दः दुष्टहृदयस्य वैरिणः पृष्टीः पार्श्वास्थीनि अपि शृण घातय॥

१ C रिणाद्रिणमिव सन्नयं. R ऋणादृणमिव सन्नयं. D Š ऋणादृणमिव संनयं. Cs ऋणादृणमिव सन्नयं. K ऋणादृणमिवं संनयन्. K̈ ऋणादृणमिव संनयं. B रिणाद्रिणमिव संनयं. V ऋणादृणमिवं संनयं (=°यम्). Dc ऋणादृणमिव संन्नयं changed to ऋणादृणमिव संन्नयं. Sâyaṇa's text: ऋणादृणमिव संनयन् कृत्यां कृत्याकृतो गृहम्। चक्षुर्मंत्रस्य &c. P रिणात्। रिणम्ऽइव। सम्ऽनयम्।. P̈ रिणात्। रिणम्ऽइव। सम्ऽनयम्।. J ऋणात्। ऋणम्ऽइव। सम्ऽनयम्।. We in accordance with the commentary. २ So all our MSS. and other authorities, and rightly. चक्षुर्मन्त्रस्य must obviously be taken as an adjective of दुर्हार्दः. See also II. 7. 5. ३ CK̈VDcPJ पृष्ठी°. We with AB̈DK RS̈VP̈.

1 S' ऋणदातुमुत्त°. 2 S' आनीतऋणं.

द्वितीया ॥

यद॒स्मासु॑ दु॒ष्वप्न्यं॒ यद् गोषु॒ यच्च॑ नो गृ॒हे ।
अना॑मग॒स्तं[1] च॑ दु॒र्हार्दः॑ प्रि॒यः प्रति॑ मुञ्चताम् ॥ २ ॥

यत् । अ॒स्मासु॑ । दु॒ःऽस्वप्न्य॑म् । यत् । गोषु॑ । यत् । च॒ । न॒ः । गृ॒हे ।
अना॑मगः । तम् । च॒ । दु॒ःऽहार्दः॑ । प्रि॒यः । प्रति॑ । मु॒ञ्च॒ता॒म् ॥ २ ॥

अस्मासु । भ्रातृपुत्रभृत्याद्यपेक्षया अस्मास्विति बहुवचनम् । यद् दुष्वप्न्यम् । दुष्टं च तत् स्वप्नं च दुष्वप्नम् तज्जन्यं दुःखं दुःष्वप्न्यम् । यद्वा दुष्वप्नमेव दुःष्वप्न्यम् तद् यद् अस्ति । यच्च गोषु दुष्वप्न्यम् अस्ति । यच्च नो गृहे दासादीनां दुःष्वप्न्यम् अस्ति तद्* दुःष्वप्न्यम् अनामकः* ईदृङ्नामा तादृङ्नामा इत्येवंनामरहितो दुर्हार्दः दुष्टचित्तः *अप्रियः मयि द्वेषं कुर्वाणः शत्रुः प्रति मुञ्चताम् रुक्माद्याभरणवद् धारयतु ॥

तृतीया ॥

अ॒पामू॒र्ज ओज॑सो वावृ॒धान॑म॒ग्नेर्जा॒तमधि॑ जा॒तवे॑दसः ।
च॒तु॒र्वी॒रं पर्व॒तीयं॒ यदाञ्ज॑नं॒ दिशः॑ प्र॒दिशः॑ कर॒दिच्छि॒वास्ते॑ ॥ ३ ॥

अ॒पाम् । ऊ॒र्जः । ओज॑सः । व॒वृ॒धान॑म् । अ॒ग्नेः । जा॒तम् । अधि॑ । जा॒तऽवे॑दसः ।
च॒तुःऽवी॑रम् । प॒र्व॒तीय॑म् । यत् । आ॒ऽअञ्ज॑नम् । दिशः॑ । प्र॒ऽदिशः॑ । क॒र॒त् । इत् । शि॒वाः । ते॒ ॥ ३ ॥

अपाम् उदकानाम् ऊर्जम्* रसभूतं सारभूतम् अत एव ओजसः बलस्य वावृधानम् । वर्धकम् इत्यर्थः । अथ वा ओजसः अर्थाय वर्धमानम् । तथा जातवेदसः जातधनस्य प्राप्ततेजोलक्षणधनस्य अग्नेरधि अग्नेः

---

[1] R अना॑मग॒स्तं च॑ दु॒र्हार्दः॑ प्रि॒यः. A B[h] C K K[m] Dc अना॑मग॒स्त्वं च॑ दु॒र्हार्दः॑ प्रि॒यः. D अना॑मग॒स्तंतदु॒र्हार्दः॑ प्रि॒यः. S[m] अना॑मग॒स्त्वं(changed to स्त्वां)च दु॒र्हार्दः॑ प्रि॒यः. V अना॑मग॒स्त्वं च॑ दु॒र्हार्दः॑ प्रि॒यः and अना॑मक॒स्त्वच्चं दु॒र्हार्दो॑प्रि॒यः. Cs अना॑गमस्त (sic) च॑ दु॒र्हार्दः॑ (sic) प्रि॒यः. P P J अना॑मगः । त्वम् । च॒ । दु॒ःऽहार्दः॑ । प्रि॒यः ।. Sâyaṇa's text: अनामकस्तच्च दुर्हार्दोप्रियः.

सकाशात् जातम्। ॥ अधिः पञ्चम्यर्थानुवादी ॥। तथा चतु-र्वीरम् चतसृषु दिक्षु विक्रान्तं सर्वतोऽकुण्ठितशक्ति[1]। यद्वा चत्वारो वीराः पुत्रा यस्य तत्[2] पुत्रचतुष्टयाख्यफलस्य दातृ[3] पर्वतीयम् पर्वते त्रिककुदाख्ये उत्पन्नम्। ॥ "पर्वताच्च" इति छप्रत्ययः ॥। एवंमहानुभावं यद् आञ्जनम् अस्ति तत् ते दिशः अवान्तरदिश इत् [प्रदिशः] प्रकृष्टा दिशः प्रागाद्याश्च शिवाः मङ्गलाः सुखप्रदाः करत्[4] कुर्यात्। यद्वा इच्छब्दः क-रत् इत्यनेन संबध्यते। करोत्वेव॥

चतुर्थी॥

चतुर्वीरं बध्यत आञ्जनं ते सर्वा दिशो अभयास्ते भवन्तु।
ध्रुवस्तिष्ठासि सवितेव चार्य[1] इमा विशो अभि हरन्तु ते बलिम्॥ ४॥

चतुःऽवीरम्। बध्यते। आऽअञ्जनम्। ते। सर्वाः। दिशः। अभयाः। ते। भवन्तु।
ध्रुवः। तिष्ठासि। सविताऽइव। च। आर्य। इमाः। विशः। अभि। हरन्तु। ते। बलिम्॥ ४॥

हे रक्षा[5]फलकाम ते तव चतुर्वीरम् दातव्यैश्चतुर्भिर्वीरैरुपेतं चतसृषु दिक्षु वीर्योपेतं वा[6] आञ्जनम् अञ्जनमणिरूपम् औषधं[7] बध्यते। तेन किं फ-लतीत्यत्राह। मणिं धृतवतस्ते सर्वा दिशः प्रदिशो दिशश्च अभयाः भ-यरहिता निर्भया भवन्तु। सर्वत्र अभयं फलम् इत्युक्तं भवति। किं च हे अर्य* स्वामिन् निर्भयस्त्वं सवितेव सूर्य इव विश्वं प्रकाशयन् ध्रुवस्ति-ष्ठासि तिष्ठ। सूर्य इव अतितेजस्वी चिरकालं तिष्ठतस्ते [इमाः] सर्वा विशः प्रजा बलिम् हिरण्यरजतमणि[8]मुक्ताकरितुरगाद्युत्कृष्टपदार्थमयीम् अ-पचितिम् अभि हरन्तु सर्वतः समर्पयन्तु। करं प्रयच्छन्तु इत्यर्थः॥

---

१ A B[h] C D K K[m] R V Dc Cs सवितेवं चार्य॑. S[m] चार्य. P P[2] J आर्य॑ः।. The emended accent is ours.

---

1 S' °कुण्ठितशक्तिं. 2 S' तं for तत्. 3 S' दातारं. 4 S' करदित्. 5 S' रक्षासि-फलकाम. 6 S' वानांजन° for वा आञ्जन°. 7 S' ते after औषधं. 8 S' °मणिमणिमुक्ता° for °मणिमुक्ता°.

पञ्चमी ॥

आक्ष्वैकं मणिमेकं कृणुष्व स्नाह्येकेना पिबैकमेषाम् ।
चतुर्वीरं नैर्ऋतेभ्यश्चतुर्भ्यो ग्राह्या बन्धेभ्यः परि पात्वस्मान् ॥ ५ ॥

आ । अक्ष्व । एकम् । मणिम् । एकम् । कृणुष्व । स्नाहि । एकेन । आ । पिब । एकम् । एषाम् ।
चतुःऽवीरम् । नैःऽऋतेभ्यः । चतुःऽभ्यः । ग्राह्याः । बन्धेभ्यः । परि । पातु । अस्मान् ॥ ५ ॥

हे पुरुष एकम् आञ्जनम् आङ्क्ष्व[1*] चक्षुषि धारय । तथा एकं मणिं कृणुष्व कुरु । एकेन आञ्जनेन स्नाहि[2] स्नानं कुरु । त्रिषु पर्वतककुत्सु उत्पन्नानि त्रीण्याञ्जनानि । तेषु कस्य कुत्रोपयोग इत्याशङ्कायां व्यवस्थाऽप्रसक्तावाह अविवेकम्[3*] एषाम् इति । एषां त्रयाणाम् अस्येदम् अस्येदम् इत्येवं विवेकम् अकृत्वा इच्छया एकम् आङ्क्ष्व एकं मणिं कुरु एकेन स्नाहीत्यर्थः । चतुर्वीरम् एतद् आञ्जनम् । ग्राह्याः ग्रहीतव्या आञ्जनमया ओषधयश्चतुर्भ्यो नैर्ऋतेभ्यः निर्ऋतिदेवतासंबन्धिभ्यो बन्धेभ्यः सकाशाद् अस्मान् परि पान्तु[4*] सर्वतो रक्षन्तु ॥

षष्ठी ॥

अग्निर्माग्निनावतु प्राणायापानायायुषे वर्चस ओजसे
तेजसे स्वस्तये सुभूतये स्वाहा ॥ ६ ॥

---

१ So A B̊ C D K K̊ R V Dc Cs. S̊ आक्ष्वै°. P P̊ J आक्ष्व ।. २ A B̊ C D K K̊ R S̊ V Dc Cs. स्नाह्येकेनापिबैकं°. P P̊ J स्नाहि । एकेन । अपि । वा । एकम् ।. The misreading of वै for बै in the *Saṁhitâ* —a very usual corruption—misled the authors of the *pada*-text into dividing the passage as is exhibited by P P̊ J. If Rw. had discerned the आ after एकेन, their very correct emendation would have been free from the defect of unnecessarily changing the ancient accent of the *Saṁhitâ*-text. ३ P P̊ ग्राह्यां ।. J ग्राह्याः । changed to ग्राह्यां ।.

---

1 So Sâyaṇa's text too. 2 S′ स्नात्यंहिस्थानंकुरु. 3 Sâyaṇa's text: स्नाह्येकेनाविवेकमेषां. 4 Sâyaṇa's text, however, has पात्वस्मान्.

रूपम् धेन्वाकृतिं बिभर्षि धारयसि । रात्रेर्गोरूपत्वम् अन्यत्राम्नायते । “या प्रथमा व्यौच्छत् सा धेनुरभवद् यमे” [तै॰ सं॰ ४. ३. ११. ५] इति । प्रथमा रात्रिः व्यौच्छत् विवासितवती उषोरूपेण संपन्नेति तस्यार्थः । तथा “यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम्” [आप॰ गृ॰ २०] इति धेनोरुपमानत्वात् तत्समानधर्मसद्भावो रात्रेः प्रतिपादितो भवति । अत्र रूपशब्दो धर्मवाची । यतो गोरूपं बिभर्षि अतः उशती अस्मान् पोषयितुं कामयमाना चक्षुष्मती चक्षुर्दर्शनशक्तिः तद्वती अस्मद्विषयदर्शनशक्तिमती अस्मान् रक्षितुम् अनुग्रहबुद्ध्या सर्वदा लोकमाना[1] । एवंविधा त्वं मे मम वपूंषि शरीराणि । बहुवचनेन पुत्रादिशरीराणि विवक्ष्यन्ते । तानि प्रति अभिलक्ष्य क्षाम् । पृथिवीनामैतत् । क्षियन्ति निवसन्ति भूतान्यत्रेति क्षा भूमिः । तां नामुक्थाः न मुञ्च । तत्र दृष्टान्तः दिव्या[2] नेति[2] । दिव्या दिव्यानि दिवि भवानि शरीराणीव यथा दिव्यशरीराणि न मुञ्चसि एवम् आस्माकानीति । ⌛ मुञ्चतेश्छान्दसे लुङि स्वरितेत्त्वाद् आत्मनेपदम् । “झलो झलि” इति सिचो लोपः ⌛ ॥

यो अद्य स्तेन आयत्यघायुर्मर्त्यो[1] रिपुः ।
रात्री तस्य प्रतीत्य प्र ग्रीवाः प्र शिरो हनत्[2] ॥ ९ ॥

यः । अद्य । स्तेनः । आऽअयति । अघऽयुः । मर्त्यः । रिपुः ।
रात्री । तस्य । प्रतिऽइत्य । प्र । ग्रीवाः । प्र । शिरः । हनत् ॥ ९ ॥

प्र पादौ न यथायति प्र हस्तौ न यथाशिषत्[3] ।
यो मलिम्लुरुपायति[4] स संपिष्टो अपायति ।

---

१ A B̊ C D R S̊ Cs °मर्त्यो रिपुः. J मर्त्यः ।. P मर्त्युः ।. We with K K̊ V Dc P̊.   २ So A B̊ C D K K̊ R S̊ V Dc Cs P P̊ J.   ३ A B̊ C R S̊ V °शिषः. P P̊ J अशिषः ।. We with D K K̊ V Dc Cs.   ४ K K̊ V Dc मलिम्लुरु°. We with B̊ C D R S̊ Cs P P̊ J.

---

1 After लोकमाना occurs a second time in the commentary the following explanation of उशती, the result of a *lapsus memoriæ* on the author's part that he had already explained the term: उशती कामयमाना रक्षितुमेवेति शेषः. 2 S' दिव्यानीति. Sâyaṇa here uses न twice by a *lapsus memoriæ*.

अपायति स्वपायति शुष्के स्थाणावपायति ॥ १० ॥

प्र । पादौ । न । यथा । अयति । प्र । हस्तौ । न । यथा । अशिषत् ।
यः । मलिम्लुः । उपऽअयति । सः । सम्ऽपिष्टः । अप । अयति ।
अप । अयति । सुऽअपायति । शुष्के । स्थाणौ । अप । अयति ॥ १० ॥

नवमी ॥ अद्य इदानीं यः स्तेनः आयति आगच्छति । अस्मद्धनम् अपहर्तुम् इति शेषः । तथा अघायुः अघं हिंसालक्षणं पापं तत् परस्येच्छन् । ॥अघशब्दात् क्यचि "अश्वाघस्यात्" इति आकारः॥ । मर्त्यः मरणधर्मा रिपुः शत्रुश्च आयति । ॥इ गतौ । भौवादिकः । अय पय गतौ इत्यस्माद् वा व्यत्ययेन परस्मैपदम्॥ । हे[1] सुरूपे शोभनरूपे रात्रि मम । समीपम् इति शेषः । यश्च शत्रुः आयति स सर्वः स्तेनादिः संपिष्टः त्वत्तेजसा सम्यक् चूर्णितः अर्दितः सन् अपायाति अपसृत्य अपक्रम्य अयतु गच्छतु । त्वया बाधितः शत्रुः अस्मत्तो दूरदेशं गच्छत्वित्यर्थः । ॥अयतेर्लेटि आडागमः॥ ॥

दशमी ॥ स संपिष्टो अपायतीत्युक्तम्[2] । परोक्षवादेन संपेषप्रकारं विशिनष्टि । एवंमहिमोपेता[3] रात्री देवता तस्य शत्रोः परोपद्रवकारित्वलक्षणम् अभिप्रायं प्रतीत्य सम्यग् ज्ञात्वा ग्रीवाः कन्धराः । अवयवापेक्षया बहुत्वम् । यद्वा तस्य पूर्वोक्तस्य स्तेनादेर्ग्रीवाः[4] प्र हरत् प्रहरतु छिनत्तु । शिरश्च प्र हरत् प्रच्छिनत्तु । ॥हरतेर्लेटि अडागमः॥ । पादौ च । प्र हरत् इति क्रियानुषङ्गः । यथा नायति पुनर्नागच्छति तथा

१ A B[h] C D K R S[m] Dc Cs °वपायतः. V °वपायति and °वपायतः. P P[2] J अपऽअयतः. We with Sâyaṇa. २ See note ३ on the previous page.

1 Sâyaṇa has the following for his text of the 9th mantra:

नवमी ।

यो अद्य स्तेन आयत्यघायुर्मर्त्यो रिपुः ।

यो मम रात्रि सुरूप आयति स संपिष्टो अपायति ॥,

thus adding one line, (यो मम रात्रि &c.), which none of our authorities recognise. He further makes two mantras of the remaining portion of the hymn beginning with रात्री तस्य प्रतीत्य. 2 So S′. It may be noted here that in the text of the previous couplet Sâyaṇa reads अपायति though he explains अपायाति. 3 S′ has तस्य again before एवं. 4 S′ °ग्रीवा.

पादौ गमनसाधनभूतौ प्रच्छिनत्तु । हस्तौ बाहू च प्र हरत् यथा ना-श्लिषत् [न] संश्लेषयेत् मिथो न संयोजयेत् । परं प्रहर्तुम् इति शेषः । तथा हस्तौ प्रच्छिनत्तु । ॥ श्लिष आलिङ्गने इति धातुः । "श्लिष आलिङ्गने" इति आलिङ्गनेर्थे क्सस्य विधानाद् अत्र तदर्थाभावात् च्लेः अङ् आदेश एव । ङित्त्वात् लघूपधगुणाभावः ॥ ॥

एकादशी ॥ यो मलिम्लुः मलिम्लुचस्तस्करः उपायति अस्मदीयधनम् अपहर्तुं बाधितुं वा समीपम् आगच्छति स शत्रुः संपिष्टः त्वया सम्यक् चूर्णितः सन् अपायति अस्मत्तः अपगच्छतु । आवश्यकत्वद्योतनार्थम् अ-पायतीति पुनर्वचनम् । स्वपायति सुष्ठु सम्यग् निःशेषम् अपगच्छतु । गन्तव्यस्थानेपि सुखलेशस्याप्यभावम् आह । शुष्के नीरसे स्थाणौ शा-खोपशाखारहितवृक्षमूले आश्रये [अपायति] अपायतु अपगच्छतु । अ-स्मत्तोऽपगतः शत्रुश्छायारहितं नीरसवृक्षमूलम् आश्रयत्वित्यर्थः । ॥ अत्र सर्वत्र[1] एतेर्लेटि अडागमः ॥ ॥

[इति] षष्ठेनुवाके चतुर्थं सूक्तम् ॥

"अध रात्रि तृष्टधूमम्" इति सूक्तस्य रात्रीकल्पे रात्र्युपस्थाने जपे च विनियोगः पूर्वसूक्तेन सह उक्तः ॥

तत्र प्रथमा ॥

अध[1] रात्रि तृष्टधूममशीर्षाणमहिं कृणु ।
अक्षौ[2] वृकस्य निर्जह्यास्तेन तं द्रुपदे जहि ॥ १ ॥

अध । रात्रि । तृष्टऽधूमम् । अशीर्षाणम् । अहिम् । कृणु ।
अक्षौ । वृकस्य । निः । जह्याः । तेन । तम् । द्रुऽपदे । जहि ॥ १ ॥

एषा ऋक् "आ रात्रि पार्थिवम्" इति सूक्ते व्याख्याता [४७. ८] । अक्षौ निर्जह्या इत्येतावान्[2] विशेषः । अक्षौ अक्षिणी चक्षुषी निर्जह्याः । ॥ ज-

१ A B[h] C D K K[m] R S[m] V Dc Cs P P[2] J अंधं. We with Sâyaṇa. २ B[h] अक्षौ. C अक्षौ changed to अक्ष्यौ. D अक्षू. K[m] V अक्ष्यौ. S[m] आक्षौ. Dc अक्षौ changed to अक्ष्यौ. Cs अक्षो. P P[2] J अक्ष्यौ ।. We with A R V.

1 S′ सर्वत्रायते° for सर्वत्र एते°. 2 S′ °त्येतावांनिशेषः for °त्येतावान् विशेषः.

हातिरत्र अन्तर्णीतण्यर्थः । निर्हापयेः निर्मोचयेः । उत्पाटयेरिति[1] यावत् । ओहाक् त्यागे । जौहोत्यादिकः । "लोपो यि" इति यकारादौ प्रत्यये धातोराकारस्य लोपः ॥

द्वितीया ॥

ये ते रात्र्यनड्वाहस्तीक्ष्णशृङ्गाः स्वाशवः ।
तेभिर्नो अद्य पारयाति[1] दुर्गाणि विश्वहा ॥ २ ॥

ये । ते । रात्रि । अनड्वाहः । तीक्ष्णऽशृङ्गाः । सुऽआशवः ।
तेभिः । नः । अद्य । पारय[1] । अति । दुःऽगानि । विश्वहा ॥ २ ॥

हे रात्रि ते तव संबन्धिनो वाहनभूतास्तीक्ष्णशृङ्गाः निशितविषाणाः स्वाशवः अतिशयेन शीघ्रगामिनो ये अनड्वाहः पुंगवा अनोवहनशक्ताः पुंगवाः सन्ति । "चतुरनडुहोराम् उदात्तः" इति आम् आगमः । तेभिः तैः उक्तलक्षणोपेतैरनडुद्भिः नः अस्मान् अद्य इदानीं विश्वहा विश्वेषु सर्वेषु अहःसु [रात्रिषु] च दुर्गाणि दुर्गमाणि कृच्छ्राणि दुर्जयानि अनर्थजातानि अति पारय अतिक्रामय । यथा दुस्तरं नद्यादिकम् अनड्वाहः पुरुषांस्तारयन्ति एवम् एभिः अस्मान्[2] शत्रुकृतारिष्टेभ्यस्तारयेति ॥

तृतीया ॥

रात्रिंरात्रिमरिष्यन्तस्तरेम तन्वा वयम् ।
गम्भीरमप्लवा इव न तरेयुररातयः ॥ ३ ॥

रात्रिम्ऽरात्रिम् । अरिष्यन्तः । तरेम । तन्वा । वयम् ।
गम्भीरम् । अप्लवाःऽइव । न । तरेयुः । अरातयः ॥ ३ ॥

अत्र परोक्षवादः । रात्रिंरात्रिम् । "नित्यवीप्सयोः" इति द्वि-

---

१ A B[h] C D K[m] V Dc Cs पारयत्यति. R S[m] पारयत्याति. P पारयाति । अति ।. P[2] J पारयति । अति ।. We with Sâyaṇa.

---

1 S′ उत्पातये° for उत्पाटये°. 2 S′ असात्.

र्वचनम् ॥ । सर्वां रात्रिम् अरिष्यन्तः गमिष्यन्तः । ॥ आगा-
मिरात्र्यपेक्षया भविष्यत्प्रयोगः । अर्तेः स्यप्रत्यये "ऋद्धनोः स्ये" इति
इडागमः ॥ । वयं तन्वा स्वशरीरेण । तनोति विस्तारयति कुलम्
इति वा तनुशब्दः पुत्रवाची । पुत्रादिभिः सह तरेम । रात्रिरेव कर्म ।
सर्वस्या रात्रेः पारम् अश्नुवीमहीत्यर्थः ॥ अरातयः अस्मदीयाः शत्रवस्तु
न तरेयुः रात्रिं नातिक्रामेयुः । रात्रावेव विनष्टा भवन्तु । अत्र दृ-
ष्टान्तः गम्भीरम् अप्लवा इवेति । प्लवः तरणसाधनम् उडुपम् तद्र-
हिता जना यथा गम्भीरम् अगाधं नद्यादिकं तरन्तो मध्येनदि नि-
मज्जन्ति एवं त्वद्रक्षणरूपप्लवराहित्यात् तेषाम् रात्रिमध्य एव विनश्यन्तु
इत्यर्थः ॥

चतुर्थी ॥

यथा॑ शा॒म्याकः॑ प्र[1]पत॑न्नप॒वान् ना॑नु॒वि॒द्यते॑ ।
ए॒[2]वा रा॑त्रि॒ प्र पा॑तय॒ यो अ॒स्माँ अ॑भ्यघा॒[3]यति॑ ॥ ४ ॥

यथा॑ । शा॒[4]म्याकः॑ । प्र॒ऽप[1]त॑न् । अ॒प॒ऽवान् । न । अ॒नु॒ऽवि॒द्यते॑ ।
ए॒व[2] । रा॒त्रि॒ । प्र । पा॒त॒य॒ । यः । अ॒स्मान् । अ॒भि॒ऽअ॒घा॒[3]यति॑ ॥ ४ ॥

शाम्याकः श्यामाकाख्यो[1] धान्यविशेषः । स यथा प्रपतन् पक्कः सन्
निपतन् अपवान् अपकर्षवान् दुर्बलो निःसारो नानुविद्यते अवस्थितिं
न लभते । नोपलभ्यते । विनश्यतीति यावत् । एव एवम् हे रात्रि त्वं
प्र पातय प्रकर्षेण अवाङ्मुखं निपातय । तम् आह । यः शत्रुः अ-
स्मान् अभिलक्ष्य अघायति अघं हिंसालक्षणं पापं कर्तुम् इच्छति हिन-
स्ति । तं प्रपातयेति संबन्धः ॥

---

१ A प्रप॑तनप॒वान्ना॑नु॰. K प्रप॒वान्ना॑नु॰. K[m] V प्र॒पत॑न्नप॒वान्ना॑नु॰. B[h] S[m] Cs प्रप॑तन्नप॒वान्ना॑नु॰. C प्रप॑त॒न्नपवा॑ना॑नु॰. D प्रप॑त॒न्नप॒वान्ना॑नु॰. P J प्र॒ऽप॑तन् ।. We with Dc P[2]. २ B[h] ए॒तावा॑ for ए॒वा. A C D K[m] R S[m] V Dc ए॒तावा. Cs ए॒तावा॒रात्रि. P P[2] J ए॒तौ । आ ।. We with Sâyaṇa. ३ A B[h] D K K[m] V Dc अ॑भ्यघा॒यं॑ति॑. P P[2] J ॰अ॒घा॒यंति॑ ।. We with C S[m] Cs. ४ P seems to have read शा॒म्याकः॑ at first and now to read श्या॒माकः॑. P[2] J श्या॒म्याकः॑ ।.

---

1 S′ शामाकाख्यो.

पञ्चमी ॥

अप स्तेनं वासो गोअजमुत तस्करम् ।

अथो यो अर्वतः शिरोभिधाय निनीषति ॥ ५ ॥

अप । स्तेनम् । वासः । गोऽअजम् । उत । तस्करम् ।

अथो इति । यः । अर्वतः । शिरः । अभिऽधाय । निनीषति ॥ ५ ॥

यः स्तेनः वासः वस्त्रं गोअजम् । ॥द्वन्द्वैकवद्भावः । स्फोटायनव्यतिरिक्ताचार्यमते अवङादेशाभावः । "सर्वत्र विभाषा गोः" इति विकल्पितत्वात् पूर्वरूपत्वाभावः॥ । गा अजांश्च निनीषति तं स्तेनम् अप । ॥उपसर्गश्रुतेर्योग्यक्रियाध्याहारः॥ । अपगमय । उत अपि च तस्करम् चोरम् अपसारय । अथो अपि च यस्तस्करः अर्वतः अश्वान् शिरः शिरांसि अभिधाय । ॥अभिपूर्वो दधातिर्बन्धने वर्तते । "अश्वाभिधानीम् आ दत्ते" [तै॰ सं॰ ५.१.२.१] इतिवत्॥ । रज्ज्वादिना बद्ध्वा निनीषति अपजिहीर्षति तं तस्करम् अपजहीति ॥ स्तेनतस्करयोः पर्यायत्वेपि अपहार्यद्रव्यगौरवेण पृथगपहननम् उक्तम् इति वेदितव्यम् ॥

षष्ठी ॥

यद्द्या रात्रि सुभगे विभजन्त्ययो वसु ।

यदेतदस्मान् भोजय यथेदन्यानुपायसि ॥ ६ ॥

---

१ A B̊ C D K K̊ S̊ Cs अप स्तेनं वासो गोरजंमुत (K̊ °जं उत, Cs °जंनूत). Dc अप स्तेनं वासो गोरजंमुत changed to अप स्तेनं वासो गोरजं उत. V अप स्तेनं वासो गोअजं उत and अप स्तेनं वासो गोरजंमुत. P P̊ J अपः ।, and गोरजंः । though J seems to have once read गोऽजंः । which it had corrected to गोअजंः ।. We with Sâyaṇa's text and commentary, the accents being ours. २ A B̊ C D K K̊ R S̊ V Dc Cs °भगे वि भंजंत्ययो. P P̊ J वि । भजन्ति ।. ३ A B̊ C K K̊ S̊ V Cs यथेदंनानु पायसि. D यथेदंनानुपायति. R यथेदन्यानुपायसि. Dc यथेदंन्यनुपायसि changed to यथेदं नानुपायसि. P P̊ J इदम् । न । अनुऽपायसि ।. We with Sâyaṇa, though Sâyaṇa's reading does not quite clear the passage. The original reading was probably यथेदन्याञ्चोपायति.

---

1 S′ inserts सर्वविधीनां छंदसि before विकल्पितत्वात्.

यत् । अद्य । रात्रि । सुऽभगे । विऽभजन्ति । अयः । वसु ।
यत् । एतत् । अस्मान् । भोजय । यथा । इत् । अन्यान् । उपऽअ-
यसि ॥ ६ ॥

सुभगे सौभाग्यवति भगस्य वा पत्नि हे रात्रि अद्य अस्मिन् काले यद् अयः अयोमयं वस्तु वसु कनकादिकं च विभजन्ति विश्लेषयन्ति पृथक्कुर्वन्ति अपहरन्ति । शत्रव इत्यर्थः । तद् एतत् वसु । यच्छब्दो वाक्यालंकारे । अस्मान् धनस्वामिनः भोजय तद्धनस्य भोक्तृत्वं संपादय । ॥ भुजेर्हेतुमण्णिच् ॥ । तद् धनम् अस्मभ्यम् आहरेति यावत् । यथा येन प्रकारेण । इच्छब्दः अवधारणे । अन्यान् पदार्थान् वासोगोजादीन् शत्रुभिरपहृतान् उपायसि । ॥ अयतिरत्र अन्तर्णीतण्यर्थः ॥ । उपगमयसि । ॥ इ गतौ । भौवादिकः । अयतेर्वा व्यत्ययेन परस्मैपदम् । लेटि वा अडागमः ॥ ॥

सप्तमी ॥

उषसे नः परि देहि[2] सर्वान् रात्र्यनागसः ।
उषा नो अह्ने आ भजादहस्तुभ्यं[3] विभावरि ॥ ७ ॥

उषसे । नः । परि । देहि । सर्वान् । रात्रि[4] । अनागसः ।
उषाः । नः । अह्ने । आ । भजात् । अहः । तुभ्यम् । विभावरि ॥ ७ ॥

हे रात्रि अनागसः अनपराधान् त्वद्विषये अनादरम् अनाचरतः स्तुतिकर्तॄन् सर्वान् नः पशुपुत्रमित्रादिसकलान् अस्मान् उषसे प्रभातकालाय परि देहि रक्षणार्थं प्रयच्छ । उषःकालपर्यन्तं पालयेति यावत् । उषाश्च नः अस्मान् अह्ने प्रातरादिसायाह्नकालपर्यन्ताय दिवसाय प्रकाशवते आ भजत्[1*] आभजतु । परिपालयत्विति यावत् । अहरपि उक्तलक्षणम् हे विभावरि विशेषेण भासमाने रात्रि तुभ्यं परि ददातु । एवंम्

१ P P̊ J insert आ । after अद्य ।. २ D धेहि. We with A B̊ C K K̊ R S̊ V Dc Cs.
३ B̊ भंजा°. K V भंज°. We with A C D K̊ R S̊ Dc Cs. ४ P̊ J रात्रि ।. We with P.

1 S' Sâyaṇa's text too आभजत् for our आ भंजात्. 2 S' एनम् for एवम्.

अनवरतं परस्परानुपदित्वेन आवर्तमानौ अहोरात्रौ अस्मान् शत्रुबाधापरिहारेण पशुधनादिसमेतान् कुरुताम् इति तात्पर्यार्थः ॥

[इति] षष्ठेनुवाके पञ्चमं सूक्तम् ॥

"अयुतोहम्" इति यजुर्मन्त्रात्मकं सूक्तम् । अस्य विनियोगो लिङ्गाद् अवगन्तव्यः ॥

तत्पाठस्तु ॥

अयुतोहमयुतो म आत्मायुतं मे चक्षुरयुतं मे श्रोत्रमयुतो मे प्राणोयुतो मेपानोयुतो मे व्यानोयुतोहं सर्वः ॥ १ ॥

अयुतः । अहम् । अयुतः । मे । आत्मा । अयुतम् । मे । चक्षुः । अयुतम् । मे । श्रोत्रम् । अयुतः । मे । प्राणः । अयुतः । मे । अपानः । अयुतः । मे । विऽआनः । अयुतः । अहम् । सर्वः ॥ १ ॥

देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रसूत आ रभे ॥२॥

देवस्य । त्वा । सवितुः । प्रऽसवे । अश्विनोः । बाहुऽभ्याम् । पूष्णः । हस्ताभ्याम् । प्रऽसूतः । आ । रभे ॥ २ ॥

अहं साङ्गशरीराभिमानी कर्मानुतिष्ठासुरहम् अयुतः [संपूर्णः । मे मम आत्मा जीवः अयुतः संपूर्णः] । अथ वा आत्मशब्देन शरीरम् उच्यते

आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि

इति अभिधातृभिः शरीरवाचकत्वेन प्रयुक्तत्वात् । तथा चक्षुः सर्वपदार्थविषयज्ञानसाधनं चक्षुरिन्द्रियं श्रोत्रम् वैदिकमन्त्रश्रवणसाधनं श्रवणेन्द्रियम् । प्राणः हृदयाद् आरभ्य नासिकारन्ध्रान्निर्गच्छद्वायुः प्राण इत्युच्यते । अपानः पायुद्वारान्निर्गच्छद्वायुः । अपानिति अवाङ्मुखं चेष्टत इति व्युत्पत्तेः । व्यानः प्राणापानसंधिरूपो वायुः । केचिच्छरीरवायोः प्राणादिपञ्चवृत्तित्वं समामनन्ति । अन्ये तु वृत्तित्रयवत्त्वम् । अयुतोहं सर्व इति उक्तानुक्तावयवेन्द्रियसाकल्याय उक्तम् ॥ सवितुः सर्वस्य प्रस-

१ A प्राणोयुतो मेपानोयुतो मे. २ P पुष्णः।. We with P[2] J.

1 S' कुरुमिति for कुरुताम् इति. 2 S' आत्मने for आत्मशब्देन.

वितुर्देवस्य प्रसवे अनुज्ञायाम् अश्विनोर्देवयोः अध्वर्य्वोः[1] बाहुभ्या[2] पूष्णो देवस्य हस्ताभ्याम् । अंसप्रभृतिप्रकोष्ठपर्यन्तं बाहू । तदाद्यङ्गुल्यग्रपर्यन्तौ हस्तौ इति विभागः । प्रसूतः प्रेरितः अनुज्ञातो वा त्वा त्वाम् । क्रियमाणं कर्म संबोध्यते । आ रभे उपक्रमे प्रयोक्ता अहम् । सर्वेन्द्रियसंपूर्णः सवित्रा अनुज्ञातः अश्विनोर्बाहुभ्यां[2] पूष्णश्च हस्ताभ्यां कर्मसु व्याप्रिय इत्यर्थः । ꣸ रभ राभस्ये । भौवादिकः । आत्मनेपदी । राभस्यम् उपक्रमः ꣸ ॥

[इति] षष्ठेनुवाके षष्ठं सूक्तम् ॥

"कामस्तदग्रे" इति सूक्तेन प्रतिगृह्यमाणं द्रव्यम् अभिमन्त्र्य प्रतिग्रहीता स्वीकुर्यात् । सूत्रितं हि संहिताविधौ । "क इदं कस्मा अदात् "[३.२९.७] कामस्तदग्रे [१९.५२] यदन्नं [६.७१] पुनर्मैत्विन्द्रियम् "[७.६९] इति प्रतिगृह्णाति" [कौ° ५.९] इति ॥

सवयज्ञप्रतिग्रहेपि इदं सूक्तं विनियुक्तम् । सूत्रितं हि कौशिकेन । "ददामीति नामग्राहम् उपस्पृशेत् सदक्षिणं कामस्तदग्र इत्युक्तम्" [कौ° ८.९] इति ॥

तथा दर्शस्य पूर्णमासस्य वा व्यतिक्रमे जाते आज्यहोमे शान्तसमिदाधाने[3] वा विनियुक्तम् । सूत्रितं हि । "एतेनैवामावास्यो व्याख्यातः । "ऐन्द्राग्नोत्र द्वितीयो भवति । तयोर्व्यतिक्रमे 'त्वमग्ने व्रतपा असि' [१९.५९] "'कामस्तदग्रे' [१९.५२] इति शान्ताः" इति [कौ° १.६] ॥

सौवर्णभूमिप्रतिकृतिदाने अनेन कामसूक्तेन आज्यं जुहुयात् । "अथ रोहिण्याम्" इति प्रक्रम्य उक्तं परिशिष्टे । "अन्वारभ्याथ[4] जुहुयात् कामसूक्तं कालसूक्तं पुरुषसूक्तम् इत्यथ सुवर्णमयीं भूमिम्" इत्यादि [प° १०.१]॥

तत्र प्रथमा ॥

कामस्तदग्रे समवर्तत मनसो रेतः प्रथमं यदासीत् ।
स काम कामेन बृहता सयोनी[1] रायस्पोषं यजमानाय धेहि ॥ १ ॥

१ A B^h K^m सयोनि. Dc सयोनि changed to सयोनी. We with D K S^m R V Cs.

1 S′ अध्वर्यो:. 2 S′ om. बाहुभ्यां. 3 S′ शांति°. 4 S′ om. अथ.

कामः। तत्। अग्रे। सम्। अवर्तत। मनसः। रेतः। प्रथमम्। यत्। आसीत्। सः। काम। कामेन। बृहता। सऽयोनिः। रायः। पोषम्। यजमानाय। धेहि॥ १॥

एतत् सूक्तं कामप्रतिपादकत्वात् कामसूक्तम् इति अभिधीयते। प्रलयकाले सर्वेषु जगत्सु वासनाशेषेण मायायां विलीनेषु पुनरीश्वरस्य पर्यालोचनं जगतः पुनरुत्पत्तौ कारणं तदेव किंनिबन्धनम् इति तद् आह कामस्तदग्र इति। अग्रे अस्य विकारजातस्य सृष्टेः प्रागवस्थायां परमेश्वरस्य मनसि कामः समवर्तत सम्यग् अजायत। सिसृक्षा जातेत्यर्थः। अत्र मनोव्यतिरेकेण कामनाया उत्पत्त्यसंभवात्[1] मनस्तत्त्वमपि प्रथमं मायातो जातम् इत्यर्थः। श्रूयते हि। "तद् असदेव सन्मनोऽकुरुत स्याम् इति" [इति] [तै० ब्रा० २. २. ९. १]। ईदृशस्य मनस उत्पत्तेरनन्तरं कामः समवर्ततेत्यर्थः। ईश्वरस्य सिसृक्षा किंहेतुकेत्यत आह मनस इति। मनसः अन्तःकरणस्य[2] संबन्धि वासनाशेषेण मायायां विलीने अन्तःकरणे समवेतम्। ॥सामान्यापेक्षम् एकवचनम्॥। सर्वप्राण्यन्तःकरणेषु समवेतम् इत्यर्थः। एतेन आत्मनो गुणाधारत्वं प्रत्याख्यातम्। तादृशमनःसंबन्धि रेतः भाविनः प्रपञ्चस्य बीजभूतं प्रथमम् अतीते कल्पे प्राणिभिः कृतं पुण्यापुण्यात्मकं कर्म यत् यतः कारणात् सृष्टिसमये आसीत् अभवद् भूष्णु वर्धिष्णु समजायत। परिपक्वं सत् फलोन्मुखम् आसीद् इत्यर्थः। तत् ततो हेतोः फलप्रदस्य सर्वसाक्षिणः कर्माध्यक्षस्य परमेश्वरस्य मनसि सिसृक्षाजायतेत्यर्थः। तस्यां च जातायां द्रष्टव्यं पर्यालोच्य ततः सर्वं जगत् सृजति। तथा च आम्नायते। "सोकामयत "बहु स्यां प्रजायेयेति। स तपोतप्यत। स तपस्तप्त्वा इदं सर्वम् असृजत "यद् इदं किं च" इति [तै० आ० ८. ६]। हे काम सः सर्वजगत्सर्जनार्थं परमेश्वरेण उत्पादितस्त्वं[3] बृहता महता देशकालवस्तुपरिच्छेदरहितेन कामेन कामयित्रा परमेश्वरेण। ॥कामयतेः पचाद्यच्॥। सयोनिः समानकारणः। परमेश्वरव्यतिरिक्तकारणान्तररहित इत्यर्थः। यजमानाय धनप्र-

1 S′ उत्पत्तिसंभवात्. 2 S′ अन्तकरणस्य. 3 S′ उत्पादित्वं for उत्पादितस्त्वं.

दात्रे हविःप्रदात्रे वा पुरुषाय रायो[1] धनस्य पोषम् पुष्टिं समृद्धिं धेहि स्थापय प्रयच्छ । अत्र कामो[1] जगद्विषयकामरूपत्वेन स्वफलसिद्ध्यर्थं स्तूयते ॥

द्वितीया ॥

त्वं काम सहसासि प्रतिष्ठितो विभुर्विभावा सख आ सखीयते ।
त्वमुग्रः पृतनासु सासहिः सह ओजो यजमानाय धेहि ॥ २ ॥

त्वम् । काम । सहसा । असि । प्रतिऽस्थितः । विऽभुः । विभाऽवा । सखे । आ । सखीयते ।
त्वम् । उग्रः । पृतनासु । ससहिः । सहः । ओजः । यजमानाय । धेहि ॥ २ ॥

हे काम त्वं सहसा परधर्षणसामर्थ्येन[2] प्रतिष्ठितोसि । विभुः सर्वविषयत्वाद् व्याप्तः विभावा विशेषेण दीप्यमानः । अल्पविषयत्वाभावात् । ❋ भातेः क्वनिप् ❋ । हे सखे सखिवद्धितकारिन् काम आ सखीयते अस्मान् अभिलक्ष्य सखिवद् आचरति । भवच्छब्दाध्याहारेण प्रथमपुरुषः । ❋ सखिशब्दात् "कर्तुः क्यङ् सलोपश्च" इति क्यङ् । "अकृत्सार्वधातुकयोः०" इति दीर्घः । ङित्त्वाद् आत्मनेपदम् ❋ । किं च हे काम त्वम् उग्रः उद्गूर्णः पृतनासु शत्रुसंग्रामेषु सासहिः सोढा । ❋ सहेर्यङन्तात् किप्रत्ययः ❋ । सहः शत्रुधर्षणसमर्थम् ओजः बलं यजमानाय यष्ट्रे जनाय धेहि विधेहि प्रयच्छ ॥

तृतीया ॥

दूराच्चकमानाय प्रतिपाणायाक्षये ।

---

१ K S^m V सखीयते. Dc सखआ सखीयते changed to सख आ सखीयते. We with B^h C D R Cs. २ P P^2 J विऽभौ । आऽसखे ।. We with Sâyaṇa. The original reading probably was simply सखा सखीयते for सख आ सखीयते. ३ P P^2 सखीयते ।. We with J. ४ A प्रतिपाणायाक्षये corrected to प्रविपाणायाक्षये. B^h R प्रविपाणायाक्षये ।. C प्रतिपाणायाक्षये. D प्ररिपाणायाक्षये. K K^m S^m प्रविपाणायाक्षये. Dc प्रविपाणायाक्षये. Cs प्ररिपाणायाक्षये. P प्रतिऽपानाय । आऽक्षये ।. P^2 प्रविऽपानाय । आऽक्षये ।. J प्रतिऽपानाय । आऽक्षये ।. With अक्षये (from अक्षि) conf. अक्ष्योः, VI 24. 2.

---

1 S' om. from °यो up to कामो both inclusive. 2 S' पराधर्षण°.

आस्मा अशृण्वन्नाशाः कामेनाजनयन्त्स्वः ॥ ३ ॥

दूरात् । चकमानाय । प्रतिऽपानाय । अक्षये ।

आ । अस्मै । अशृण्वन् । आशाः । कामेन । अजनयन् । स्वः ॥ ३ ॥

दूरात् दूरविषयम् अत्यन्तदुर्लभं फलं चकमानाय कामयमानाय । कमेर्लिटः कानच् । "आयादय आर्धधातुके वा" इति णिङभावः । अस्मै जनाय प्रतिपाणाय सर्वतोरक्षणाय अभिमतफलप्रापणाय अक्षये क्षयराहित्ये निमित्ते अनिष्टनिवृत्तये च आशाः दिशः सर्वाः प्राच्यादयः आशृण्वन् आश्रवणं फलं प्रदातुम् अङ्गीकरणं कृतवत्यः । "प्रत्याङ्भ्यां श्रुवः०" इति अस्मा इत्यत्र संप्रदानत्वाच्चतुर्थी । न केवलं प्रतिश्रवणं किं तु कामेन अभिमतफलविषयेण स्वः । सुखनामैतत् । सुखम् अजनयन् उदपादयन् ॥

चतुर्थी ॥

कामेन मा काम आगन् हृदयाद्धृदयं परि ।

यदमीषामदो मनस्तदैतूप मामिह ॥ ४ ॥[1]

कामेन । मा । कामः । आ । अगन् । हृदयात् । हृदयम् । परि ।

यत् । अमीषाम् । अदः । मनः । तत् । आ । एतु । उप । माम् । इह ॥४॥

कामेन फलविषयया इच्छया कामः काम्यमानं फलं मा माम् आ अगन् आगच्छतु । गमेर्लुङि म्लेर्लुकि मकारस्य नकारः । कामनाया मनोमूलत्वात् तन्मनः संपादयति । पूर्वं जगत्सृष्ट्यर्थं ब्रह्मणा उत्पादिता जगत्सृष्टिविषये कामयितारो नव ब्रह्माणः अमीषाम् इत्यदःशब्देन विवक्ष्यन्ते । तेषां विप्रकृष्टानां ब्रह्मणां यद् अदो मनः अस्तित्वभावनानिमित्तं तत् हृदयात् । प्रत्येकविवक्षया एकवचनम् । हृदयेभ्यः हृदयम् मदीयं हृदयप्रदेशं परि अभिलक्ष्य । लक्षणादिष्वर्थेषु परिः कर्मप्रवचनीयः । तत् तदीयं सर्वविषयं मनः इह अस्मिन् फलकामे मां कामयितारम् उपैतु उपगच्छतु ॥

[1] A B$^{h}$ C K K$^{m}$ S$^{m}$ V D$^{c}$ C$^{s}$ °तदैतूप. D °तदैतू उप. P P$^{2}$ J उपऽमाम् ।. We with R.

पञ्चमी ॥

यत्काम कामयमाना इदं कृण्मसि ते हविः ।
तन्नः सर्वं समृध्यतामथैतस्य हविषो वीहि स्वाहा ॥ ५ ॥

यत् । कामे । कामयमानाः । इदम् । कृण्मसि । ते । हविः ।
तत् । नः । सर्वम् । सम् । ऋध्यताम् । अथ । एतस्य । हविषः । वीहि ।
स्वाहा ॥ ५ ॥

हे काम वयं यत् फलं कामयमानाः सन्तः ते त्वदर्थम् इदम् इदानीं दीयमानं हविः चरुपुरोडाशादिकं कृण्मसि कुर्मः प्रयच्छामः । "लोपश्चास्यान्यतरस्यां म्वोः" इति उमत्ययस्य लोपः । अथ अनन्तरम् एतस्य मत्तस्य हविषः । "क्रियाग्रहणं कर्तव्यम्" इति कर्मणः संप्रदानत्वाच्चतुर्थी । चतुर्थ्यर्थे षष्ठी । हविषो भागं वा वीहि भक्षय स्वाहा इदं हविः सुहुतम् अस्तु । वी गतिप्रजनकान्त्यसन[1]खादनेषु । आदादिकः । तत् काम्यमानं नः अस्मदीयं सर्वं फलं समृध्यताम् समृद्धं संपूर्णं भवतु ॥

[इति] षष्ठेनुवाके सप्तमं सूक्तम् ॥

"कालो अश्वो वहति" इति सूक्तद्वयस्य सौवर्णभूमिदाने आज्यहोमे विनियोगः । उक्तं हि परिशिष्टे । "अन्वारभ्याथ जुहुयात् कामसूक्तं कालसूक्तं पुरुषसूक्तम्" इति [प० १०, १] । कालप्रतिपादकत्वात् कालसूक्तम् इत्युच्यते ॥

तत्र प्रथमा ॥

कालो अश्वो वहति सप्तरश्मिः सहस्राक्षो अजरो भूरिरेताः ।
तमा रोहन्ति कवयो विपश्चितस्तस्य चक्रा भुवनानि विश्वा ॥ १ ॥

कालः । अश्वः । वहति । सप्तऽरश्मिः । सहस्रऽअक्षः । अजरः । भूरिऽरेताः ।

१ A B C D R S Cs कृण्मसि. K V Dc कृण्मसि. P P J कृण्मसि ।. None of our authorities give the correct accent. २ P P J यत्ऽकामः ।. We with Sâyaṇa.

1 S' °कांत्यशन° for °कान्त्यसन°.

तम् । आ । रोहन्ति । कवयः । विपःऽचितः । तस्य । चक्रा । भुवनानि । विश्वा ॥ १ ॥

[1]अनेन सूक्तद्वयेन सर्वजगत्कारणभूतः कालरूपः परमात्मा स्तूयते । तत्र प्रथमया कालोऽश्वात्मना रूप्यते । सप्तरश्मिः [सप्त]संख्याका रश्मयो रज्जवो मुखग्रीवापादाव[2]बद्धा यस्य सः सहस्राक्षः सहस्रलोचनः अजरः जरारहितः नित्ययुवा भूरिरेताः । रेतः शु[3]क्ररूपः सप्तमो धातुः । प्रभूतवीर्यः रेतःसेचनसमर्थः अपत्योत्पादनशक्तः कालः कलयिता अश्वो वहति स्वा[4]रोहकान् अभिमतं प्रदेशं प्रापयति । तम् अश्वं विपश्चितः अश्वारोहणावरोहणादिषु कुशला अश्वशास्त्रनिष्णाताः कवयो धीमन्तः आ रोहन्ति । तस्य अश्वस्य चक्रा चक्राणि । चङ्क्रमणाच्चक्रम् इति यास्कः [नि°४.२७] । गन्तव्यानि स्थानानि विश्वा विश्वानि भुवनानि । इति अश्व[5]पक्षेर्थः ॥ विवक्षितस्तु । अश्वः अश्नुते व्याप्नोति भूतभविष्यद्वर्तमानकालवर्तीनि वस्तूनीति अश्वः । कालः कलयिता सर्वस्य जगतः अनवच्छिन्नकालरूपः परमेश्वरः । सप्तरश्मिः । रश्मिशब्देन ऋतव उच्यन्ते । सप्तर्तुः एकैक ऋतुर्मासद्वयात्मकः सप्तमस्तु त्रयोदशो मासः । तथा च दाशतय्याम् आम्नायते । "साकंजानां सप्तथम् आहुरेकजं षळिद्यमा ऋषयो देवजा इति" इति [ऋ°१.१६४.१५] । अत्रापि समाम्नातं प्राक् [९.१४.१६] । सहस्राक्षः । अत्र अक्षिशब्देन दिनानि रात्रयश्च उच्यन्ते । सहस्रसंख्याकाहोरात्रयुक्तः । अजरः जरारहितः सर्वदा एकरूपः । भूरिरेताः प्रभूतजगत्सर्जनसमर्थशक्तिसंपन्नः । एवंरूपः कालो वहति प्राणिजातं स्वस्वकर्मसु प्रापयति । तं कालं कवयः क्रान्तदर्शिनो विपश्चितः विद्वांसः आ रोहन्ति स्वाधीनं कुर्वन्ति । स्वाधीनकाला भवन्तीत्यर्थः । तस्य कालात्मकस्य रथस्य चक्रा चक्राणि विश्वा विश्वानि भुवनानि भूतजातानि । लोकान् अभिगच्छन्तीति शेषः ॥ अथ वा अश्वशब्देन आदित्य उच्यते । तथा च यास्कः । "ए[6]को अश्वो वहति सप्तनामा । आदित्यः । [7]सप्तास्मै र[7]श्मयो रसान् अ-

1 S′ has अस्मिन् before अनेन. 2 S′ °पादाबद्धा. 3 S′ शुक्ल°. 4 S′ श्वारोहकान्. 5 S′ अश्वक्षेर्थः. 6 So S′. 7 S′ सप्तादित्यस्य रश्मयो for सप्तास्मै रश्मयो.

भिसंनामयन्ति सप्तैनम् ऋषय स्तुवन्तीति वा” इति [नि° ४.२७]। कालात्मकोश्वः सूर्यः सप्त रश्मयः प्रधानभूता यस्य। ते चैव सप्त सूर्या इत्युच्यन्ते। “देवा आदित्या ये सप्त तेभिः सोमाभि रक्ष नः” इति निगमः [ऋ° ९.११४.३]। तेषां च नामानि तैत्तिरीया अधीयते। “आरोगो भ्राजः पटरः पतङ्गः[1] स्वर्णरो ज्योतिषीमान् विभासः” इति [तै° आ° १.७.१]। असौ तु प्रधानभूतः कश्यपाख्य[2] आदित्यः। “कश्यपोष्टमः स महामेरुं न जहाति” इति श्रुतेः [तै° आ° १.७.१]। यद्वा रश्मिशब्देन च्छन्दांस्यभिधीयन्ते। गायत्र्यादीनि च्छन्दांसि यस्य। तथा च निगमः। “ऋग्भिः पूर्वाह्णे दिवि देव ईयते। यजुर्वेदे तिष्ठति मध्ये अह्नः। सामवेदेनास्तमये महीयते। वेदैरशून्यस्त्रिभिरेति सूर्यः[3]” इति [तै° ब्रा° ३.१२.९.१]। यद्वा रश्मिमन्तोऽश्वा रश्मिशब्देन उच्यन्ते। ॥मत्वर्थीयस्य लोपः॥। सप्ताश्वः। “सप्त युञ्जन्ति रथम् एकचक्रम्” इति निगमः [९.१४.२]। सहस्राक्षः अक्षिवद् अक्षीणि किरणाः सहस्रकिरणोपेतः अजरः अविनश्वरो नित्यः भूरिरेताः। उदकवाची रेतःशब्दः। “यदा खलु वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्ततेथ वर्षति” इति श्रुतिः [तै° सं° २.४.१०.२]। एवंरूप आदित्यो वहति कालचक्रं धारयति। तं कालात्मकं सूर्यं विद्वांसः अधिगतपरमार्थाः आ रोहन्ति सूर्यमण्डलं भित्वा उपगच्छन्ति।

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः॥

इति स्मृतेः। यद्वा स्वात्मभावेन अधितिष्ठन्ति। अत एव आदित्यं पुरुषं प्रकृत्य श्रूयते। “तद् योहं सोसौ योसौ सोहं तद् उक्तम् ऋषिणा सूर्य आत्मा जगतस्तस्थुषश्च” इति [ऐ° आ° २.२.४]। तस्य सूर्यस्य चक्रा चक्राणि चङ्क्रमणानि व्याप्तिस्थानानि सर्वाणि जगन्तीति॥

द्वितीया॥

सप्त चक्रान् वहति काल एष सप्तास्य नाभीरमृतं न्वक्षः।

1 S′ पतंगाः. 2 S′ कश्यपस्या आदित्यः. 3 S′ शून्यः.

स इमा विश्वा भुवनान्यञ्जत् कालः स ईयते प्रथमो नु देवः ॥ २ ॥

सप्त । चक्रान् । वहति । कालः । एषः । सप्त । अस्य । नाभीः । अमृतम् । नु । अक्षः ।

सः । इमा । विश्वा । भुवनानि । अञ्जत् । कालः । सः । ईयते । प्रथमः । नु । देवः ॥ २ ॥

अनया संवत्सररूपकालचक्रं वर्ण्यते । तस्य संवत्सरकालस्य चक्राणि एकं त्रीणि पञ्च षट् सप्त द्वादशेति तत्रतत्र आम्नायते । "सप्त युञ्जन्ति रथम् एकचक्रम्" [९.१४.२] "त्रिनाभि चक्रम्" [९.१४.२] "सप्तचक्रे षडरे" [९.१४.१२] "द्वादशारम्" [९.१४.१३] इत्यादिषु । तथा च शौनकोप्याह ।

त्रिधा द्वादशधा षोढा पञ्चधा सप्तधा तथा ।
संवत्सरं चक्रवच्च पराभिः कीर्तयत्यृषिः ।

इति [बृ० ४.३२] ॥ एष सर्वजगत्कारणत्वेन अनुभूयमानः कालः परमात्मा सप्त चक्रा* चक्राणि सप्त ऋतून् अनु[1*] अनुक्रमेण वहति धारयति । अस्य संवत्सरस्य सप्त[2] नाभीः नाभयः । नह्यते नाभिः । अक्षबन्धकानि मध्यच्छिद्राणि सप्त ऋतुसंधिकालाः । अस्य अक्षः तनु[3*] संततं सूक्ष्मम् अमृतम् अमरणधर्मकम् अविनश्वरं तत्त्वम् । सप्तचक्रच्छिद्रेषु प्रोतः अनुस्यूतो[4]ऽक्षः सत्यम् अबाध्यं तत्त्वम् । सः पूर्वोक्तसंवत्सररूपः प्रथमः सर्वस्य आदिभूतो देवः द्योतमानः नित्यज्ञानरूपः कालः परमात्मा इमा इमानि नामरूपात्मना व्याकृतानि विश्वा विश्वानि भुवनानि भवनवन्ति चराचरात्मकानि जगन्ति अञ्जत् अञ्जन् । ⌛अनक्तेः शतरि* "अनित्यम् आगमशासनम्" इति नुमभावः⌛ । व्यक्तीकुर्वन् स्वेन

१ K^m S^m V Dc °न्यंजत्कालः, which they ought to read °न्यंजन्कालः. See the padas. We with A B^h C D R Cs. २ P J अंजत् ।. We with P^2.

1 Sâyaṇa's text reads सप्त चक्रानुवहति for सप्त चक्रान् वहति. 2 S′ स्तनीभिः for सप्त नाभीः. 3 Sâyaṇa's reading is अमृतं तन्वक्षः. 4 S′ has a lacuna of about fifteen letters between °स्यूतो and ऽक्षः.

कालेन अवच्छिन्नानि कुर्वन् उत्पादयन् सः स्यति संहरतीति सः। [षो अन्तकर्मणि। कर्तरि कप्रत्ययः। आतो लोपः]। संहरंश्च ईयते गच्छति व्याप्नोति सर्वम् आवृत्य वर्तते। [ईङ् गतौ। दैवादिकः]। नुशब्दः[1] प्रसिद्धौ॥ यद्वा अध्यात्मपरत्वेन योज्यः। कालः कलयिता सर्वेन्द्रियव्यापारकर्ता शरीराभिमानी देवः। बन्धकाः विषया रूपादयः। तनुं सूक्ष्मं दुर्दर्शम्। अमृतम् चैतन्यम्। अक्षः सर्वेन्द्रियेषु तद्विषयेषु च अनुगतः। एवं सर्वाणि प्राणिजातानि अञ्जत्[2] प्रेरयन् ईयते। सः उपसंहरंश्च स कालः ईयते तत्त्वज्ञैर्ज्ञायते। [इण् गतौ। कर्मणि यक् प्रत्ययः]॥

तृतीया॥

पूर्णः कुम्भोऽधि काल आहितस्तं वै पश्यामो बहुधा नु सन्तः।
स इमा विश्वा भुवनानि प्रत्यङ् कालं तमाहुः परमे व्योमन्॥ ३॥

पूर्णः। कुम्भः। अधि। काले। आऽहितः। तम्। वै। पश्यामः। बहुऽधा। नु। सन्तः।
सः। इमा। विश्वा। भुवनानि। प्रत्यङ्। कालम्। तम्। आहुः। परमे। विऽओमन्॥ ३॥

काले सर्वजगत्कारणभूते नित्ये अनवच्छिन्ने परमात्मनि स्वस्वरूपे। [अधिशब्दः सप्तम्यर्थानुवादी]। पूर्णः सर्वत्र व्याप्तः कुम्भः कुम्भवत् कुम्भः अहोरात्रमासर्तुसंवत्सरादिरूपः अवच्छिन्नो जन्यः कालः आहितः निहितो वर्तते। सर्वस्य कार्यस्य स्वकारणेऽवस्थानात्। अत्र विद्वदनुभवश्रुतिं[3] प्रमाणयति। तं जन्यं कालं सन्तः सत्पुरुषा बहुधा नानाप्रकारम् अहोरात्रादिभेदेन पश्यामो नु अनुभवामः खलु। अथवा तं जन्यकालाधारं परमात्मानं बहुधा बहुभिः श्रवणमनननिदिध्यासनैः पश्यामः साक्षात्कुर्मः। सन्तः सद्रूपब्रह्मोपासका वयम्। "अस्ति ब्रह्मेति चेद् वेद सन्तम् एनं ततो विदुः" इति हि श्रुतिः [तै॰ आ॰ ८, ६]। वैनु-

1 S' उशब्दः. 2 S' अंजन्. 3 S' विद्वदनुभवं श्रुतिः प्रमाणयति.

शब्दौ प्रसिद्ध्यर्थौ। स कालः इमा इमानि परिदृश्यमानानि विश्वा विश्वानि व्याप्तानि भुवनानि भूतजातानि प्रत्यङ् प्रत्यञ्चनः अभिमुखाञ्चनः आव्याप्नुवन्[1] भवति। तं कालं परमे उत्कृष्टे सांसारिकसुखदुःखादिद्वन्द्वदोषरहिते व्योमन् व्योमनि आकाशवन्निर्लेपे[2] सर्वगते विविधं रक्षके परमानन्दप्रदायके स्वस्वरूपे वर्तमानम् आहुः विद्वांसः। ♅ व्योमन्निति। "सुपां सुलुक्°" इति सप्तम्या लुक्। "न ङिसंबुद्ध्योः" इति नलोपप्रतिषेधः ♅॥

चतुर्थी॥

स एव सं भुवनान्याभरत् स एव सं भुवनानि पर्यैत्।
पिता सन्नभवत् पुत्र एषां[1] तस्माद् वै नान्यत् परमस्ति[2] तेजः॥ ४॥

सः। एव। सम्[3]। भुवनानि। आ। अभरत्। सः। एव। सम्। भुवनानि। परि। ऐत्।
पिता। सन्। अभवत्। पुत्रः। एषाम्। तस्मात्। वै। न। अन्यत्। परम्। अस्ति[2]। तेजः॥ ४॥

स एव कालः भुवनानि भूतजातानि [सम्] आ अभरत् आहरत् आहरति उत्पादयति। ♅ "हृग्रहोर्भः°" ♅। यद्वा। ♅ [भृञ्] भरणे। भौवादिकः ♅। स्वेनोत्पादितानि भुवनानि समन्तात् पुष्णाति। स एव कालः भुवनानि सं पर्यैत् सम्यक् परिगच्छति व्याप्नोति। ♅ इण् गतौ। छान्दसे लङि[3] "आडजादीनाम्" इति आडागमः। "आटश्च" इति वृद्धिः ♅। स एव पिता एषां भुवनानां जनकः सन् एषां पुत्रोभवत् भवति। काल एव पितृत्वेन पुत्रत्वेन[4] च व्यवह्रियते। यः पूर्वजन्मनि पितृत्वेन जातः स एव अस्मिन् जन्मनि पुत्रत्वेन[5] व्यवह्रियते अवच्छेदककालाधीनत्वात् सर्वस्य। अथ वा

१ C D एषां. We with A B^h K^m R S^m V Dc Cs. २ A C D नान्यत्पर°. B^h S^m नान्यत्पर°. Cs नान्यत्पर°. J अस्ति।. We with K K^m R V Dc P P^2. ३ P सन्।. We with P^2 J.

1 S′ अव्याप्नुवन्. 2 S′ व्योम आकाश° for आकाश°. 3 S′ लुङि. 4 S′ पितृत्वेन. 5 S′ has सएव again before पुत्रत्वेन.

एकस्मिन् जन्मन्येव पितुः पुत्रत्वम् आम्नायते । "अङ्गाद् अङ्गात् संभ-
"वसि हृदयाद् अधि जायसे । आत्मा वै पुत्रनामासि स जीव शरदः
"शतम्" इति [कौ॰ उ॰ २, ११] । तस्मात् सर्वोत्पादकात् सर्वगतात्
पुत्रादिरूपेण भविष्यतश्च तस्मात् कालाद् अन्यत् परम् उत्कृष्टं तेजो
नास्ति । वैशब्दः प्रसिद्धौ । तेजो नास्तीति निषेधात् स्वस्यापि तेजोरू-
पत्वम् अर्थसिद्धम् । "तस्य भासा सर्वम् इदं विभाति" इति श्रुतेः ।
[क॰ व॰ ५, १५] ॥

पञ्चमी ॥

कालोऽमूं[1] दिवमजनयत् काल इमाः पृथिवीरुत ।
काले ह भूतं भव्यं चेषितं ह[2] वि तिष्ठते ॥ ५ ॥

कालः । अमूम्[1] । दिवम् । अजनयत् । कालः । इमाः । पृथिवीः । उत ।
काले । ह । भूतम् । भव्यम् । च । इषितम् । ह[2] । वि । तिष्ठते ॥ ५ ॥

कालः परमात्मा अमूं विप्रकृष्टां दिवम् द्युलोकम् अजनयत् उत्पादि-
तवान् । उत अपि च इमाः परिदृश्यमानाः सर्वप्राण्याधारभूताः[1] पृथि-
वीः । व्यत्ययेन बहुवचनं कक्ष्याभेदेन वा । तथा च मन्त्रवर्णः । "यद्
इन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्याम् उत स्थः" इति
[ऋ॰ १, १०८, ९] । तथा । हशब्दः एवार्थे । काल एव भूतम् भूत-
काले आधारे अवच्छिन्नं भव्यम् भविष्यच्च इषितम् इष्टम् इष्यमाणं वर्त-
मानकालावच्छिन्नं च जगद् वि तिष्ठते विशेषेण आश्रितं वर्तते । ✠ "स-
मवप्रविभ्यः स्थः" इत्यात्मनेपदम् ✠ ॥

षष्ठी ।

कालो भूतिमसृजत काले तपति सूर्यः ।
काले ह विश्वा भूतानि काले चक्षुर्वि पश्यति ॥ ६ ॥

---

१ A B^h C D R V कालोमुं. Dc कालोमु changed to कालोमूं. Cs कालोमु. P P^2 J अ-
मुम् ।. We with K K^m S^m V. २ A B^h C D K K^m R S^m Dc Cs हविस्तिष्ठते for ह वि तिष्ठते.
P P^2 J हविः । तिष्ठते ।. We with Sâyaṇa.

---

1 S' सर्वप्राणा° for सर्वप्राण्या°.

कालः । भूतिम् । असृजत । काले । तपति । सूर्यः ।
काले । ह । विश्वा । भूतानि । काले । चक्षुः । वि । पश्यति ॥ ६ ॥

कालः कालरूपः परमात्मा भूतिम् भवनवज्जगद् असृजत[1] । सृज विसर्गे । तौदादिकः । व्यत्ययेन आत्मनेपदम्[2] । दैवादिकाद् वा आत्मनेपदिनो व्यत्ययेन शः । काले प्रेरके सति सूर्यः आदित्यः तपति जगत् प्रकाशयति । काल एव आश्रये [विश्वा] विश्वानि भूतानि वर्तन्ते । काले चक्षुः । उपलक्षणम् एतत् । चक्षुरादीन्द्रियाणि वि पश्यति । इदमपि उपलक्षणम् । दर्शनादिकर्माणि कुर्वन्ति । यद्वा चक्षुः । चक्षुःशब्दो[3] लुप्तमत्वर्थीयः[3] । चक्षुष्मान् सर्वेन्द्रियाधिष्ठाता वि पश्यति स्वस्वेन्द्रियव्यापारं करोति ॥

सप्तमी ॥

काले मनः काले प्राणः काले नाम समाहितम् ।
कालेन सर्वा नन्दन्त्यागतेन प्रजा इमाः ॥ ७ ॥

काले । मनः । काले । प्राणः । काले । नाम । सम्ऽआहितम् ।
कालेन । सर्वाः । नन्दन्ति । आऽगतेन । प्रऽजाः । इमाः ॥ ७ ॥

काले परमात्मनि मनः जगत्सिसृक्षानिमित्तभूतं मनो वर्तते । तस्मिन्नेव प्राणः सूत्रात्मा सर्वजगदन्तर्यामी वर्तते । अन्तर्यमनोपाधिकत्वेन काले वर्तत इति आधारव्यपदेशः । यद्वा मनः । जात्येकवचनम् । सर्वेषां प्राणिनां मनांसि । प्राणः पञ्चवृत्तिकः[4] प्राणा अपि परमात्मन्येव वर्तन्ते । तथा नाम नामधेयं सर्वेषां वस्तूनां संज्ञा अपि तत्रैव समाहितम् । स्त्रीपुरुषादिसंज्ञाभिः काल एव उच्यत इत्यर्थः । यद्वा सर्वेषां रूपाणि कृत्वा[5] तेषां[5] नामान्यपि स्वयमेव व्यवहरतीत्येतदभिप्रायेण काले नाम समाहितम् इत्युक्तम् । "[सर्वाणि रूपाणि] विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते" इति हि श्रुतिः [तै॰आ॰३.१२.७] ।

1 S' असृजत्. 2 S' परस्मै° for आत्मने°. 3 S' चक्षुर्लुप्त° for चक्षुःशब्दो लुप्त°. 4 S' पञ्चवृत्तिकाः. 5 S' कृतत्वातेषां.

कालेन वसन्तादिरूपेण आगतेन सर्वा इमाः प्रजाः नन्दन्ति संतुष्यन्ति स्वस्वकार्यसिद्धेः ॥

अष्टमी ॥

काले तपः काले ज्येष्ठं काले ब्रह्म समाहितम् ।

कालो ह सर्वस्येश्वरो यः पितासीत् प्रजापतेः ॥ ८ ॥

काले । तपः । काले । ज्येष्ठम् । काले । ब्रह्म । सम्ऽआहितम् ।

कालः । ह । सर्वस्य । ईश्वरः । यः । पिता । आसीत्[1] । प्रजाऽपतेः ॥ ८ ॥

काले परमात्मनि तपः जगत्सर्जनविषयं पर्यालोचनम् । तप पर्यालोचने । अस्माद् असुन् । "तपसा चीयते ब्रह्म" [मु० १. १. ८] इत्यादौ तपःशब्दः पर्यालोचनार्थत्वेन व्याख्यातः । तथा ज्येष्ठम् सर्वस्य आदिभूतं हिरण्यगर्भाख्यं तत्त्वं वर्तते । तथा ब्रह्म साङ्गो वेदस्तत्प्रतिपादकः समाहितम् सम्यगाहितः । यद्वा तपः कृच्छ्रचान्द्रायणादिकम् । तत्फलप्रदातृत्वात् तत्रैव वर्तनम् । एकः कालशब्दो यौगिकः कलयितरि काले ज्येष्ठं ब्रह्म हिरण्याख्यम् । "ज्येष्ठं ब्रह्म श्रेष्ठं ब्रह्म" इति हि श्रुत्यन्तरम् । हशब्दः अवधारणे । कालः सर्वस्य जगत ईश्वरः स्वामी । यः कालः प्रजापतेः प्रजानां स्रष्टुश्चतुर्मुखस्य ब्रह्मणः पिता जनक आसीत् ॥

नवमी ॥

तेनेषितं तेन[2] जातं तदु तस्मिन् प्रतिष्ठितम् ।

कालो ह ब्रह्म भूत्वा बिभर्ति परमेष्ठिनम् ॥ ९ ॥

तेन । इषितम् । तेन । जातम् । तत् । ऊं इति । तस्मिन् । प्रतिऽस्थितम् ।

कालः । ह । ब्रह्म । भूत्वा । बिभर्ति । परमेऽस्थिनम् ॥ ९ ॥

तेन कालेन इषितम् इष्टं सर्वं स्रष्टव्यं जगत् । कामितम् इत्यर्थः । "तीषुसह०" इति इडागमः । तेनैव जातम् उ-

१ P P² आसीत् ।. We with J. २ A S^m तेन. We with B^h K K^m R V Dc Cs.

त्यादितं जगत्। तत् तज्जगत्। उशब्दः अवधारणे। तस्मिन्नेव काले प्रतिष्ठितम्। कालो ह काल एव ब्रह्म देशकालावच्छिन्नं सच्चित्सुखयि[1]तृरसम् अबाध्यं परमार्थतत्त्वं भूत्वा परमेष्ठिनम् परमे स्थाने सत्यलोके तिष्ठन्तं चतुर्मुखब्रह्माणं [बिभर्ति ॥

दशमी ॥

कालः प्रजा असृजत कालो अग्रे प्रजापतिम्।
स्वयंभूः कश्यपः कालात् तपः कालादजायत ॥ १० ॥

कालः। प्रऽजाः। असृजत। कालः। अग्रे। प्रजाऽपतिम्।
स्वयम्ऽभूः। कश्यपः। कालात्। तपः। कालात्। अजायत ॥ १० ॥

काल[2]ः अग्रे सृष्ट्यादौ प्रजापतिम् ब्रह्माणम् असृजत उदपादयत्। कालः] प्रजाश्च असृजत। स्वयंभूः स्वयम् आत्मना भवतीति स्वयंभूः। कालव्यतिरिक्तकालान्तरनिषे[3]धकः स्वयंशब्दः। कश्यपः आरोगभ्राजादिसप्तसूर्यापेक्षया अष्टमः सूर्यः। "कश्यपोष्टमः स महामेरुं न जहाति" इति श्रुत्यन्तरम् [तै० आ० १. ७. १] उदाहृतम् [१]। ※कश्यपशब्दनिर्वचनं या[4]स्केन एवं कृतम्। कश्यपः पश्यको भवति यत् सर्वं परिपश्यतीति सौक्ष्म्यात्" इति [तै० आ० १. ८. ८]※। तादृशः सर्वस्य द्रष्टा सूर्यः तपः संतापकं तेजश्च कालाद् अजायत ॥

[इति] षष्ठेनुवाके अष्टमं सूक्तम् ॥

"कालादापः" इति सूक्तं कालप्रतिपादकत्वात् कालसूक्तम् इत्युच्यते। तस्य पूर्वसूक्तेन सह उक्तो विनियोगः ॥

तत्र प्रथमा ॥

कालादापः समभवन्[1] कालाद् ब्रह्म तपो दिशः।
कालेनोदेति सूर्यः काले नि विशते पुनः ॥ १ ॥

१ A B^h C D K K^m S^m V Dc समभवत्. P P^2 J Cp अभवत्। We with R Cs and Sâyaṇa's text.

1 S′ °सुखयित° for °सुखयितृ°. 2 S′ omits from here to कालः in the commentary on the next verse. 3 S′ निषेधायकः. 4 So S′.

कालात् । आपः । सम् । अभवन् । कालात् । ब्रह्म । तपः । दिशः ।
कालेन । उत् । एति । सूर्यः । काले । नि । विशते । पुनः ॥ १ ॥

कालात् सर्वजगत्कारणात् परमात्मनः सकाशाद् आपः ब्रह्माण्डाधारभूताः समभवन् । स्मर्यते हि ।

अप एव ससर्जादौ तासु वीर्यम् अवाकिरत्[1] ।
तद् अण्डम् अभवद्धैमम्

इति [म० स्मृ० १.९] । व्रततपः[2] व्रतम् । कर्मनामैतत् । यज्ञादि कर्म । तपः कृच्छ्रचान्द्रायणादिकम् । द्वन्द्वैकवद्भावः । यद्वा व्रततप इति पञ्चमी । जगत्सर्जनकर्मणे तप्यमानात् कालाद् दिशः प्राच्याद्याः समभवन् । कालेन प्रेरकेण सूर्य उदेति उदयं गच्छति । "भीषास्माद् वातः पवते । भीषोदेति सूर्यः" इति हि निगमः [तै० आ० ८.८] । पुनः सूर्यः काले नि विशते विलीयते । अस्तम् एतीत्यर्थः । "नेर्विशः" इति आत्मनेपदम् ॥

कालेन वातः पवते कालेन पृथिवी मही ।
द्यौर्मही काल आहिता ॥ २ ॥

कालेन । वातः । पवते । कालेन । पृथिवी । मही ।
द्यौः । मही । काले । आऽहिता ॥ २ ॥

कालो ह[१] भूतं भव्यं च पुत्रो अजनयत् पुरा[२] ।
कालादृचः समभवन्[३] यजुः कालादजायत ॥ ३ ॥

कालः । ह । भूतम् । भव्यम् । च । पुत्रः । अजनयत् । पुरा ।
कालात् । ऋचः । सम् । अभवन् । यजुः । कालात् । अजायत ॥ ३ ॥

१ A B^h K K^m V Dc काले ह. We with C D R S^m Cs P P^2 J Cp कालो ह. २ A B C D K K^m R S^m V Dc अजनयत्पुरः. Cs अजनयत्पुरा. P P^2 J पुरः।. The correction was first made by Rw. ३ D R S^m °भवद्यजुः. Dc °भवन्यजुः changed to °भवद्यजुः. P^2 अभवत्।. We with A B^h C K K^m V Cs P J Cp.

1 S' अपाकरत्. 2 Sâyaṇa's text too reads : व्रततपो for ब्रह्म तपो.

कालो यज्ञं समैरयद्देवेभ्यो भागमक्षितम्।
काले गन्धर्वाप्सरसः काले लोकाः प्रतिष्ठिताः ॥ ४ ॥

कालः। यज्ञम्। सम्। ऐरयत्। देवेभ्यः। भागम्। अक्षितम्।
काले। गन्धर्वऽअप्सरसः। काले। लोकाः। प्रतिऽस्थिताः ॥ ४ ॥

कालेयमङ्गिरा देवोऽथर्वा चाधि तिष्ठतः।
इमं च लोकं परमं च लोकं पुण्यांश्च लोकान् विधृतीश्च पुण्याः।
सर्वांल्लोकानभिजित्य ब्रह्मणा कालः स ईयते परमो नु देवः ॥ ५ ॥

काले। अयम्। अङ्गिराः। देवः। अथर्वा। च। अधि। तिष्ठतः।
इमम्। च। लोकम्। परमम्। च। लोकम्। पुण्यान्। च। लोकान्।
विऽधृतीः। च। पुण्याः।
सर्वान्। लोकान्। अभिऽजित्य। ब्रह्मणा। कालः। सः। ईयते। परमः।
नु। देवः ॥ ५ ॥

द्वितीया ॥ कालेन प्रेरयित्रा परमात्मना वातो वायुः पवते। पवतिर्गतिकर्मा। सर्वदा वाति। "भीषास्माद् वातः पवते" इति श्रुतिरुदाहृता [१]। तेनैव मही महती पृथिवी आहिता दृढं स्थापिता वर्तते। मही महती द्यौश्च काले आधारे आहिता निहिता स्थापिता। कालेनैव[1] पित्रा प्रेरकेण पुत्रः प्रजापतिः भूतम् भूतकालावच्छिन्नं भव्यम् भविष्यत्कालावच्छिन्नम्। चशब्दः अनुक्तसमुच्चयार्थः। वर्तमानं पुरस्तात् पूर्वम् अजनयत् उत्पादितवान् ॥

तृतीया ॥ कालात् परमात्मनः ऋचः पादबद्धा मन्त्राः समभवन्।

१ A B[h] C D K K[m] R S[m] V Dc Cs P[2] J Cp °रयन्देवेभ्यो. P corrects ऐरयन्। to ऐरयत्।. We with Sâyaṇa and his text. २ A R गन्धर्वा अप्सरसः. B[h] C गन्धर्वाप्सरसः. We with D K K[m] S[m] V Dc P P[2] J Cp. ३ A B[h] C D K K[m] R S[m] V Dc Cs °दिवो°. P P[2] J Cp दिवः।. We with Sâyaṇa. ४ A C D, and K[m] (originally), विधृतीश्च. R Cs विधृतिश्च. Dc विधृतींश्च. We with B[h] K[m] S[m] V P P[2] J Cp. ५ P J कालेयम्।. P[2] कालेयम्।. Cp कालेयम्।.

1 Sâyaṇa's text: कालेन for कालो ह.

यजुः प्रश्लिष्टपाठरूपो मन्त्रः अजायत । उपलक्षणम् एतत् सामवेदादीनाम् । तथा च पुरुषसूक्ते समाम्नातम् “तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद् यजुस्तस्माद् अजायत” इति [१९.६.१३] । तथा [कालः काल एव] देवेभ्य इन्द्रादिभ्यः अक्षितम् क्षयरहितं भागम् भागत्वेन परिकल्पितं यज्ञम् प्रकृतिविकृत्यात्मकं सोमयागं समैरयत् उदपादयत् । इन्द्रादिदेवभागत्वेन यज्ञं जनयामास । ⌛ अक्षितम् इति । क्षि क्षये । “निष्ठायाम् अण्यदर्थे” इति ण्यदर्थपर्युदासेन अत्र दीर्घाभावः । अत एव “क्षियो दीर्घात्” इति नत्वाभावः । ण्यदर्थो भावकर्मणी इति व्याख्यातम् ⌛ ॥

चतुर्थी ॥ गां वाचं धारयन्तीति गन्धर्वाः । ⌛ “गवि गं धृञो वः” इति वप्रत्ययः । गोशब्दस्य गम् इति आदेशः । धातोर्गुणः ⌛ । गन्धर्वा गायकाः अप्सु उदकेषु अन्तरिक्षे वा सरन्ति गच्छन्तीति अप्सरसः मध्यमलोकस्थानाः काल एव आधारे वर्तन्ते[1] । किं बहुना लोकाः सर्वेपि काले प्रतिष्ठिताः । लोकशब्दो जनवाची भुवनवाची च । अयम् अथर्ववेदस्य स्रष्टा देवः दीप्यमानः अङ्गिराः परमात्माङ्गरसोद्भूतः अङ्गिरा नाम देवः । अथर्वा । “अथार्वाग् एनम् एतास्वेवाप्स्वन्विच्छ” इति [गो॰ ब्रा॰ १.४] ब्राह्मणे अशरीरया वाचा स्वसृष्टास्वेव अप्सु अर्वाग् अभिमुखम् एनं परमात्मानम् अन्विच्छेति अभिहितः परमात्मा अथर्वशब्दवाच्य इति बहुधा प्रपञ्चितम् । सोयम् अथर्वा अथर्ववेदस्रष्टा देवश्च काले स्वजनके अधि तिष्ठति* । ⌛ अधिशब्दः सप्तम्यर्थानुवादी ⌛ ॥

पञ्चमी ॥ इमं च सर्वकर्मार्जनस्थानं लोकम् भूमिं परमम् फलभोगस्थानं स्वर्गलोकं पुण्यान् पुण्यकर्मभिरार्जितान् लोकान् पुण्याः दुःखलेशासंस्पृष्टा विधृतीः लोकधारकान् सर्वान् उक्तान् अनुक्तांश्च लोकान् ब्रह्मणा स्वकारणेन देशकालवस्तुपरिच्छेदरहितेन सत्यज्ञानानन्तादिलक्षणेन परमात्मना अभिजित्य अभिव्याप्य सः एतत्सूक्तद्वयप्रतिपाद्यः[2] परमः स-

1 S′ वर्तते. 2 S′ °प्रतिपाद्य.

वोत्तमः कालो देवः ईयते सर्वं स्थावरजङ्गमात्मकं जगद् व्याप्य वर्तते । नुशब्दः विद्वदविद्वदनुभवप्रमाणद्योतनार्थः ॥

एकोनविंशे काण्डे षष्ठेनुवाके नवमं सूक्तम् ॥

षष्ठोऽनुवाकः समाप्तः ॥

सप्तमेनुवाके चतुर्दश सूक्तानि । तत्र "रात्रिंरात्रिम्" इति प्रथमसूक्तस्य प्रातरग्न्युपस्थाने लिङ्गतो विनियोगोऽवगन्तव्यः ॥

तत्र प्रथमा ॥

रात्रिंरात्रिमप्रयातं भरन्तोश्वायेव तिष्ठते घासमस्मै ।
रायस्पोषेण समिषा मदन्तो मा ते अग्ने प्रतिवेशा रिषाम ॥ १ ॥

रात्रिम्ऽरात्रिम् । अप्रऽयातम् । भरन्तः । अश्वायऽइव । तिष्ठते । घासम् । अस्मै ।
रायः । पोषेण । सम् । इषा । मदन्तः । मा । ते । अग्ने । प्रतिऽवेशाः । रिषाम ॥ १ ॥

हे अग्ने तिष्ठते सर्वदा यजनीयत्वेन संनिहिताय । तिष्ठते । चतुर्थ्येकवचने रूपम् । अस्मै गार्हपत्याद्यायतनेषु वर्तमानाय तुभ्यं घासवत् घासम् अदनीयं हविः । यथा अश्वाय घासं तृणादिकम् । रात्रिंरात्रिम् । वीप्सया सर्वेषु कालेष्वित्यर्थः । अत्यन्तसंयोगे द्वितीया । अप्रयावम् अप्रच्छिद्य । सांतत्येनेत्यर्थः । यौतेर्घञन्तः प्रयावशब्दः । णमुलन्तो वा । भरन्तः हरन्तः प्रयच्छन्तो वयं रायः धनस्य पोषेण पुष्ट्या इषा इष्यमाणेन अन्नेन च सं मदन्तः सम्यक् माद्यन्तः ते तव प्रतिवेशाः । संनिहितगृहं प्रतिवेश इत्युच्यते । तत्र वर्तमानास्त्वत्समीपवर्तिनो मा रिषाम मा हिंसिता भूम । यतो र-

१ So A B[h] C D K[m] R S[m] V Dc Cs, P P[2] J Cp and Sâyaṇa's text. २ R भरतो°. ३ A B[h] C R S[m] Cs रायस्पोषेण. We with D K[m] V Dc P P[2] J. ४ A B[h] D R S[m] Cs ऋषाम. P P[2] J Cp ऋषाम् ।. We with C K[m] V Dc. ५ P अस्मै ।. We with P[2] J.

1 S' रात्रिं रात्रीम् for रात्रिंरात्रिम्. 2 S' माणेन for इष्यमाणेन.

क्षकस्य संनिधौ वर्तामहे अतो लब्धकाङ्क्षितफला निरुपद्रवाश्च भूयास्मेति आशास्यते ॥

द्वितीया ॥

या ते वसोर्वात इषुः सा त एषा तया नो मृड ।
रायस्पोषेण समिषा मदन्तो मा ते अग्ने प्रतिवेशा रिषाम ॥ २ ॥

या । ते । वसोः । वातः । इषुः । सा । ते । एषा । तया । नः । मृड ।
रायः । पोषेण । सम् । इषा । मदन्तः । मा । ते । अग्ने । प्रतिऽवेशाः ।
रिषाम ॥ २ ॥

हे अग्ने वासकस्य तव या अनुग्रहबुद्धिः अन्नप्रदस्य[1] या च अनुग्रहबुद्धिः तया अस्मान् सुखय इति तात्पर्यार्थः ॥ रायस्पोषेणेत्यर्धं व्याख्यातम् ॥

तृतीया ॥

सायंसायं गृहपतिर्नो अग्निः प्रातःप्रातः सौमनसस्य दाता ।
वसोर्वसोर्वसुदान एधि वयं त्वेन्धानास्तन्वं पुषेम ॥ ३ ॥

सायम्ऽसायम् । गृहऽपतिः । नः । अग्निः । प्रातःऽप्रातः । सौमनसस्य । दाता ।
वसोःऽवसोः । वसुऽदानः । एधि । वयम् । त्वा । इन्धानाः । तन्वम् । पुषेम ॥३॥

गृहपतिः गृहस्य स्वामी यजमानरूपः । गृहपतिना आहितो वा गृहपतिः । ॥ तद्धितप्रत्ययस्य लुक् ॥ । गार्हपत्योग्निः नः अस्माकं सर्वेषु सायंकालेषु प्रातःकालेषु च सौमनसस्य सुखस्य दाता भवति ॥ अथ प्रत्यक्षकृतः । हे अग्ने वसोर्वसोः सर्वस्य[2] प्रभूतस्य धनस्य वसुदानः

१ K V या ते वसोर्यातं इषसा तं with Sâyaṇa. C °र्वाच ईषुः सा तं. K^m °र्यातं इषुः सा. R Cs °र्वात एषुः सा तं. Dc °र्वातं इषुः सा तं changed to °र्वातं इषुः सा तं. Sâyaṇa's text: या तेर्वसोर्वात इषसा त एषा तया नो मृड ।. P P^2 J Cp वातः । इषुः । सा ।. We with A B^h D S^m and P P^2 J. २ See note ३ on the previous verse. ३ See note ४ on the previous verse. ४ R S^m Cs एधि. We with B^h C D K^m V Dc.

1 Sâyaṇa appears to read वसोर्या त इषसा for वसोर्वात इषुः सा. 2 S' सर्वप्रभूतस्य for सर्वस्य प्रभूतस्य.

धनदाता एधि भव । वृत्त्यवृत्तिभ्यां स्वामित्वं बहुत्वं च विवक्ष्यते । त्वा त्वाम् इन्धानाः हविर्भिर्दीपयन्तो वयं तन्वम् । ⧗ एकवचनम् अतन्त्रम् ⧗ । सर्वाणि पुत्रमित्रादिशरीराणि पुषेम पोषयेम । ⧗ पुषेः "लिङ्याशिष्यङ्" इति अङ् प्रत्ययः ⧗ ॥

चतुर्थी ॥

प्रातःप्रातर्गृहपतिर्नो अग्निः सायंसायं सौमनसस्य दाता ।
वसोर्वसोर्वसुदान एधीन्धानास्त्वा शतंहिमा ऋधेम ॥ ४ ॥

प्रातःऽप्रातः । गृहऽपतिः । नः । अग्निः । सायम्ऽसायम् । सौमनसस्य । दाता ।
वसोःऽवसोः । वसुऽदानः । एधि । इन्धानाः । त्वा । शतम्ऽहिमाः । ऋधेम ॥ ४ ॥

पूर्वमन्त्रे शरीरपुष्टिः प्रार्थिता । अस्मिन् मन्त्रे जीवनं प्रार्थ्यत इत्येतावान् विशेषः । शतम् शतसंख्याका हिमाः हेमन्तर्तून् ऋधेम ऋध्यास्म । अग्निपरिचर्यया शतसंवत्सरजीवनवन्तो भूयास्म । ⧗ ऋधु वृद्धौ । पूर्ववद् आशीर्लिङि अङ् प्रत्ययः । ङित्वाद् गुणाभावः ⧗ ॥

पञ्चमी ॥

अपश्चा दग्धान्नस्य भूयासम् ।
अन्नादायान्नपतये रुद्राय नमो अग्नये ।
सभ्यः सभां मे पाहि ये च सभ्याः सभासदः ॥ ५ ॥

अपश्चा । दग्धऽअन्नस्य । भूयासम् ।
अन्नऽअदाय । अन्नऽपतये । रुद्राय । नमः । अग्नये ।

---

१ A रुधेम. २ A $\overset{h}{B}$ C R $\overset{m}{S}$ भूयास्म. We with D $\overset{m}{K}$ V Dc Cs. ३ $\overset{m}{S}$ अन्नादयो° for अन्नादाया°. A C $\overset{m}{K}$ V Cs अन्नादयो°. D R अन्नादयो°. Dc अन्नादयो° changed to अन्नादयो°. P $\overset{2}{P}$ J Cp अन्नऽअदयः ।. We with $\overset{h}{B}$ and Sâyaṇa. The vaidika reading अन्नादयोन्न° doubtless owes itself to a misreading of a पृष्ठमात्रा. ४ A $\overset{h}{B}$ C D $\overset{m}{K}$ R $\overset{m}{S}$ V Dc Cs P $\overset{2}{P}$ J Cp. सभ्यः. We with Sâyaṇa. ५ P J दग्धऽअन्नस्य ।. We with $\overset{2}{P}$.

सभ्यः । सभाम् । मे । पाहि । ये । च । सभ्याः । सभाऽसदः ॥ ५ ॥

अन्नस्य अपश्चा[दग्धा] पश्चाद्भागे अदग्धा स्थालीपृष्ठभागे दग्धान्तरहितो भूयासम् । अल्पान्नस्य स्थालीपृष्ठभागे दुःशृतान्नसद्भावः[1] प्रभूतान्नस्य तु तादृग्दोषसंभवो[2] नास्तीति बह्वन्नलाभ आशास्यते । "पश्च पश्चा च च्छन्दसि" इति पश्चाशब्दो निपातितः । दहतेस्तृचि प्रत्यये रूपं दग्धेति । नञ्समासः । बह्वन्नलाभे कारणम् आह । अन्नादाय अन्नस्य भोक्त्रे भोजयित्रे वा अन्नपतये अन्नस्य स्वामिने रुद्राय रोदयित्रे रुद्रात्मकाय वा अग्नये नमः । "रुद्रो वा एष यद् अग्निः" इति तैत्तिरीयश्रुतेः [तै॰ब्रा॰ १.१.८.४] । अग्निपरिचर्यया अन्नलाभो भवतीत्यर्थः । सभ्यः सभार्हस्त्वम् । "सभाया [यः]" इति यप्रत्ययः । मे मदीयां सभाम् पुत्रमित्रपश्वादिसंघं पाहि रक्ष । अग्निरेव संबोध्यः । ये च सभासदः सभायां समाजे[3] सीदन्तस्ते सभ्याः सभार्हाः सन्ति ते च अस्मदीयं प्रजासंघं रक्षन्तु इति ॥

षष्ठी ॥

त्वमिन्द्रा पुरुहूत विश्वमायुर्व्यश्नवत् ।
अहरहर्बलिमित्ते हरन्तोश्वायेव तिष्ठते घासमग्ने ॥ ६ ॥

त्वम् । इन्द्र । पुरुऽहूत । विश्वम् । आयुः । वि । अश्नवत् ।
अहःऽअहः । बलिम् । इत् । ते । हरन्तः । अश्वायऽइव । तिष्ठते । घासम् । अग्ने ॥ ६ ॥

हे [पुरुहूत] बहुभिराहूत इन्द्र ऐश्वर्यसंपन्न अग्ने त्वं [विश्वम्] संपू-

१ C D R Cs त्वमिन्द्रा. Sâyaṇa's text त्वामिंद्र पुरुहूत. J इंद्र।. P इंद्र changed to इंद्र।. We with A B^h K^m V Dc P^2. २ A B^h C D K K^m R S^m V Dc पुरुहूत्य. Cs पुरुहूत्य. P P^2 J पुरुऽहूत्य।. We with Sâyaṇa. ३ A B^h C D R S^m Cs अहरहर्बलि°. Dc अहरहर्बलि° changed to अहरहर्बलि°. P J बालिम्।. We with K K^m V Dc P^2. ४ A B^h C D K^m V °मित्ते. Dc °मित्ये changed to °मित्ते. Cs °नित्ये. Sâyaṇa's text °मित्ये. P P^2 J इत्। ते।. ५ Cs हरतो°. P^2 हरंतः।. J हरंतः।. P हरंतः।. ६ A B^h C D K K^m R S^m V Dc Cs जात°. P P^2 J Cp जातम्।. We with Sâyaṇa.

1 S' दुःश्रत्यन्न°. 2 S' मादृग्दो°. 3 S' समाये for समाजे.

र्णम् आयुः अन्नं जीवनं वा व्यश्नवत् प्रापय । पुरुषव्यत्ययः । अश्नोतेर्लेटि अडागमः । कस्यायुःप्रापणम्[1] इति तम् आह । तिष्ठते अश्वाय घासं तृणादिकमिव [इत्ये] प्राप्तव्ये गृहे वर्तमानाय अग्नये तुभ्यं प्रतिदिवसं बलिं हरन्तो भवन्ति तेषाम् आयुः प्रापयेति संबन्धः । इत्य इति । इण् गतौ । "एतिस्तुशास्वृ०" इति क्यप् प्रत्ययः । पित्त्वाद् धातोस्तुगागमः ॥

[इति] सप्तमेनुवाके प्रथमं सूक्तम् ॥

"यमस्य लोकात्" इति सूक्तस्य दुःस्वप्ननाशनकर्मणि लैङ्गिकविनियोगोऽवगन्तव्यः ॥

तत्र प्रथमा ॥

यमस्य लोकादध्या बभूविथ प्रमदा मर्त्यान्[१] प्र युनक्षि धीरः ।
एकाकिना[२] सरथं यासि विद्वान्त्स्वप्नं मिमानो असुरस्य योनौ ॥ १ ॥

यमस्य । लोकात् । अधि । आ । बभूविथ । प्रऽमदा[३] । मर्त्यान् । प्र । युनक्षि । धीरः ।
एकाकिना । सऽरथम् । यासि । विद्वान् । स्वप्नम् । मिमानः । असुरस्य । योनौ ॥ १ ॥

अस्मिन् सूक्ते दुःस्वप्नप्रभावो वर्ण्यते । हे दुःस्वप्नाभिमानिन् क्रूर पिशाच त्वं यमस्य लोकात् । अधिः पञ्चम्यर्थानुवादी । आ बभूविथ आगतोसि । भूलोकं कर्म । भू प्राप्तौ इति धातुः । व्यत्ययेन परस्मैपदम् । आगत्य च धीरः धृष्टः कस्मादपि न भीतस्त्वं प्रमदाः[2] स्त्रियः मर्त्यान् मरणधर्मणः पुरुषांश्च प्र युनक्षि स्वात्मना संयोजयसि । भूलोकनिष्ठान् स्त्रीपुंसान् [प्रति] मृत्युसूचकदुःस्वप्नं करोषीत्यर्थः । प्रपूर्वाद् युनक्तेर्व्यत्ययेन परस्मैपदम् । अथ विद्वान्

१ R Cs मर्त्यात्. Dc मर्त्यान् changed to मर्तान्. We with A B^h C D S^m V P P^2 J. २ A B^h C D R S^m Cs P J एकाकिना. We with K K^m V Dc P^2. ३ So P P^2 J Cp.

1 S′ °प्राण° for °प्रापण°. 2 S′, however, has प्रमदा and not प्रमदाः.

देहिनाम् आयुर्वृद्ध्यवृद्धी जानन् त्वम् असुरस्य असुः प्राणः । ⌛रो मत्वर्थीयः⌛ । प्राणवत आत्मनो योनौ उपलब्धिस्थाने हृदये स्वप्नम् कष्टम् अनिष्टफलं मिमानः निर्मिमाणः कुर्वन् एकाकिना त्यक्तपुत्रकलत्रबन्धनादिकेन द्दृष्टदुःस्वप्नेन म्रियमाणेन पुरुषेण एकाकिना असहायेन सरथम् समानो रथो रंहणसाधनं यस्मिन् कर्मणि तथा यासि गच्छसि । दुःस्वप्नदर्शिनम् एकं पुरुषं यमलोकं प्रापयसीति यावत् । ⌛"एकाद् आकिनिच् चासहाये" इति एकशब्दाद् आकिनिच् प्रत्ययः⌛ ॥

द्वितीया ॥

बन्धस्त्वाग्रे विश्वचया अपश्यत् पुरा रात्र्या जनितोरेके अह्नि ।
तत: स्वप्नेदमध्या बभूविथ भिषग्भ्यो रूपमपगूहमानः ॥ २ ॥

बन्धः । त्वा । अग्रे । विश्वऽचयाः । अपश्यत् । पुरा । रात्र्याः । जनितोः । एके । अह्नि ।
ततः । स्वप्न । इदम् । अधि । आ । बभूविथ । भिषग्ऽभ्यः । रूपम् । अपऽगूहमानः ॥ २ ॥

दुःस्वप्नस्य अहोरात्रसृष्टेः पूर्वभावित्वम् उच्यते । हे दुःस्वप्नाभिमानिन् त्वा त्वाम् अग्रे सृष्टेः प्राक्काले विश्वचयाः सर्वस्य चेता[2] संचेता स्रष्टा बन्धुः प्राणिनः स्वस्वकर्मभिर्बध्नन् विधाता अपश्यत् दृष्टवान् । एके मानसप्रजापत्यादयः रात्र्या अह्नि । ⌛विभक्तिव्यत्ययः⌛ । अह्नः अहोरात्रयोः जनितोः जननाद् अहोरात्रकालसृष्टेः पुरा पूर्वम् । अपश्यन्नित्यर्थः । ⌛जनी प्रादुर्भावे । "भावलक्षणे स्थेण्°" इति तो-

१ K V बन्धु° with Sâyaṇa. Cs बध°. We with A B̊ C D K̊ R S̊ Dc P P̊ J. २ A C D K̊ R S̊ V Dc Cs तवं. B̊ तमः. P P̊ J तवं ।. We with Sâyaṇa. ३ A B̊ D K K̊ S̊ Dc भिषग्भ्यंरूपमपगूहमानाः. C भिषग्भ्यंरूपमपगूहमानाः. Cs भिषग्भ्यंरूपमुपगूहमानाः. R भिषग्भ्यंरूपमपगूहमानाः. P भिषग्भ्यंऽरूपम् । अपऽगूहमानाः ।. P̊ भिषग्भ्यंऽरूपम् । अपं । गूहमानाः ।. J भिषग्भ्यः । रूपम् changed to भिषग्भ्यंऽरूपम् । अपऽगूहमानाः ।. ४ P P̊ J रात्र्यां ।. We with Sâyaṇa's commentary. ५ P P̊ J जनितः । रेके ।. We with Sâyaṇa.

1 S′ दुष्ट° for दृष्ट°. 2 S′ चेती.

सुन् प्रत्ययः । ततः । आरभ्येति शेषः । हे स्वप्न इदं सर्वं ज-
गद् अध्या बभूविथ । अधिरनर्थकः कर्मप्रवचनीयः । व्या-
प्नवान् असि । आगते दुःस्वप्ने चिकित्सकैः प्रतीकारः कर्तुं शक्यत इ-
त्यत आह भिषग्भ्य इति । भिषग्भ्यः चिकित्सकेभ्यो रूपम् स्वकीयाम्
आकृतिम् अपगूहमानः संवृण्वन् आच्छादयन् । चिकित्सका[1] हि रो-
गस्वरूपं तस्य निदानं च ज्ञात्वा औषधादिभिः प्रतीकारं कुर्वन्ति न
तथा दुःस्वप्नस्य [2]स्वरूपं निदानं च ज्ञात्वा प्रतिकुर्युरिति स्वरूपाच्छाद-
नाभिप्रायः ॥

तृतीया ॥

बृहद्गावासुरेभ्योधि देवानुपावर्तत महिमानमिच्छन् ।
तस्मै स्वप्नाय दधुराधिपत्यं त्रयस्त्रिंशासः स्वरानशानाः ॥ ३ ॥

बृहत्ऽगावा । असुरेभ्यः । अधि । देवान् । उप । अवर्तत । महिमानम् ।
इच्छन् ।
तस्मै । स्वप्नाय । दधुः । आधिऽपत्यम् । त्रयःऽत्रिंशासः । स्वः । आन-
शानाः ॥ ३ ॥

बृहद्गावा बृहतो महतो दुष्प्रधर्षानपि पुरुषान् गाते गच्छतीति बृह-
द्गावा । गाङ् गतौ । "आतो मनिन्क्वनिप्°" इति क्वनिप् प्र-
त्ययः । बृहत् अधिकं गच्छति सर्वं व्याप्नोतीति वा तथाविधः

१ A B C R बृहद्गावासुरे°. D K K V Dc बृहद्गावासुरे°. S बृहद्गावासुरे°. Cs बृहद्गा-
वासुरेभ्योधि. P P बृहत् । ग्रावा ।. J बृहत् । गावा ।. P असुरेभ्यः ।. P J असुरेभ्यः ।. We
give the accent of Sâyaṇa's reading बृहत्ऽगावन् which is derived from the root
गा. Or may it be that the original reading was बृहद्ग्रावोसुरेभ्योधि, subsequently cor-
rupted by a misreading of a prishṭha-mâtrâ? २ A D देवानुपावर्तस्व. C देवानुपाव-
र्तत. B K R V Dc Cs देवानुपावर्तत. P J उप । अवर्तत ।. P उप । अवर्तत ।. We with
S P J. ३ D यस्मै. We with A B C K R S V Dc Cs. ४ A B C D R S Cs °पत्यं
त्रयस्त्रिंशास स्व°. P त्रयःऽत्रिंशः । सः ।. J त्रयःऽत्रिंशाः । सः ।. We with K K V Dc P.
We add the visarga after °स्त्रिंशास् in the saṁhitâ with Sâyaṇa's text and commentary.

1 S′ चिकित्सा for चिकित्सका. 2 S′ has स्वस्य before स्वरूपं.

स्वप्नः पूर्वम् असुरेभ्योधि असुरेभ्यः सकाशात् स्वयम् असुरपक्षीयः सन् तेभ्यः सकाशाद् देवान् उपावर्तत समीपं प्राप्तवान् । किमर्थम् । महिमानम् महत्त्वं प्रभावम् इच्छन् कामयमानः । महत्त्वैषणाद्धेतोरित्यर्थः । पूर्वम् असुरेषु साधारणपुरुषत्वेन वर्तमानः ततोप्यधिकं श्रेयः कामयमानो देवान् प्राप्नोत् । यथा लोके परराष्ट्रराजसमीप[1]वर्ती बलवान् पुरुषः स्वस्माद् राज्ञो बहुमानम् अलभमानः स्वराजशत्रुभूतराजसमीपं बहुमानार्थं गच्छति एवं दुःस्वप्नोपि आगत इति तस्मै स्वसमीपम् आगताय स्वप्नाय कष्टफलकारिणे दुःस्वप्नाय स्वः स्वर्गम् आनशानाः व्याप्नवन्तः । ॥अश्नोतेर्लिटः कानचि "अश्नोतेश्च" इति नुडागमः॥ । त्रयस्त्रिंशासः त्रयस्त्रिंशत्संख्याकाः "अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च" इति [ऐ॰ब्रा॰१,१०] समाम्नाता देवाः । ॥सर्वेषां त्रयस्त्रिंशत्संख्यापूरणत्वात् डट् प्रत्ययः कृतः । "आज्जसेरसुक्"॥ । आधिपत्यम् सर्वलोकानिष्टकारित्वलक्षणं स्वामित्वं दधुः विदधुः कृतवन्तः । दत्तवन्त इत्यर्थः ॥

चतुर्थी ॥

नै[1]तां विदुः पितरो नोत देवा ये[2]षां जल्पिश्चरत्यन्तरे[3]दम् ।
त्रि[4]ते स्वप्नमदधुराप्त्ये नर आदित्यासो व[5]रुणेनानुशिष्टाः ॥ ४ ॥

न । एताम् । विदुः । पितरः । न । उत । देवाः । येषाम्[2] । जल्पिः । चरति । अन्तरा । इदम्[3] ।
त्रिते[4] । स्वप्नम् । अदधुः । आप्त्ये । नरः । आदित्यासः । वरुणेन[5] । अनुऽशिष्टाः ॥ ४ ॥

एषां[2] त्रयस्त्रिंशत्संख्याकानां देवानां यां जल्पिः दुःस्वप्नाय प्राणिनां त-

१ A नैतां विदुः. Cs नेतां विंदुः. We with $\overset{h}{B}$ C D K $\overset{m}{K}$ R $\overset{m}{S}$ V Dc. २ So we read with A $\overset{h}{B}$ C D K $\overset{m}{K}$ R $\overset{m}{S}$ V Dc Cs P $\overset{2}{P}$ J. ३ A D $\overset{m}{K}$ $\overset{m}{S}$ V Dc °त्यंतरेतम्. $\overset{h}{B}$ C °त्यंतरेत. We with R Cs P $\overset{2}{P}$ J. ४ A $\overset{h}{B}$ C D R V Cs P $\overset{2}{P}$ J तृते. We with K $\overset{m}{K}$ $\overset{m}{S}$ Dc. ५ A $\overset{h}{B}$ C D K $\overset{m}{K}$ R $\overset{m}{S}$ V Dc अरुणे°. P $\overset{2}{P}$ J अरुणेन ।. We with Cs.

1 S' °राजसमीपे. 2 Sâyaṇa's text has यैषां for our येषां.

तत्कर्मानुसारेण दुःस्वप्नदर्शननिबन्धना[1]निष्टफलकारित्वलक्षणाधिपत्यप्रदानरूपं यद् वाक्यम् इदं जगत् अन्तरा मध्ये चरति भक्षयति । आधिपत्यप्रदानरूपं वाक्यं जगत् संहरति । ॥ चरतिर्भक्षणार्थः ॥ । एतां जल्पिं पितरो न विदुः न जानन्ति । उत अपि च देवाः त्रयस्त्रिंशद्देवव्यतिरिक्ता अन्ये देवा न विदुः । केवलं स्वप्नस्य आधिपत्यप्रदातारो देवा दुःस्वप्नश्च एतम् अर्थं जानन्तीत्यर्थः ॥ एवं देवेभ्यो लब्धाधिपत्यो दुःस्वप्नः प्रबलः सन् स्वस्य आधिपत्यप्रदातृषु देवेषु मध्ये आदित्यान् नाम देवान् अनिष्टफलदुःस्वप्नदर्शनेन जग्राह । तदा आदित्याः परस्परं विचार्य स्वेभ्य एव लब्धप्रभा[2]वो दुःस्वप्नः अस्मानेव गृहीतवान् अस्य क उपाय इति वरुणं पृष्टवन्तः । स पृष्टो वरुणः स्वप्नप्रतीकार[3]मपि इमम् उपदिदेश । तद् अत्र उत्तरार्धेन उच्यते । नरः नेतारः आदित्यासः एतत्संज्ञका देवा वरुणेन पापनिवारकेण एतत्संज्ञकेन देवेन अनुशिष्टाः सम्यग् उपदिष्टाः सन्तः आप्त्ये [4]अपां पुत्रे त्रिते एतत्संज्ञके महर्षौ स्वप्नम् अनिष्टफलसूचकं दुःस्वप्नम् अदधुः स्थापितवन्तः । न्यमार्जयन्निति यावत् । तथा च शाकला दाशतय्यां समामनन्ति । "त्रिते दुःष्वप्न्यं सर्वम् आप्त्ये परि दद्मस्यनेहसो व ऊतयः सु ऊतयो व ऊतयः" इति [ऋ° ८. ४७. १५] ॥

पञ्चमी ॥

यस्य॑ क्रू॒रमभ॑[1]जन्त दु॒ष्कृ॒तो[2]ऽस्व॒प्नेन॑ सु॒कृत॑ः पुण्य॒मायु॑ः ।
स्व॒र्मदसि पर॒मेण॑ ब॒न्धुना॑ त॒प्य॑[3]मानस्य॒ मन॒सोऽधि॑ ज॑[4]ज्ञिषे ॥ ५ ॥

यस्य॑ । क्रू॒रम् । अभ॑ज॑न्त । दुः॒ऽकृत॑ः । अ॒स्व॑[2]प्नेन । सु॒ऽकृत॑ः । पुण्य॑म् । आयु॑ः ।

१ A corrects °मपंचंत into °मभंजंत. K $\overset{m}{K}$ V °मंभजन्त. $\overset{h}{B}$ C °मपंचंत. Dc °मभंजंत changed to °मंभजंत. P $\overset{2}{P}$ J अपचंत ।. We with A D R $\overset{m}{S}$ Cs. २ A $\overset{h}{B}$ C D K $\overset{m}{K}$ R $\overset{m}{S}$ V Dc Cs all read : दुष्कृतोस्वप्नेन. P $\overset{2}{P}$ J स्वप्नेन ।. ३ A $\overset{h}{B}$ D R $\overset{m}{S}$ Dc Cs बंधुना तप्यंमानस्य. P J तप्यंमानस्य ।. We with K $\overset{m}{K}$ V $\overset{2}{P}$ and with Dc as subsequently corrected. ४ A $\overset{h}{B}$ C D R $\overset{m}{S}$ Dc Cs जज्ञिषे. $\overset{2}{P}$ J जज्ञिषे ।. We with K $\overset{m}{K}$ V, with Dc as subsequently corrected and with P.

1 S′ °बंधनअनिष्ट°. 2 S′ °प्रभवो. 3 S′ °प्रतीकारोप्ययं for °प्रतीकारमपि इमम्. 4 S′ आप्त्यपुत्रन्निते.

स्वः॑ । म॒द॒सि॒ । प॒र॒मेण॑ । ब॒न्धुना॑ । त॒प्यमा॑नस्य । मन॑सः । अधि॑ । ज॒ज्ञि॒षे॒ ॥५॥

दुष्कृतः दुष्कर्माणः पापिनः पुरुषा यस्य दुःस्वप्नस्य क्रूरम् भयंकरम् अनिष्टं फलम् अभजन्त प्राप्नुवन्ति । सुकृतः सुकर्माणः अस्वप्नेन दुःस्वप्नदर्शनाभावेन पुण्यम् पुण्यकर्मनिमित्तम् आयुः जीवनम् । अभजन्तेति ॥ अथ प्रत्यक्षकृतः । [हे] दुःस्वप्न स्वः स्वर्गे लोके परमेण सर्वोत्तरेण बन्धुना सृष्टेः प्राक्काले त्वां दृष्टवता विधात्रा सह मदसि माद्यसि । ‡ माद्यतेर्व्यत्ययेन शप् प्रत्ययः ‡ । तप्यमानस्य मृत्युपाशेन संतप्यमानस्य पुंसो[1] दुष्कर्मणः पुरुषस्य मनसोऽधि मनसः सकाशात् जज्ञिषे मृत्युसूचनार्थं प्रादुर्भूतो भवसि । ‡ जनी प्रादुर्भावे इति धातुः ‡ ॥

षष्ठी ॥

वि॒द्म ते॒ सर्वाः॑ परि॒जाः पु॒रस्ता॑द् वि॒द्म स्व॑प्न॒ यो अ॑धि॒पा इ॒हा ते॑ ।
य॒श॒स्विनो॑ नो॒ यश॑सेह पा॒ह्या॒राद् द्वि॒षेभि॒रप॑ याहि दू॒रम् ॥ ६ ॥

वि॒द्म । ते॒ । सर्वाः॑ । प॒रि॒ऽजाः । पु॒रस्ता॑त् । वि॒द्म । स्व॒प्न॒ । यः॑ । अ॒धि॒ऽपाः ।
इ॒ह । ते॒ ।
य॒श॒स्विनः॑ । नः॒ । यश॑सा । इ॒ह । पा॒हि॒ । आ॒रात् । द्वि॒षेभिः॑ । अप॑ । या॒हि॒ ।
दू॒रम् ॥ ६ ॥

हे स्वप्न ते तव [पुरस्तात् सर्वाः परिजाः] पुरस्ताद्गामिनः सर्वान् परिजनान् विद्म । ‡ परिपूर्वात् जायतेः "जनसनखनक्रमगमः०" इति विट् । "विड्वनोः०" इति अनुनासिकस्य आकारः ‡ । तथा इह इदानीं ते तव यः अधिपाः स्वामी तं च विद्म जानीमः । एवं तव स्वरूपं स्वामिनं परिजनांश्च जानतो यशस्विनः नः अस्मान् इह

---

१ See foot-notes ३ and ४ respectively on the previous page. २ D S^m अधिपा. We with B^h C K K^m R V Dc Cs P P^2 J. ३ C द्वेषिभि° corrected to द्विषेभि°. S^m द्विषेभि° changed to द्वेषेभि°. Sâyaṇa's text: द्विषोभिः. We with A B^h D K K^m R V Dc Cs P P^2 J. ४ P P^2 J स्वप्नऽयः. We with Sâyaṇa.

1 S′ omits सो in पुंसो.

दुःस्वप्नप्रसङ्गे यशसा अन्नेन कीर्त्या वा निमित्तेन आरात् समीपे पाहि रक्ष द्वेष्टुः[1] । द्विषोभिः* द्वेष्टृभिर्बाधकैः सह अस्मत्तो दूरं देशम् अप याहि अपसृत्य गच्छ ॥

[इति] सप्तमेनुवाके द्वितीयं सूक्तम् ॥

"यथा कलां यथा शफम्" इति सूक्तेन पुरोहितो दुःस्वप्नदर्शिनं राजानम् अभिमन्त्रयेत । उक्तं परिशिष्टे । "कुञ्जरं[2] वा प्रमत्तम् अश्वं "श्वेतं गोवृषं वा यानं युक्तं वाजिभिर्यथारोहयेत् स्वप्नकालेमुष्य विद्या- "न्मानसो यामभीष्टां तस्मात् तां रात्रिं प्रयतः स्वपेत् । स्वप्नं दृष्ट्वा ऋत्- "विग्भ्यो निवेदयेत् । परोपेहि[६. ४५] यो न जीवोसि[६. ४६] विद्म "ते स्वप्न जनित्रं[६. ४६. २] यथा कलां यथा शफम्[१९. ५७] इति "राजानम् अभिमन्त्र्य यथागतं गच्छेत्[2]" इति ॥

तत्र प्रथमा ॥

यथा॑ क॒लां यथा॑ श॒फं यथ॒र्णं सं॒नय॑न्ति ।
ए॒वा दु॒ष्वप्न्यं॒ सर्व॒मप्रि॑ये[१] सं न॑यामसि ॥ १ ॥

यथा॑ । क॒लाम् । यथा॑ । श॒फम् । यथा॑ । ऋ॒णम् । स॒म्ऽनय॑न्ति ।
ए॒व । दुः॒ऽस्वप्न्य॑म् । सर्व॑म् । अप्रि॑ये[१] । सम् । न॒या॒म॒सि ॥ १ ॥

यथा अवदानार्थं संस्कुर्वन्त ऋत्विजः हतस्य पशोः कलां शफम् इति अनवदानीयान्यङ्गानि सहादाय अन्यत्र संनयन्ति । यथा वा प्रवृद्धम्[3] ऋणं संनयन्ति अपगमयन्ति उत्तमर्णाय प्रत्यर्पयन्ति एवं दुष्वप्न्यम् कष्टस्वप्ननिमित्तकं सर्वम् अनर्थजातम् आप्त्ये* अपां पुत्रे त्रिताख्ये[4] महर्षौ सं नयामसि संनयामः स्थापयामः प्रमार्जयामः ॥

द्वितीया ॥

सं राजा॑नो अगुः॒ सम॒ृणान्य॑गुः॒ सं कु॒ष्ठा अ॑गुः॒ *[२]सं क॒ला अ॑गुः ।

१ So we read with A B[h] C D K K[m] R S[m] V Dc Cs P P[2] J. २ A B[h] C D K K[m] R S[m] V Dc Cs स कला. P P[2] J सः । कलाः ।. We with Sâyaṇa.

1 S′ द्वेष्टृ. 2 We cannot trace this doubtless corrupt passage in our MS. of the *Paris'ishṭa*. 3 S′ has a space for two letters after प्र°. 4 S′ तृचाख्यो.

समस्मासु यद्दुष्वप्न्यं निर्द्विषते दुष्वप्न्यं सुवाम ॥ २ ॥

सम् । राजानः । अगुः । सम् । ऋणानि । अगुः । सम् । कुष्ठाः । अगुः । सम् । कलाः । अगुः ।

सम् । अस्मासु । यत् । दुःऽस्वप्न्यम् । निः । द्विषते । दुःऽस्वप्न्यम् । सुवाम ॥२॥

यथा राजानः परराष्ट्रं विनाशयितुं समगुः संयन्ति संहता भवन्ति । ऋणानि बहूनि संयन्ति । एकस्मिन्नृणे अनपसारिते उपर्युपरि ऋणानि बहूनि भवन्तीति प्रसिद्धिः । कुष्ठाः । कुष्ठो नाम त्वग्दोषः । तदुपलक्षिता बहवो रोगाः । एकस्मिन् कुष्ठरोगे अचिकित्सिते तस्योपरि पिटकव्रणादीनि भवन्तीति प्रसिद्धिः । कलाः अनुपादेयावयवोपलक्षणम् । यथा वर्जनीयाः पश्वाद्यवयवा जीर्णकूपादिषु संहता भवन्ति । एवम् अस्मासु यद् दुःष्वप्न्यम् दुःस्वप्ननिमित्तकम् अनर्थजातं सम् । अगात् इति एकवचनेनानुषङ्गः । संमितं संहतं वर्तते तद् दुःष्वप्न्यम् अरिष्टजातं द्विषते अस्मद्द्वेष्ट्रे निः सुवाम अस्मत्तो निःसार्य प्रेरयाम । ꣸ षू प्रेरणे । तौदादिकः ꣸ ॥

तृतीया ॥

देवानां पत्नीनां गर्भ यमस्य कर यो भद्रः स्वप्न ।
स मम यः पापस्तद्द्विषते प्र हिण्मः ।
मा तृष्टानामसि कृष्णशकुनेर्मुखम् ॥ ३ ॥

देवानाम् । पत्नीनाम् । गर्भ । यमस्य । कर । यः । भद्रः । स्वप्न ।

---

१ A $\overset{h}{B}$ C D K $\overset{m}{K}$ R $\overset{m}{S}$ V Dc Cs यत दुष्वप्न्यं (a visarga being added after °द्दु° by A $\overset{h}{B}$ C R Dc Cs). P $\overset{2}{P}$ J यतः ।. We with Sâyaṇa. २ $\overset{h}{B}$ C $\overset{m}{K}$ R Dc दुःष्वप्न्यं. We with A D $\overset{m}{S}$ V Cs. ३ P $\overset{2}{P}$ J सः । मृणानि ।. ४ A $\overset{h}{B}$ C D K $\overset{m}{K}$ R $\overset{m}{S}$ V Dc Cs देवानां पत्नीनां गर्भ यमस्य करयो भद्रस्वप्नः । सममयः &c. P $\overset{2}{P}$ J देवानाम् । पत्नीनाम् । गर्भ (P गर्भम्) । यमस्य । करयः । भद्रऽस्वप्नः । समम् । अयः ।. We with Sâyaṇa.

५ Cs मातृष्टानामासिकृष्णशकुनेमुखं ।
$\overset{m}{S}$ मातृष्टानामासिकृष्णशकुनेर्मुखम् ।

---

1 S′ उपउपरि for उपर्युपरि. 2 S′ त्वदुप°. 3 S′ तद्रोपरि. 4 S′ संमितं.

सः । मम॑ । यः । पा॒पः । तत् । द्वि॒ष॒ते । प्र । हि॒ण्म॒ः ।

मा । तृष्टाना॑म् । अ॒सि॒ । कृ॒ष्ण॒ऽश॒कु॒नेः । मुख॑म् ॥ ३ ॥

हे देवानां पत्नीनां गर्भ । दीव्यन्ति क्रीडन्तीति देवा गन्धर्वाः । पत्नी-शब्देन अप्सरसः । गन्धर्वाप्सरसां गर्भ पुत्र । ता हि महाजलवृक्षादिस्थानेषु स्थित्वा पुरुषान् उन्मादयन्तीति तैत्तिरीयश्रुतिप्रसिद्धिः [तै° सं° ३, ४, ८, ४] । अत्रापि उन्मादनयोगात् तत्पुत्रत्वेन स्वप्नस्य व्यपदेशः । "सुबामन्त्रिते पराङ्गवत् स्वरे" इति षष्ठ्यामन्त्रितसमुदायस्य षाष्ठिकम् आद्युदात्तत्वम् । हे यमस्य कर । यथा प्रेताधिपतिः स्वीयेन हस्तेन यंकंचन वध्यं गृहीत्वा घातयति एवं दुःस्वप्नेनापि तथा करोतीति स्वप्नस्य तत्करत्वव्यपदेशः । एवंप्रभावं[1] हे स्वप्न त्वदीयो भद्रः मङ्गलकारी यः अंशोस्ति सोंऽशो ममास्तु । यः पापः क्रूरः अनिष्टकारी अंशः* तं द्विषते शत्रवे प्र हिण्मः प्रेरयामः । हि गतौ वृद्धौ च । स्वादिः । "हिनु मीना" इति णत्वम् । "लोपश्चास्य°" इति श्नुप्रत्ययस्य अन्त्यलोपः । कृष्णशकुनेः । कृष्णः पक्षी वायसः । तस्य मुखम् मुखवन्मुखं वायसमुखभूतः[2] स्वप्नस्त्वं बाधको मा भवेत्यर्थः ॥

तं त्वा॑ स्वप्न॒ तथा॒ सं वि॑द्म॒ स त्वं स्व॑प्ना॒श्व॑ इव का॒यमश्व॑ इव नीना॒हम् ।
अ॒ना॒स्मा॒कं दे॑वपी॒युं पिया॑रुं॒[१] वप॒ यद॒स्मासु॑ दुष्वप्न्यं॒ यद् गोषु॒ यच्च॑ नो गृ॒हे ॥ ४ ॥

---

C मातृंष्टानामासिक्कृष्णशकुनेमुखम् ।

B̊[h] D K̊[m] R V मातृंष्टानामासिक्कृष्णशकुनेमुखम् ।

Dc मातृंष्टानामासिक्कृष्णःशकुनेर्मुखम् changed to मातृंष्टानामासिक्कृष्णशकुनेमुखम्.

P P̊[2] J मातृंष्टा । नाम् । असि । कृष्णऽशकुने ।.

Sâyaṇa's text: मातृष्टानामसि कृष्णशकुनेर्मुखं. We read मा तृष्टानामसि with Sâyaṇa's text and accentuate accordingly. The accent on कृष्णशकुनेः is ours.

१ A B̊[h] K K̊[m] R V Dc C D S̊[m] Cs पिपारुं वपुर्य° (C D S̊[m] Cs वपुय°) for पियारुं वप. P P̊[2] J पिपारुम् । वपुः ।. We with Sâyaṇa, and accentuate accordingly. Conf. footnote १ on the next page.

---

1 S' °प्रभावो. 2 S' °भूत°.

तम् । त्वा । स्वप्न । तथा । सम् । विद्म । सः । त्वम् । स्वप्न । अश्वःऽइव । कायम् । अश्वःऽइव । नीनाहम् ।

अनास्माकम् । देवऽपीयुम् । पियारुम् । वप । यत् । अस्मासु । दुःऽस्वप्न्यम् । यत् । गोषु । यत् । च । नः । गृहे ॥ ४ ॥

अनास्माकस्तद् देवपीयुः पियारुर्निष्कमिव प्रति मुञ्चताम् ।
नवारत्नीनपमया अस्माकं ततः परि ।
दुष्वप्न्यं सर्वं द्विषते निर्दयामसि ॥ ५ ॥

अनास्माकः । तत् । देवऽपीयुः । पियारुः । निष्कम्ऽइव । प्रति । मुञ्चताम् । नव । अरत्नीन् । अपऽमयाः । अस्माकम् । ततः । परि । दुःऽस्वप्न्यम् । सर्वम् । द्विषते । निः । दयामसि ॥ ५ ॥

चतुर्थी ॥ हे स्वप्न तं तादृशं त्वा त्वां तथा तेन प्रकारेण तदर्थम् उत्पन्न आगत इति सर्वं सं विद्म जानीमः । हे स्वप्न स त्वम् अश्वो यथा स्वकीयं रजोधूसरं [कायं] धुनोति यथा च अश्वः नीनाहम् पल्याणकवचादिकम् अवकिरति एवम् अस्माकं पियारुम् । ⌘पीयतिर्हिंसाकर्मा⌘ । बाधकम् न केवलम् अस्माकमेव बाधकं किं तु देवपीयुम् देवानां बाधकं यज्ञविघातिनम् अव वप । तिरस्कुर्वित्यर्थः । दुःस्वप्नफलं तस्यास्त्विति यावत् ॥

पञ्चमी ॥ अस्मासु [अस्माकं] वपुषि यद् दुष्वप्न्यं वर्तते यच्च [गोषु] गवाम् अनर्थसूचकं दुष्वप्न्यं यच्च नः अस्मदीये गृहे वर्तते तद् अस्माकम् अरिष्टम् अव । गमयेति शेषः । तद् अरिष्टजातं देवपीयुः पियारुः शत्रुः निष्कमिव सौवर्णम् आभरणमिव प्रति मुञ्चतात् । स्वशरीरे धारयत्वित्यर्थः ॥

---

१ A B̊ C D K K̊ R S̊ V Dc Cs P P̊ J पिपारु°. २ C R °नवमया. S̊ °रपमया. P P̊ J अपऽमयाः ।. Sâyaṇa's text : °नपमया अस्मा°. We with A B̊ K K̊ V Dc Cs. ३ C K̊ R Cs दुःष्वप्न्यं. Dc दुष्वप्न्यं changed to दुःष्वप्न्यं. We with B̊ D S̊ V.

---

1 Sâyaṇa's text is अवास्माकं देवपीयुं. 2 Sâyaṇa's text is अवास्माकं तद् for our अनास्माकस्तद्.

षष्ठी ॥ अस्माकं संबन्धि दुष्वप्न्यं नवारत्निपर्यन्तम् अपसारय । यथा तत्संस्पर्शो न भवति तथा कुर्विति वक्तुं नवारत्निप्रमाणम् उक्तं वेदितव्यम् । ततः अनन्तरं सर्वम् उत्पन्नं दुष्वप्न्यम् [अप्रिये][1*] द्वेष्ये प्रेरयामः ॥

[इति] सप्तमेनुवाके तृतीयं सूक्तम् ॥

"घृतस्य जूतिः" इति सूक्तस्य विनियोगो लिङ्गाद् अवगन्तव्यः । तत्र दर्शपूर्णमासयोराज्यभागहोमात् पूर्वं "यज्ञस्य चक्षुः" इत्यनया आज्यं जुहुयात् । सूत्रितं हि दर्शपूर्णमासौ प्रक्रम्य "अग्नावग्निः [४. ३९. ९] "हृदा पूतम् [४. ३९. १०] पुरस्ताद्युक्तः [५. २९. १] यज्ञस्य चक्षुः [१९. "५८. ५] इति जुहोति" इति [कौ° १. ३] ॥

तत्र प्रथमा ॥

घृतस्य जूतिः सम॑ना[1] सदे॑वा[2] संवत्सरं हविषा वर्धयन्ती ।
श्रोत्रं चक्षुः प्राणोऽच्छिन्नो नो अस्त्वच्छिन्ना वयमायुषो वर्चसः ॥ १ ॥

घृतस्य । जूतिः । सम॑ना[1] । सऽदे॑वा[2] । सम्ऽवत्सरम् । हविषा । वर्धयन्ती ।
श्रोत्रम् । चक्षुः । प्राणः । अच्छिन्नः । नः । अस्तु । अच्छिन्नाः[3] । वयम् ।
आयुषः । वर्चसः ॥ १ ॥

अस्मिन् सूक्ते मनसा निर्वर्त्यो यज्ञः स्तूयते । घृतस्य । ꣸घृ क्षरणदीप्त्योः꣸ । दीप्तस्य परतेजसो जूतिः । ꣸जु इति सौत्रो धातुः । "ऊतियूतिजूति°" इति क्तिन्प्रत्ययान्तत्वेन निपातितः꣸ । सर्वेषां गत्यर्थानां ज्ञानार्थत्वात् जूतिशब्देन सर्वत्र प्रसृतं ज्ञानम् उच्यते । अत एव ऐतरेयकाः "मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति" इति [ऐ° आ°

---

१ C D संमना. B̊ K K̊ R V संमनाः. A संमानाः. S̊ संमनाः. Dc समनाः changed to संमनाः. P̊ J समना ।. Sâyaṇa's text समनाः. We with Cs P. २ A B̊ C D K K̊ R S̊ V Dc Cs सदेवाः. P P̊ J सऽदेवाः ।. We with Sâyaṇa and Sâyaṇa's text. ३ P P̊ J अच्छिन्ना ।. We with Sâyaṇa.

---

1 Sâyaṇa's text is : अप्रिये संनयामसि for our द्विषते निर्दयामसि.

२.६.१] समामनन्ति । घृतस्य जूतिरिति परमात्मनः स्वरूपविषयं ज्ञानम् । कीदृशी । समनाः* समानमनस्का सर्वेषां प्राणिनां मनांसि यस्मिन् प्रज्ञाने समाश्रितानि । सदेवा देवाः इन्द्रियाणि सर्वप्राणिसंबन्धीनि तत्सहिता परमात्मविषया बुद्धिः संवत्सरम् संवसन्त्यत्र भूतानीति संवत्सरः परमात्मा तं हविषा शब्दस्पर्शादिरूपप्रपञ्चेन हूयमानेन वर्धयन्ती पुष्णती भवति । वस्तुकृतपरिच्छेदपरिहार एव परमात्मनः पोष इत्यर्थः । शब्दादिविषयाणां ज्ञानाग्नौ होमो भगवताप्युक्तः ।

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन् विषयान् अन्य इन्द्रियाग्निषु जुह्वति ।
सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ।

इति [भ॰गी॰४.२७] ॥ एवं ज्ञानयज्ञप्रवर्तकानां नः अस्माकं श्रोत्रं चक्षुः प्राणः । एतद् उपलक्षणं ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च । प्राणः शरीरधारको वायुः अच्छिन्नः अविनश्वरः अस्तु । वयं च आयुषो जीवनस्य वर्चसस्तेजसः अच्छिन्नाः छिन्नं छेदः विनाशः तद्रहिता भूयास्म । इन्द्रियादीनां बाह्यविषयप्रवर्तनपरिहारेण आत्मविषयत्वकरणेन तेषां विच्छेदाभाव आशास्यते ॥

द्वितीया ॥

उ॒पास्मान् प्रा॒णो ह्व॑यता॒मुप॑ व॒यं प्रा॒णं ह॑वामहे ।
वर्चो॑ जग्राह पृथि॒व्य॑[1]॒न्तरि॑क्षं॒ वर्च॒ः सोमो॒ बृह॒स्पति॑र्वि॑[2]ध॒त्ता ॥ २ ॥

उप॑ । अ॒स्मान् । प्रा॒णः । ह्व॒य॒ता॒म् । उप॑ । व॒[3]यम् । प्रा॒णम् । ह॒वा॒म॒हे॒ ।
वर्चः॑ । ज॒ग्रा॒ह॒ । पृ॒थि॒वी । अ॒न्तरि॑क्षम् । वर्चः॑ । सोमः॑ । बृह॒स्पतिः॑ । वि॒ऽ-
ध॒[2]त्ता ॥ २ ॥

---

१ A B^h C S^m ३ for १. Cs ज॒ग्राह॑ पृथि॒व्यांतरि॑°. We with D K K^m V Dc. २ A B^h C °स्पतिर्धर्ता. D °स्पतिर्ध॒त्ता. R °स्पतिर्धर्त्ता. K^m V °स्पतिर्ध॒त्ताम्. K °स्प॒तिर्विध॒र्ता. Dc °स्पतिर्ध॒त्ता changed to °स्पतिर्ध॒त्तां. Cs °स्पतिर्ध॒त्तात्. P P^2 J बृह॒स्पतिः । ध॒र्ता ।. Sâyaṇa's text : विधत्तां. We with S^m. ३ P P^2 ह्व॒यम् ।. We with J.

अस्मान् मानसयज्ञप्रवर्तकान् प्राणः शरीरधारकः पञ्चवृत्तिको वायुः उप ह्वयताम् चिरकालजीवनाय अनुजानातु । वयं च प्राणम् उप ह्वामहे अस्मदीयेषु शरीरेषु चिरकालावस्थानाय प्रार्थयामहे । पृथिवी अन्तरिक्षं च वर्चस्तेजः जग्राह स्वीकृतवती । अस्मभ्यं दातुम् इति शेषः । अत्र वर्चःशब्देन शरीरधारक ओजो नाम अष्टमो धातुर्विवक्षितः । तथा सोमः बृहस्पतिः विधत्ता विशेषेण धर्ता अग्निः सूर्यो वा वर्चो जग्राह । अस्मभ्यं दातुम् इति शेषः ॥

तृतीया ॥

वर्चसो द्यावापृथिवी संग्रहणी बभूवथुर्वर्चो[1] गृहीत्वा पृथिवीमनु सं चरेम[2] ।
यशसं[3] गावो गोपतिमुप तिष्ठन्त्यायतीर्यशो गृहीत्वा पृथिवीमनु सं चरेम[2] ॥ ३ ॥

वर्चसः । द्यावापृथिवी इति । संग्रहणी इति सम्ऽग्रहणी । बभूवथुः । वर्चः । गृहीत्वा । पृथिवीम् । अनु । सम् । चरेम[2] ।
यशसम् । गावः । गोऽपतिम् । उप । तिष्ठन्ति । आऽयतीः । यशः । गृहीत्वा । पृथिवीम् । अनु । सम् । चरेम[2] ॥ ३ ॥

द्यावापृथिवी द्यावापृथिव्यौ युवां वर्चसः संग्रहणी संग्रहण्यौ दात्र्यौ बभूवथुः भवतम् । वर्चः युवाभ्यां दत्तं तेजो गृहीत्वा अवलम्ब्य पृथिवीम् । द्युलोकस्य उपलक्षणम् । भूलोकं द्युलोकं च अनु उद्दिश्य । ⌛लक्षणे अनुः कर्मप्रवचनीयः⌛ । सं चरेम संचारं कुर्याम । ततः गावो धेनवः गोपतिम् गवां स्वामिनं मां यशसा* अन्नेन कीर्त्या वा सह उप तिष्ठन्ति समीपं प्राप्नुवन्तु । ततो वयम् आयतीः आगच्छतीर्धेनूः यशश्च

---

१ So we accentuate with A C D K $\overset{m}{\text{K}}$ R $\overset{m}{\text{S}}$ V Dc Cs and P $\overset{2}{\text{P}}$ J. $\overset{h}{\text{B}}$ बभूवथु॰. २ K $\overset{m}{\text{K}}$ ॰मनुसंचरेम. Dc पृथिवीमनुसंचरेम changed to पृथिवीमनुसंचरेम. P $\overset{2}{\text{P}}$ अनुऽसंचरेम ।, J अनुऽसंचरेम ।. A $\overset{h}{\text{B}}$ C D R $\overset{m}{\text{S}}$ Cs ॰मनुसंचरेम. We with V. ३ A R यशसां. $\overset{h}{\text{B}}$ C D K $\overset{m}{\text{K}}$ $\overset{m}{\text{S}}$ V यशसां. Dc यशसं changed to यशसं. Cs यशसं. Sâyaṇa's text : यशसां. P यशसाम् ।. $\overset{2}{\text{P}}$ J यशसाम् ।. We with Dc.

गृहीत्वा पृथिवीम् अनु सं चरेम उभयोर्लोकयोः संचारिणो भवेम । यद्वा पृथिवीम् भूलोकमेव अनु सं चरेम इत्युभयत्रार्थः ॥

चतुर्थी ॥

व्रजं कृणुध्वं स हि वो नृपाणो वर्मा सीव्यध्वं बहुला पृथूनि ।
पुरः कृणुध्वमायसीरधृष्टा मा वः सुस्रोच्चमसो दृंहता तम् ॥ ४ ॥

व्रजम् । कृणुध्वम् । सः । हि । वः । नृऽपानः । वर्म । सीव्यध्वम् । बहु-
ला । पृथूनि ।
पुरः । कृणुध्वम् । आयसीः । अधृष्टाः । मा । वः । सुस्रोत् । चमसः । दृं-
हत । तम् ॥ ४ ॥

अस्या ऋचस्त्रेधार्थो नीयते[1] इन्द्रियपरत्वेन ऋत्विक्परत्वेन योद्धृपरत्वे-
नेति । हे इन्द्रियाणि यूयं व्रजं कृणुध्वम् अस्मिन् मानसयज्ञप्रवर्तना-
धिष्ठानभूते शरीरे व्रजम् संघातं कृणुध्वम् संघीभूय तिष्ठत । स हि हि
यस्मात् कारणात् स देहः वः युष्माकं नृपाणः नृणां नेतॄणां स्वस्वविष-
येषु प्रवर्तमानानां रक्षकः । शरीरसद्भावे हि तेषाम् अवस्थानम् । यद्वा
नृणां युष्माकं पानस्थानम् । इन्द्रियाणां स्वस्वविषयप्रवर्तनमेव पानम् इ-
त्युच्यते । "कृत्यल्युटो बहुलम्" इति कर्तरि अधिकरणे वा
ल्युट् । [2]वर्म वर्माणि वारकाणि विषयाख्यानि वस्तूनि सीव्यध्वम्
संबध्नीत । स्वस्वव्यापारविषयान् शब्दादीन् कुरुत । कीदृशानि । [बहुला]
बहुलानि अधिकानि पृथूनि विस्तीर्णानि । तथा आयसीः अयोवत् सा-
रभूता अधृष्टाः परैरधृष्यमाणाः पुरः पूरयित्रीः स्वस्वविषयग्रहणशक्ताः कृ-

१ A C D $\overset{m}{S}$ Dc Cs read सीव्यध्वं बहुला. $\overset{h}{B}$ सीव्यध्वं बहुला corrected from सीव्यध्वं बहुला. R सीव्यध्वं बहुला. V वर्मा सीव्यध्वं बहुला and वर्मा सीव्यध्वं बहुला. P $\overset{2}{P}$ J Cp वर्म । असि । विऽअध्वम् ।. We with $\overset{h}{B}$ as originally. २ A कृणुध्वं मा°......सुस्रोच्चमसो बृह°. $\overset{h}{B}$ °ध्वं मा°......सुश्रोचमसो दृह°. C D $\overset{m}{K}$ V Dc °ध्वं मा°......सुस्रोच्चमसो दृंह°. R ध्वं मा°......सुस्रोच्चमसो दृंह°. P $\overset{2}{P}$ J कृणुध्वम् । मा । आयसीः । ($\overset{2}{P}$ अयसीः ।) ......अधृष्टा ।. We with Cs.

1 S′ has a व after नीयते. 2 S′ has बहु inserted before वर्म.

णुध्वम् कुरुत । एतत् सर्वं शरीरसद्भावे भवतीति तस्य विनाशाभावो दार्ढ्यं च प्रार्थ्यते । वः युष्माकं संबन्धी चमसः चमसवच्चमसः भाग-[1]साधनभूतो देहः मा सुस्रोत् मा स्रवतु मा विनश्यतु । ॥ स्रवते-र्लेङि व्यत्ययेन शपः श्नुः ॥ । तं देहं दृंहत दृढीकुरुत स्वावस्थाने-नेति इन्द्रियाणि स्तूयन्ते । ॥ दृह दृहि वृद्धाविति धातुः ॥ ॥ यद्वा हे ऋत्विजः व्रजं कृणुध्वम् गोष्ठं कुरुत । घर्मा[2]शिरादिविनियोगार्थं गो-स्थानं कुरुत । स हि स खलु नृपाणः नेतृणां देवानां पातव्यः देव-पानसाधनभूत इति सांनाय्यरूपेण वा आशिररूपेण वा गोपयःप्रभृतिकं देवाः पिबन्ति । वर्म वर्माणि सीव्यध्वम् वर्मवत् प्रधानस्य उभयत आ-च्छादकत्वात् प्रयाजादीनि प्राच्यानि प्रतीच्यानि च अङ्गानि वर्माणि । तानि सीव्यध्वम् संतानयत । बहुलानि पृथूनीति वर्मविशेषणम् । तथा पुरः पुराणि होतृधिष्ण्यादीनि यष्टव्यानां देवानां वा पुरः शरीराणि अ-योवत् सारभूतानि अधृष्टानि च । पुर इति पूरणीया ग्रहा वा विव-क्ष्यन्ते । तान् कुरुत । वः युष्मदीयश्चमसो यज्ञाख्यः भक्षणसाधनभूत-श्चमस एव वा । चमसपक्षे सामान्येन एकवचनम् । मा सुस्रोत् मा[3] स्रवेत् । तं दृंहत दृढीकुरुत । यथा विकलो न भवति तथा कुरुत ॥ यद्वा हे योद्धारः व्रजम् संघातात्मकं ग्रामं कुरुत । स खलु युष्मदीयः सं-ग्रामो नृपाणः । नरो योद्धारः पिबन्ति प्रत्यर्थिनां प्राणान् इति नृपाणः । वर्म कवचानि देहावरणानि सीव्यध्वम् । यथा परकीयशस्त्रैः शरीरभेदो न भवति तथा संनह्यध्वम् । आयसीः अयोनिर्मिताः पुरः नगराणि कृणुध्वं शत्रुबाधापरिहारार्थं स्वरक्षार्थं च । एतादृशो वः युष्माकं चमसः अदनसाधनभूतः संग्रामो मा सुस्रोत् माऽपगच्छतु । तं दृंहतेति मन्त्र-द्रष्टा ऋषिर्ब्रूते ॥

पञ्चमी ॥

यज्ञस्य चक्षुः प्रभृतिर्मुखं च वाचा श्रोत्रेण मनसा जुहोमि ।
इमं यज्ञं विततं विश्वकर्मणा देवा यन्तु सुमनस्यमानाः ॥ ५ ॥

1 S' has भागस्य for भागसा°. 2 S' घर्मशिरा°. 3 S' माः सस्रवेत्.

यज्ञस्य । चक्षुः । प्रऽभृतिः । मुखम् । च । वाचा । श्रोत्रेण । मनसा । जुहोमि ।

इमम् । यज्ञम् । विऽततम् । विश्वऽकर्मणा । आ । देवाः । यन्तु । सुऽमनस्यमानाः ॥ ५ ॥

एषा ऋक् पूर्वमेव व्याख्याता [२.३५.५] । चक्षुरादीन्द्रियाणि मनो-यज्ञस्य संबन्धित्वेन जुहोमि तत्प्रवणानि करोमि । इमं यज्ञं विश्वस्रष्ट्रा देवेन विततं विस्तीर्णम् इमं मानसं यज्ञं देवाः सुमनस्यमानाः सुमनस इव आचरन्तो यन्तु प्राप्नुवन्तु इति संग्रहार्थः ॥

षष्ठी ॥

ये देवानामृत्विजो ये च यज्ञिया येभ्यो हव्यं क्रियते[१] भागधेयम् ।
इमं यज्ञं सह पत्नीभिरेत्य[२] यावन्तो देवास्तविषा[३] मादयन्ताम् ॥ ६ ॥

ये । देवानाम् । ऋत्विजः । ये । च । यज्ञियाः । येभ्यः । हव्यम् । क्रियते[१] । भागऽधेयम् ।

इमम् । यज्ञम् । सह[२] । पत्नीभिः । आऽइत्य । यावन्तः । देवाः । तविषाः[३] । मादयन्ताम्[४] ॥ ६ ॥

देवानां मध्ये ये ऋत्विजः ऋतौ काले यष्टारः ऋत्विग्भूता वर्तन्ते । ये च यज्ञिया यज्ञार्हा यष्टव्या वर्तन्ते । येभ्य उभयेभ्यो देवेभ्यः भाग-धेयम् भागरूपं हव्यं हविः क्रियते दीयते । यावन्तो यत्परिमाणा देवाः सन्ति तावन्तस्तविषा महान्तो देवाः पत्नीभिः स्वस्वनारीभिः इन्द्राण्या-

१ A B^h C R S^m क्रियते. Cs कृयते. D कृणुते. J कृयते corrected into कृणुते ।. P कृयते ।. We with K K^m V Dc P^2. २ A K K^m V Dc °पत्नीभिरे°. B^h S^m °पत्नीभिरे°. R °पत्नीभिरैत्य. C पत्नीभिरे° changed to °पत्नीभिरे°. D पत्नीभिरे°. Cs पत्नीभिरैत्य. P P^2 J सहऽपत्नीभिः ।. ३ A R Cs °स्तविषां मादयंतां. B^h C D S^m °स्तविषा मादयंतां. V K K^m °स्तविषा मादयन्तां. Dc °स्तविषा मादयंतां changed to °स्तविषा मादयंतां. P तविषां ।. P^2 J तविषा ।. We with Sâyaṇa and accentuate accordingly. ४ P^2 मादयंताम् ।. We with P J.

दिभिः सह इमं यज्ञम् एत्य आगत्य मादयन्ताम् हविःस्वीकारेण तृप्ता भवन्तु ॥

[इति] सप्तमेनुवाके चतुर्थं सूक्तम् ॥

"त्वमग्ने व्रतपाः" इति सूक्तस्य दर्शस्य पूर्णमासस्य वा व्यतिक्रमे आज्यहोमे शान्तसमिदाधाने वा विनियुक्तम् । सूत्रितं हि कौशिकेन संहिताविधौ । "एतेनैवामावास्यो[1] व्याख्यातः । ऐन्द्राग्नोत्र द्वितीयो[1] भ- "वति । तयोर्व्यतिक्रमे त्वमग्ने व्रतपा असि[१९. ५९] कामस्तदग्रे[१९. "५२] इति शान्ताः" इति [कौ° १. ६] ॥

तत्र प्रथमा ॥

त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा ।
त्वं यज्ञेष्वीड्यः ॥ १ ॥

त्वम् । अग्ने । व्रतऽपाः । असि । देवः । आ । मर्त्येषु । आ ।
त्वम् । यज्ञेषु । ईड्यः ॥ १ ॥

हे अग्ने त्वं व्रतपाः व्रतस्य कर्मणः पालयिता असि भवसि । मर्त्येषु मरणधर्मसु मनुष्येषु देवः द्योतमानः जाठराग्निरूपः [आ] अभिभवसि समन्ताद् व्याप्नोषि । द्वितीय आकारः आभिमुख्यार्थो वा[2] । किं च यज्ञेषु दर्शपूर्णमासादिषु त्वमेव ईड्यः स्तोतव्यो भवसि ॥

द्वितीया ॥

यद् वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः ।
अग्निष्टद् विश्वादा पृणातु विद्वान्त्सोमस्य यो ब्राह्मणाँ आविवेश ॥ २ ॥

---

१ A B[h] C देवा आ. D K K[m] R V Cs देवा आ. Dc देव आ changed to देवा आ. P P[2] J देवाः।. P J आऽमर्त्येषु।. P[2] आ। मर्त्येषु।. We with S[m]. २ A B[h] D S[m] Cs विश्वादा. C Dc विश्वादा changed to विश्वादा. P P[2] J विश्वऽअत्।. We with C K K[m] R V Dc P P[2] J. No MS. reads °श्वमा° with the *Rigveda* and Sâyaṇa. ३ R S[m] ब्राह्मणँ. Dc C ब्राह्मणां. We with A B[h] K[m] V Cs.

---

1 S' एतेनामावास्या व्याख्याता ऐंद्राग्नौत्र द्वितीया. We with *Kaus'ika* supported by Dârila. 2 So S'.

यत् । वः । वयम् । प्रऽमिनाम । व्रतानि । विदुषाम् । देवाः । अविदुःऽतरासः ।
अग्निः । तत् । विश्वऽआत् । आ । पृणातु । विद्वान् । सोमस्य । यः । ब्राह्म-
णान् । आऽविवेश ॥ २ ॥

हे देवाः विदुषाम् जानतां वः युष्माकं व्रतानि कर्माणि अविदुष्टरासः अत्यर्थं[1] कर्ममार्गम् अविद्वांसो वयं [यत्] प्रमिनाम प्रकर्षेण हिनसाम विनाशितवन्तः । "मीनातेर्निगमे" इति ह्रस्वः । तद् विश्वम् लुप्तकर्म विद्वान् जानानः अग्निः आ पृणाति* आपूरयति अविकलं करोति । योग्निः सोमस्य यष्टृत्वेन संबन्धिनो ब्राह्मणान् आविवेश आविष्टः अभिमुखं गतवान् भवति ॥

तृतीया ॥

आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनुप्रवोढुम् ।
अग्निर्विद्वान्त्स यजात् स इद्धोता सोध्वरान्त्स ऋतून् कल्पयाति ॥ ३ ॥

आ । देवानाम् । अपि । पन्थाम् । अगन्म । यत् । शक्नवाम । तत् । अनुऽप्रवोढुम् ।
अग्निः । विद्वान् । सः । यजात् । सः । इत् । होता । सः । अध्वरान् । सः । ऋतून् । कल्पयाति ॥ ३ ॥

देवानाम् यष्टव्यानां पन्थाम् पन्थानं येन देवान् प्राप्नोति तं पन्थानमपि आ अगन्म । तत्र प्रविष्टा इत्यर्थः । किमर्थम् । यद् वयम् अनुष्ठानं [शक्नवाम] शक्नुयाम तद् अनुष्ठानम् अनुक्रमेण प्रवोढुम् प्रापयितुं कर्तुम् देवानां पन्थानम् अनुगताः स्म इति । गमेर्लुङि छ्लेर्लुकि "मो नो धातोः" इति मकारस्य नकारः । वहतेस्तुमुनि "सहिवहोरोदवर्णस्य" इति अवर्णस्य ओकारः । अथ सोग्निः विद्वान् तं पन्थानम् यजात् यजतु देवान् । सेत्*[2] स एव होता मनुष्या-

१ P देवाः ।. We with P J. २ P P J अविंऽदुस्तरासः ।. ३ So all our MSS. and Vaidikas, and not तदनुप्रवोढुम्. ४ C K R S V Dc Cs सोध्वरान्त्स. We with A B D.

1 S' अत्यर्थं°. 2 Sâyaṇa's text : सेदु होता for our स इद्धोता.

णाम् देवानाम् आह्वाता वा स एव अध्वरान् हिंसारहितान् यज्ञान् [स] ऋतून् यज्ञकालांश्च कल्पयाति कल्पयतु ॥

[इति] सप्तमेनुवाके पञ्चमं सूक्तम् ॥

वाङ्म आसंन्नसोः प्राणश्चक्षुरक्ष्णोः श्रोत्रं कर्णयोः ।

अपलिताः केशा अशोणा दन्ता बहु बाह्वोर्बलम् ॥ १ ॥

वाक् । मे । आसन् । नसोः । प्राणः । चक्षुः । अक्ष्णोः । श्रोत्रम् । कर्णयोः ।

अपलिताः । केशाः । अशोणाः । दन्ताः । बहु । बाह्वोः । बलम् ॥ १ ॥

ऊर्वोरोजो जङ्घयोर्जवः पादयोः ।

---

१ All the saṁhitâ- and pada-MSS. give the five mantras (from वाङ्मे to उत् तिष्ठ). The *Sarvânukramaṇî* describes them. The *Panchapaṭalikâ* is not expected to notice them. Sâyaṇa omits them both from his text and from his commentary. His anuvâka is of 14 sûktas i.e. of four less than the eighteen found in the MSS. The verses omitted form four sûktas and make up the number eighteen. Our text is constituted chiefly on the basis of our MSS. with such corrections as are obviously necessary. The MSS. and Vaidikas are mostly corrupt. २ **A** °आस्यन्नसों, omitting the visarga. **B**[h] **C D K**[m] **R S**[m] **V Dc** आस्यन्नसोः (**S**[m] आस्यं नसोः). **Cs** आस्यन्नसों, omitting the visarga. **P P**[2] **J** आस्यम् । नसोः ।. ३ **K K**[m] **V Dc** °रक्ष्योः. **B**[h] **C D R S**[m] **Cs** °रक्षोः. **P** अक्षोः ।. **P**[2] **J** अक्ष्योः ।. We with **A**.

४ **B**[h] अपलिता केशा शोणंदिता बहु बाह्वोर्बलं.

**K K**[m] **V Dc** अपलिता केशा (**Dc** केशा) शोणंदिता बहु बाह्वोर्बलं.

**A C D R S**[m] **Cs** अपलिता केशा शोणंदिता बहु (**C** वहु) बाह्वोर्बलं.

**P P**[2] **J** अपलिता । केशा (**P**[2] केशा)। शोणंदिता । वहं (**P**[2] **J** वहं) । बाह्वोः । बलम् ।.

५ **B**[h] **R** ऊर्वोरोजं जंघयोर्जवः पादयोः । प्रतिष्ठा (**R** प्रतिष्ठा) अरिष्टानि मे सर्वान्मातिपृष्टाः.

**C Cs** ऊर्वोरोजं जंघयोर्जवः पादयोः । प्रतिष्ठा (**Cs** प्रतिष्ठा) अरिष्टानि मे सर्वान्मातिपृष्टा.

**D** ऊर्वोरोजं जंघयोर्जवः पादयोः । प्रतिष्ठा अरिष्टानि मे सर्वान्माति पृष्टाः.

**K**[m] **V Dc** ऊर्वोरोजं जंघयोर्जवः पादयोः । प्रतिष्ठा अरिष्टानि मे सर्वान्मातिपृष्टा.

**S**[m] ऊर्वोरोज जंघयोर्जवः पादयोः । प्रतिष्ठा अरिष्टानि मे सर्वातमानिपृष्टाः.

**P**[2] ऊर्वोः । ओजं । जंघयोः । जवः । पादयोः ॥ प्रतिऽस्था । अरिष्टानि । मे । सर्वान् । मा । अतिऽपृष्टा ।.

**P J** ऊर्वोः । ओजः । जंघयोः । जवः । पादयोः ॥ प्रतिऽस्था । अरिष्टानि । मे । सर्वान् । मा (**J** मा) । अतिऽपृष्टाः ।.

प्रतिष्ठा अरिष्टानि मे सर्वात्मानिभृष्टः ॥ २ ॥

ऊर्वोः । ओजः । जङ्घयोः । जवः । पादयोः ।
प्रतिऽस्था । अरिष्टानि । मे । सर्वा । आत्मा । अनिऽभृष्टः ॥ २ ॥

तनूस्तन्वा मे सहे दतः सर्वमायुरशीय ।
स्योनं मे सीद पुरुः पृणस्व पवमानः स्वर्गे ॥ १ ॥

तनूः । तन्वा । मे । सहे । दतः । सर्वम् । आयुः । अशीय ।
स्योनम् । मे । सीद । पुरुः । पृणस्व । पवमानः । स्वःऽगे ॥ १ ॥

प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु ।
प्रियं सर्वस्य पश्यत उत शूद्र उतार्ये ॥ १ ॥

प्रियम् । मा । कृणु । देवेषु । प्रियम् । राजऽसु । मा । कृणु ।
प्रियम् । सर्वस्य । पश्यतः । उत । शूद्रे । उत । आर्ये ॥ १ ॥

उत् तिष्ठ ब्रह्मणस्पते देवान् यज्ञेन बोधय ।
आयुः प्राणं प्रजां पशून् कीर्तिं यजमानं च वर्धय ॥ १ ॥

---

१ V सहे. K[m] सहे १. B[h] C सहे having no figure. D R S[m] सहे ३. Dc सहे १. Cs सहेरदताः (i. e. सहे ३ दताः). P P[2] सहे ।. J सहे ।. P P[2] J दताः ।. २ B[h] पवमान. We with A C D K[m] R S[m] V Dc Cs. ३ Cs स्वर्ग्गेः.

४ A D S[m] प्रियं सर्वस्य पश्यतोत शूद्र उतार्ये.
B[h] C प्रियं सर्वस्य पश्यतोत शूद्रमुतार्ये.
K K[m] V Dc प्रियं सर्वस्य पश्यतोत शूद्र उतार्ये.
R Cs प्रियं सर्वस्य पश्यतोत शूद्र उतार्ये.
P P[2] J प्रियम् । सर्वस्य । पश्यत (J पश्यतः changed to पश्यत) । उत । शूद्रम् । उत । आर्ये ।.

५ B[h] S[m] Dc Cs पशुं. C D R पशूं. K[m] V पशून्. P P[2] J पशुम् ।.

उत् । तिष्ठ । ब्रह्मणः[1] । पते । देवान् । यज्ञेन । बोधय ।

आयुः । प्राणम् । प्रऽजाम् । पशून् । कीर्तिम् । यजमानम् । च । वर्धय ॥ १ ॥

"अग्ने[1] समिधम्" इति सूक्तेन ब्रह्मचारिकर्तव्ये अग्निकार्ये प्रत्यृचं चतस्रः समिध आदध्यात् । सूत्रितं हि संहिताविधौ । "इदम् आपः प्र "वहत [७.९४.३] इति पाणी प्रक्षालयते । सं मा सिञ्चन्तु[७.३४] "इति त्रिः पर्युक्षति[2] । अग्ने[3] समिधम् आहार्षम्[१९.६४] इत्यादधाति "चतस्रः" [कौ° ७.८] इति ॥

तत्र प्रथमा ॥

अग्ने[2] समिधमाहार्षं बृहते जातवेदसे ।

स मे श्रद्धां च मेधां च जातवेदाः प्र यच्छतु ॥ १ ॥

अग्ने[2] । सम्ऽइधम् । आ । अहार्षम् । बृहते । जातऽवेदसे ।

सः । मे । श्रद्धाम् । च । मेधाम् । च । जातऽवेदाः[3] । प्र । यच्छतु ॥ १ ॥

बृहते महते जातवेदसे जातानां वेदित्रे जातैः प्राणिभिर्ज्ञायमानाय[4] जातधनाय वा अग्नये* समिधम् समिन्धनसाधनं काष्ठम् आहार्षम् आहृतवान् अस्मि । सः समिधा समिद्धो जातवेदा अग्निः मे मह्यं श्रद्धां मेधां च अधीतवेदधारणां च प्र यच्छतु ददातु ॥

द्वितीया ॥

इध्मेन त्वा जातवेदः समिधा वर्धयामसि ।

तथा त्वमस्मान् वर्धय प्रजया च धनेन च[4] ॥ २ ॥

१ J ब्रह्मणः ।. P ब्रह्मणः ।. We with P̊[2]. २ A D R S̊[m] Cs अग्ने समिधमहा° B̊[h] अग्ने समिधमाह°. K̊[m] V अग्ने समिधमाहा°. K अग्नये समिधमाहा°. Dc अग्ने समिधमाहा° changed to अग्ने समिधमाहा°. P P̊[2] J अग्ने । सम्ऽइधम् । आ । अहार्षम् ।. We with C and P P̊[2] J. ३ P जातऽवेदः ।. We with P̊[2] J. ४ See foot-note 1, next page.

1 So S'. See note 3. 2 S' पर्युक्ष्यति. 3 S' अग्नये. Sâyaṇa's text also: अग्नये समिधम् &c. We with *Kaus'ika*. 4 S' जातमानाय.

इ॒ध्मेन॑ । त्वा॒ । जा॒त॒ऽवे॒दः॒ । स॒म्ऽइधा॑ । व॒र्धया॑मसि ।
तथा॑ । त्वम् । अ॒स्मान् । व॒र्धय॑ । प्र॒ऽजया॑ । च॒ । धने॑न । च॒ ॥ २ ॥

हे जातवेदस्त्वा त्वाम् इध्मेन इन्धनसाधनेन समिधा काष्ठेन वर्धयामसि प्रवृद्धं कुर्मः । तथा तेन प्रकारेण त्वम् अस्मान् समिदाधातॄन् प्रजया धनेन च वर्धय ॥ दीर्घम्[1] आयुश्च मे कृणोतु करोतु । इति चरमः पादः परोक्षवादः । भवच्छब्दाध्याहारो वा ॥

तृतीया ॥

यद॑ग्ने॒ यानि॒ कानि॑ चि॒दा ते॒ दारू॑णि द॒ध्मसि॑ ।
सर्व॒ं तद॑स्तु मे शि॒वं तज्जु॑षस्व यविष्ठ्य ॥ ३ ॥

यत् । अ॒ग्ने॒ । यानि॑ । कानि॑ । चि॒त् । आ । ते॒ । दारू॑णि । द॒ध्मसि॑ ।
सर्व॑म् । तत् । अ॒स्तु॒ । मे॒ । शि॒वम् । तत् । जु॒ष॒स्व॒ । य॒वि॒ष्ठ्य॒ ॥ ३ ॥

हे अग्ने ते तुभ्यं यानि कानि चिद् दारूणि यज्ञियानि अयज्ञियानि वा काष्ठानि यद् आ दध्मसि आदध्मः तत् सर्वं मे मम शिवम् श्रेयःप्रदम् अस्तु भवतु । हे यविष्ठ युवतम । "स्थूलदूरयुव°" इति युवशब्दस्य यणादिलोपः । तादृश अग्ने तत् आहितं काष्ठजातं जुषस्व सेवस्व ॥

चतुर्थी ॥

ए॒तास्ते॑ अग्ने स॒मिध॒स्त्वमि॒द्धः स॒मिद् भ॑व ।

१ A B^h C D K K^m R S^m V P P^2 J दारुणि दध्मसि. We with Sâyaṇa and the *Rigveda*. २ D K^m V Dc and Sâyaṇa's text: यविष्ठ. P यविष्ठ्य ।. R Cs °स्व यविष्ठ्य. We with B^h C S^m P^2 J. ३ A B^h V °स्त्वामिद्धं सोसमिद्भवः. C °स्त्वामिद्धं सोसमिद्भव. D R °स्त्वामिद्धं सोसमिद्भव. K K^m °स्त्वामिद्धसोसमिद्भव. S^m °स्त्वा विद्धं सोसमिद्भव. Dc °स्त्वामिद्धांसोसमिद्भव changed to °स्त्वामिद्धसोसमिद्भव. Cs °स्त्वामिद्धंसोसमिद्भव. Do the corrected read-

1 Sâyaṇa's text adds: दीर्घमायुः कृणोतु मे after धनेन च. A B^h C R K K^m V Cs omit the portion. Dc read the words (दीर्घमायुः कृणोतु मे) once but has subsequently cancelled them. S^m has afterwards added them in its margin. P P^2 J know nothing about them. D is the only MS. that gives them.

आयुरस्मासु धेह्यमृतत्वमाचार्याय ॥ ४ ॥

एताः । ते । अग्ने । समऽइधः । त्वम् । इद्धः । समऽइत् । भव ।

आयुः । अस्मासु । धेहि । अमृतऽत्वम् । आऽचार्याय ॥ ४ ॥

हे अग्ने ते तुभ्यम् एताः समिध आहृताः । ताभिः समिद्भिस्त्वम् इद्धः प्रज्वलितो भव । ततः अस्मासु समिध आहितवत्सु आयुः जीवनं धेहि । आचार्याय अस्मदुपाध्यायाय उपनयनकर्त्रे गायत्रीप्रदात्रे वेदाध्यापकाय अमृतत्वम् अविनाशं च धेहि प्रयच्छ ॥

[इति] सप्तमेनुवाके षष्ठं सूक्तम् ॥

"हरिः सुपर्णः" "अयोजालाः" "पश्येम शरदः" इति एकर्चानां त्रयाणां सूक्तानां सूर्योपस्थाने लैङ्गिको विनियोगः ॥

तत्र प्रथमा ॥

हरिः सुपर्णो दिवमारुहोर्चिषा ये त्वा दिप्सन्ति दिवमुत्पतन्तम् ।

अव तां जहि हरसा जातवेदोबिभ्यदुग्रोर्चिषा दिवमा रोह सूर्य ॥ १ ॥

हरिः । सुऽपर्णः । दिवम् । आ । अरुहः । अर्चिषा । ये । त्वा । दिप्सन्ति । दिवम् । उत्ऽपतन्तम् ।

---

ing of Dc, the recitals of K $\overset{m}{K}$ and the original reading of Cs and the °सो समि° of all our authorities point to some such reading as ताभिर्वसो समिद्धव ? P $\overset{2}{P}$ J त्वाम् । इत् । हंसः । समऽइत् । भव ।. Sâyaṇa's text °स्त्वमिंद्रः समिद्धव. We read त्वमिद्धः with Sâyaṇa. Comparing the pada-pâṭha with the saṁhitâ we may say that the present pada-pâṭha is more modern than the date when the saṁhitâ of the nineteenth Kâṇḍa became corrupted.

१ A धेह्यमृतत्वमा°. $\overset{h}{B}$ धेह्यमृतमा°. D धेह्यमृतं त्वमा°. We with C K $\overset{m}{K}$ R $\overset{m}{S}$ V Dc Cs. २ C D अवतां. R अवतान्. Cs अवतान्. We with $\overset{h}{B}$ K $\overset{m}{K}$ $\overset{m}{S}$ V Dc. ३ $\overset{m}{S}$ जातवेदो बिभ्यदुग्यों°. A $\overset{h}{B}$ C D K $\overset{m}{K}$ R V Dc Cs जातवेदो बिभ्यदुग्रो°. P $\overset{2}{P}$ J जातऽवेदः । बिभ्यत् । उग्रः (J originally उग्र) ।. None of our saṁhitâ authorities have °दुग्रा°. We with Sâyaṇa, and accents accordingly.

---

1 The *Sarvânukramaṇî* as well as our MSS. and Vaidikas make this consist of eight mantras. The former remarks : पश्येमेत्यष्टौ सौर्याः प्राजापत्या गायत्र्य इति. See note 1 at page ५४६.

अव॑ । तान् । ज॒हि॒ । हर॑सा । जा॒त॒ऽवे॒दः॒ । अबि॑भ्यत् । उ॒ग्रः । अ॒र्चिषा॑ । दिव॑म् । आ । रो॒ह॒ । सू॒र्य॒ ॥ १ ॥

हे सूर्य हरिः । तमो हरतीति हरिः । सुपर्णः सुपतनस्त्वम् अर्चिषा तेजसा दिवम् द्युलोकम् आरुहः । रोहतेर्लुङि "कृमृदृरुहिभ्यश्छन्दसि" इति च्लेरङ् । ङित्वाद् गुणाभावः । दिवम् द्युलोकम् उत्पतन्तम् उद्गच्छन्तं त्वा त्वां ये शत्रवः मन्देहादयो दिप्सन्ति दम्भितुं तिरस्कर्तुं प्रतिरोद्धुम् इच्छन्ति तान् प्रतिबन्धकान् शत्रून् हे जातवेदः जातैः प्राणिभिर्ज्ञायमान [यद्वा] जातानां प्राणिनां कर्माणि तत्कर्मफलं[1] च जानन् । सायंकाले सूर्यस्याग्नावनुप्रवेशात् जातवेदःशब्देन सूर्यस्य व्यवहारः । तथाविध त्वं हरसा शत्रुनिर्हारकेण तेजसा अव जहि यथा अवस्तात्[2] ते भवन्ति तथा घातयेत्यर्थः । ततः अबिभ्यत् शत्रुभ्यो भीतिम् अकुर्वन् उग्रः उद्गूर्णबलः सन् हे सूर्य अर्चिषा तेजसा दिवम् द्युलोकम् आ रोह आतिष्ठ ॥

[इति] सप्तमेनुवाके सप्तमं सूक्तम् ॥

"अयोजालाः" इत्येकर्चस्य सूक्तस्य सूर्योपस्थाने लैङ्गिको विनियोगः ॥

तत्र प्रथमा ॥

अयो॑जाला॒ असु॑रा मा॒यिनो॑ऽय॒स्मयैः॒ पाशै॑र॒ङ्किनो॒[२] ये चर॑न्ति ।
तांस्ते॑ रन्धयामि॒ हर॑सा जातवेदः स॒हस्र॑ऋष्टिः[३] स॒पत्ना॑न् प्रमृ॒णन् पा॑हि॒[४] वज्रः॑ ॥ १ ॥

अयः॑ऽजालाः । असु॑राः । मा॒यिनः॑ । अ॒य॒स्मयैः॑ । पाशैः॑ । अ॒ङ्किनः॑ । ये । चर॑न्ति ।

---

१ See foot-note ३ on the previous page. २ A B^h पाशैरङ्किनो. We with C D K^m R S^m V Dc Cs. ३ A स॒हस्र॑भृष्टिः. B^h स॒हस्र॑दृष्टिः. C R S^m V Cs स॒हस्र॑हृष्टिः. K^m स॒हस्र॑हुष्टिः. D स॒हस्र॑हृष्टिः. Dc स॒हस्र॑रिष्टिः changed to स॒हस्र॑हृष्टिः. J °हृष्टिः ।. P °हृष्टि ।. P^2 °हृष्टिः ।. We with Sâyaṇa. ४ A K K^m V Dc याहि. P P^2 J या॑हि॒ ।. We with B^h C D R S^m Cs.

1 S′ तत्कर्माणिकर्मफलं for कर्माणि तत्कर्मफलं. 2 S′ अवस्थात्ते for अवस्तात् ते.

तान् । ते । रन्धयामि । हरसा । जातऽवेदः । सहस्रऽऋष्टिः । सऽपत्नान् । प्रऽमृणन् । पाहि । वज्रः ॥ १ ॥

अयोजालाः । जालम् आनायः । अयोमयवागुरावन्तो मायिनः कुटिला ये असुराः सुरविद्वेषिणः अयस्मयैः पाशैः । "अयस्मयादीनि च्छन्दसि" इति भसंज्ञत्वेन निपातनात् पदसंज्ञानिबन्धनरुत्वाभावः । एतादृशैः पाशैः अङ्किनः लक्षणवन्तः पाशहस्ताश्चरन्ति । सत्कर्मकारिणो हिंसितुम् इति शेषः । तांस्तथाविधान् असुरान् हे जातवेदः ते तव हरसा तेजसा रन्धयामि । रध्यतिर्वशगमने इति यास्कः [नि° १०. ४०] । वशयामि । पुरुषव्यत्ययो वा । रन्धय वंशयेति । स्वाधीनान् कृत्वा च सहस्रऋष्टिः । ऋष्टिरायुधविशेषः । सहस्रसंख्याकायुधविशेषयुक्तो वज्रः । अर्शआदित्वाद् मत्वर्थीयः अच् प्रत्ययः । वज्रवान् त्वं सपत्नान् शत्रून् प्रमृणन् प्रकर्षेण हिंसन् पाहि पालय अस्मान् उपस्थातृन् ॥

[इति] सप्तमेनुवाकेऽष्टमं सूक्तम् ॥

"पश्येम शरदः शतम्" इति सूक्तस्य सूर्योपस्थाने लैङ्गिको विनियोगः ॥

तत्पाठस्तु ॥

| | |
|---|---|
| पश्येम शरदः शतम् ॥ १ ॥ | पश्येम । शरदः । शतम् ॥ १ ॥ |
| जीवेम शरदः शतम् ॥ २ ॥ | जीवेम । शरदः । शतम् ॥ २ ॥ |
| बुध्येम शरदः शतम् ॥ ३ ॥ | बुध्येम । शरदः । शतम् ॥ ३ ॥ |
| रोहेम शरदः शतम् ॥ ४ ॥ | रोहेम । शरदः । शतम् ॥ ४ ॥ |
| पूषेम शरदः शतम् ॥ ५ ॥ | पूषेम । शरदः । शतम् ॥ ५ ॥ |
| भवेम शरदः शतम् ॥ ६ ॥ | भवेम । शरदः । शतम् ॥ ६ ॥ |

१ See foot-note ३ on the previous page. २ See foot-note ४ on the previous page. ३ B̊ C D K R S̊ V Dc बुद्धेम. K̊ बुत्धे°. Cs बुधेम. P P̊ बुद्धेम ।. J बुधेम ।. From here up to the end of the kâṇḍa the MS. P does not accentuate.

1 S′ reads त before एतादृशैः. 2 S′ वेशेति. 3 S′ °युक्त° for °युक्तो.

भूयेम शरदः शतम् ॥ ७ ॥ भूयेम । शरदः । शतम् ॥ ७ ॥
भूयसीः शरदः शतात् ॥ ८ ॥ भूयसीः । शरदः । शतात् ॥ ८ ॥

हे सूर्य त्वां शरदः शतम् शतसंख्याकान् संवत्सरान् पश्येम । अत एव शतं शरदो जीवेम । बुध्येम । ※व्यत्ययेन परस्मैपदम्※ । बुध्येमहि कार्यजातम् । रोहेम उत्तरोत्तरं प्ररूढाः प्रवृद्धा भवेम । पूषेम [शत]संवत्सरपरिमितकालपर्यन्तं पुष्टिं लभेमहि । ※पूष पुष्टौ । भौवादिकः※ । भवेम । भवनं संभवनम् । पुत्रादिप्रवाहेण संभूताः स्याम । भूयेम भूयास्म । इति भवनम् आशास्यते । ※आशीर्लिङि छान्दसी रूपसिद्धिः※ । भूयसीः न केवलं शतसंख्याकाः शरदः भूयसीः अधिकाः शरदः अनेककालपर्यन्तम् । ※"कालाध्वनोः°" इति सर्वत्र द्वितीया※ ॥

[इति] सप्तमेनुवाके नवमं सूक्तम् ॥

"अव्यसश्च" इति एकर्चं सूक्तं श्रौतस्मार्तसकलकर्मादौ जपेत् उपाकर्मणि च । सूत्रितं हि । "अभिजिति शिष्यान् उपनीय" इति प्रक्रम्य "अव्यसश्च [१९.६८.] इति जपित्वा सावित्रीम् ब्रह्म जज्ञानम्[४.१.१] इत्येकाम् त्रिषप्तीयं [१.१] च पच्छो वाचयेत्" इति [कौ° १४.३] ॥

तत्पाठस्तु ॥

अव्यसश्च व्यचसश्च बिलं वि ष्यामि मायया ।
ताभ्यामुद्धृत्य वेदमथ कर्माणि कृण्महे ॥ १ ॥

१ A C D R Cs भूयसी शरदः. K K̄ V भूयासी शरदः. S̄ भूयसी शरदः. Dc भूयसी शरदः changed to भूयासी शरदः. P P̄ J भूयसी ।. We with Sâyaṇa's text. २ So all our authorities. Sâyaṇa's text: शतम्. ३ A C R व्यचिसश्च. P P̄ विऽअचसः ।. J विऽअचसः ।. We with B̄ D K K̄ S̄ V Dc Cs. ४ B̄ C K K̄ R S̄ V Cs बि. P P̄ बिष्यामि ।. We with D Dc J. ५ B̄ °मुद्धृत्य वेदमथ. S̄ °मुद्धृत्यं वेदमथ. Cs °मुद्धृत्य वेदमथ. We with A C D K K̄ R V Dc. ६ A R S̄ कृण्महे. Dc कृण्महे changed to कृण्महे. We with B̄ C D V Cs and P P̄ J.

1 Sâyaṇa's text does not divide this hymn into eight portions but gives it as one mantra. See note 1, page ५४३. 2 S' repeats शरदः before संवत्सरान्. 3 S' इत्येतेषा.

अव्यसः[*1] । च । व्यचसः[*2] । च । बिलम् । वि[*3] । स्यामि । मायया ।
ताभ्याम् । उत्ऽहृत्य । वेदम् । अथ । कर्माणि । कृण्महे ॥ १ ॥

व्यचसः । ⧖ व्यचतिर्व्याप्तिकर्मा ⧖ । व्याप्तस्य सर्वशरीरव्यापकस्य व्यानवायोः समष्टिरूपस्य अव्यसः अव्यचसः । ⧖ वर्णलोपश्छान्दसः ⧖ । अव्याप्तस्य व्यष्टिरूपस्य प्राणात्मकस्य वायोः । ⧖ परस्परसमुच्चयार्थौ चकारौ । "व्यचेः कुटादित्वम् अनसीति वक्तव्यम्" इति पर्युदासाद् ङित्वाभावेन संप्रसारणाभावः ⧖ । तयोर्बिलम् बिलवद्विलं मूलाधारं मायया । कर्मनामैतत् । कर्मणा अभिभवनव्यापारेण वि ष्यामि विवृतं करोमि । ⧖ स्यतिरुपसृष्टो विमोचने इति नैरुक्ताः [नि° १. १७] ⧖ । शब्दं विवक्षोः पुरुषस्य प्रयत्नजनितवायुवशाद् मूलाधारे स्पन्दो भवतीति आगमिका आहुः "मूलाधारात् प्रथमम् उदितो यस्तु भावः पराख्यः" इति । ताभ्यां व्यानप्राणाभ्याम् । ⧖ करणे तृतीया ⧖ । वेदम् अक्षरात्मकमन्त्रसंघम् उद्धृत्य बिलरूपाद् मूलाधारात् परापश्यन्तीमध्यमावैखरीक्रमेण उद्गमय्य अथ अनन्तरं कर्माणि श्रौतानि स्मार्तानि च कृण्महे कुर्महे ॥ यद्वा अव्यचसः अव्याप्तस्य परिच्छिन्नस्य जीवात्मनः व्यचसः व्याप्तस्य परमात्मनश्च बिलम् उपलब्धिस्थानं हृदयं मायया अज्ञानेन वि ष्यामि विमुक्तं विरहितं करोमि । हृदये अज्ञानावृते सति कर्तव्याकर्तव्यविभागो न भवति । अतः कार्याकार्यविभागैक[1]ज्ञानपरिपन्थिनं मूढभावम् [2]अपसारयामीत्यर्थः । ताभ्यां जीवपरमात्मभ्यां वेदम् चिकीर्षित[3]कर्मविषयं ज्ञानम् उद्धृत्य संपाद्य अथ अनन्तरं कर्माणि नित्यनैमित्तिककाम्यानि कृण्महे कुर्महे । चिकीर्षितस्य कर्मणः स्वरूपम् तत्साधनकलापम् तदङ्गकलापम् तत्फलम् तत्कर्मप्रतिपादकमन्त्रब्राह्मणयोरर्थं च विदित्वा कर्मारब्धव्यम् इत्युक्तं भवति ॥

[इति] सप्तमेनुवाके दशमं सूक्तम् ॥

---

१ P P[2] J अविऽअसः।. २ See foot-note ३ on the previous page. ३ See foot-note ४ on the previous page.

---

1 S' °विभावेक°. 2 S' उप°. 3 S' चिकीर्षितं.

"जीवा स्थ" इति पञ्चमन्त्रात्मकेन सूक्तेन आयुष्कामः अग्निराचम्य आत्मानम् अनुमन्त्रयेत । सूत्रितं हि । "शुद्धा न आपः[१२.१.३०] "इति निष्ठीव्य जीवाभिः[१९.६९,७०]आचम्य एहि जीवम्[४.९] "इत्याञ्जनमणिं बध्नाति" इति [कौ०७.९] ॥

तत्पाठस्तु ॥

जीवा स्थ जीव्यासं सर्वमायुर्जीव्यासम् ॥ १ ॥

जीवाः । स्थ । जीव्यासम् । सर्वम् । आयुः । जीव्यासम् ॥ १ ॥

उपजीवा स्थोप जीव्यासं सर्वमायुर्जीव्यासम् ॥ २ ॥

उपऽजीवाः । स्थ । उप । जीव्यासम् । सर्वम् । आयुः । जीव्यासम् ॥ २ ॥

संजीवा स्थ सं जीव्यासं सर्वमायुर्जीव्यासम् ॥ ३ ॥

सम्ऽजीवाः । स्थ । सम् । जीव्यासम् । सर्वम् । आयुः । जीव्यासम् ॥ ३ ॥

जीवला स्थ जीव्यासं सर्वमायुर्जीव्यासम् ॥ ४ ॥

जीवलाः । स्थ । जीव्यासम् । सर्वम् । आयुः । जीव्यासम् ॥ ४ ॥

इन्द्र जीव सूर्य जीव देवा जीवा जीव्यासमहम् ।
सर्वमायुर्जीव्यासम् ॥ १ ॥

इन्द्र । जीव । सूर्य । जीव । देवाः । जीवाः । जीव्यासम् । अहम् ।
सर्वम् । आयुः । जीव्यासम् ॥ १ ॥

निगदव्याख्यातम् इदम् । इन्द्र जीव सूर्य जीव देवा जीवा इति मन्त्रे समाम्नाता इद्रसूर्यदेवाः संबोध्यन्ते । हे इन्द्रादयो यूयं जीवाः जीवनवन्तः

---

१ A B[h] C K[m] R S[m] V Dc Cs उप जीवा स्थोप जी°. D उप जीवा स्थोप जी°. P[2] J उप । जीवाः । स्थ । उप । जीव्यासम् । (J जीव्यासम् changed to जीव्यासम् ।). P उप । जीवाः । स्थ । उप । जीव्यासम् ।. We with D and J. २ P wants accents. P[2] J जीव्यासम् ।. J once read जीव्यासम्. ३ A B[h] D K K[m] R V Cs संजीवा स्थ संजीव्यासं (Cs संजीव्यासं). C संजीवा स्थ संजीव्यासं. S[m] very corrupt in accents, reading संजीवा स्थ संजीव्यासं. Dc संजीवा स्थ संजीव्यासं changed to संजीवा स्थ संजीव्यासं. P[2] J सम्ऽजीवाः । स्थ । सम्ऽजीव्यासम् (J सम्ऽजीव्यासम् ।). ४ B[h] D S[m] इन्द्र जीव सूर्य जीव (S[m] जीव). C इन्द्र जीव सूर्य जीव. We with K K[m] R V Dc Cs.

आयुष्मन्तः स्थ भवथ । भवदनुग्रहाद् अहमपि जीव्यासम् जीवनवान् आयुष्मान् भूयासम् । अनेनाचमनकर्मणा इति विनियोगाद्[1] अवगम्यते । कतिपयकालावस्थानमपि जीवनं भवेद् इति तत्राह सर्वम् इति । सर्वं संपूर्णं शतसंवत्सरपरिमितम् आयुर्जीव्यासम् प्राणाय धारयेयम् । एवम् उत्तरे मन्त्रा व्याख्येयाः ॥ उपजीव्याः॰ । उपशब्दः अधिकार्थः । अधिकं जीवनवन्तः । उपजीवयन्ति संनिहितान् भजकान् आयुष्मतः कुर्वन्तीति वा उपजीव्याः ॥ संजीव्याः॰ समीचीनजीवनवन्तः जीवनकाले एकः क्षणोपि वैयर्थ्येन[2] न नीयते[3] किं तु परोपकारित्वेनेति आयुषः सम्यक्त्वम् ॥ जीवलाः जीवः प्राणधारणम् । ꣸भावे घञ् । "सिध्मादिभ्यश्च" इति मत्वर्थीयो लच्꣸ ॥ हे इन्द्र परमैश्वर्यसंपन्न सर्वेन्द्रियप्रकाशक त्वं जीव आयुष्मान् भव । हे सूर्य सर्वस्य प्रसवितस्त्वं जीव । हे देवाः इन्द्रसूर्यव्यतिरिक्ता अग्न्यादयो यूयं जीवाः । भवतेति अनुषक्तक्रियापदस्य बहुवचनान्तत्वेन परिणमनम् । युष्मत्प्रसादाद् अहम् आचमनकर्मकर्ता चिरकालपर्यन्तं प्राणान् धारयेयम् इति आयुराशास्यते ॥

[इति] सप्तमेनुवाके एकादशं सूक्तम् ॥

"स्तुता मया वरदा" इति एकर्चस्य सूक्तस्य अधीतस्य वेदस्य गायत्र्या वा उपस्थाने लैङ्गिको विनियोगो द्रष्टव्यः ॥

ऋक्पाठस्तु ।

स्तुता मया वरदा वेदमाता[1] प्र चोदयन्तां पावमानी द्विजानाम् ।
आयुः प्राणं प्रजां पशुं[2] कीर्तिं द्रविणं ब्रह्मवर्चसम् ।
मह्यं दत्त्वा व्रजत ब्रह्मलोकम् ॥ १ ॥

स्तुता । मया । वरदा । वेदऽमाता[1] । प्र । चोदयन्ताम् । पावमानी । द्विजानाम् ।

१ A B$^{h}$ C K K$^{m}$ R वेदमाता प्रचोदयंतां. D वेदमाता प्रचोदयंतां. Dc वेदमाता प्रचोदयंतां changed to वेदमाता प्रचोदयंतां. Cs वेदमाता प्रचोदयंतां changed to वेदमाता प्रचोदयंतां. S$^{m}$ वेदमाता प्रचोदयंतां. P$^{2}$ J वेदऽमाता । प्रऽचोदयंताम् ।. P Cp the same except that they are not accented. २ A C D K$^{m}$ S$^{m}$ V पशूं. Cs पशु. Dc पशूं changed to पशून्. We with B$^{h}$ R P P$^{2}$ J and Sâyaṇa's text.

1 S' प्रविनियोगाद्. 2 S' वैयर्थेन. 3 S' नीयत इति.

आयुः । प्राणम् । प्रऽजाम् । पशुम् । कीर्तिम् । द्रविणम् । ब्रह्मऽवर्चसम् । मह्यम् । दत्त्वा । व्रजत । ब्रह्मऽलोकम् ॥ १ ॥

स्वानुष्ठितकर्मणो निरभिसंधिना सर्वार्थं फलाशासनं[1] स्वस्याविकलं भवतीत्यभिप्रायेण मन्त्रद्रष्टा ऋषिः स्वानुष्ठितवेदाध्ययनेन गायत्रीजपेन वा द्विजानाम् आयुरादिफलम् आशास्य तन्मध्यवर्तिनः स्वस्यापि फलं सिद्धवद् अनुवदति । मया वेदाध्यायकेन सावित्रीं जपता वा स्तुता अभिष्टुता स्वभ्यस्ता वरदा इष्टकामप्रदात्री पावमानी । पवमानः पापात् परिशोधकः सूत्रात्मा । "वायुरेव पवमानो दिशो हरित आविष्टः" इति ऐतरेयकश्रुतेः [ऐ० आ० २.१.१] । तत्प्रतिपादिका पावमानी वेदमाता वेदस्य ऋगादिरूपस्य माता सर्ववेदसारत्वेन मातृवत्प्रधानभूता सावित्री वेद एव वा माता मातृवद्धितकारित्वात् ।

वेद एव द्विजातीनां निःश्रेयसकरः परः ।

इति स्मृतेः । द्विजानाम् द्विजन्मनां ब्राह्मणानां त्रैवर्णिकानां वा आयुरादिफलानि प्र चोदयन्ताम् । ॥ पूजायां बहुवचनम् ॥ । प्रेरयतु प्रयच्छतु[2] । ब्रह्मवर्चसम् ब्रह्मणां वर्चः[3] ब्राह्मं तेजः । ॥ "ब्रह्महस्तिभ्यां वर्चसः" इति अच् समासान्तः ॥ । अथ मह्यं स्तोत्रे सर्वेषां फलप्रार्थकाय दत्त्वा आयुरादिकं फलं वितीर्य ब्रह्मलोकम् ब्रह्मणो लोकः सत्यलोकः ब्रह्मैव वा लोकः लोक्यमानं विद्वद्भिरनुभूयमानं परतत्त्वं व्रजत । इति प्रत्यक्षवादः । ॥ अत्रापि पूर्ववद् बहुवचनम् ॥ । शब्दावगम्यब्रह्माकारं परित्यज्य वाङ्मनसातीतार्थब्रह्मरूपा भवेति मन्त्रदर्शिना ऋषिणा साक्षात्कृतपरत्वेन उच्यते ॥

[इति] सप्तमेऽनुवाके द्वादशं सूक्तम् ॥

"यस्मात् कोशात्" इति एकर्चं सूक्तं सर्वेषु श्रौतस्मार्तकर्मसु ब्रह्मोत्थापनानन्तरं जपेत् । स्वाध्यायोत्सर्जनकर्मणि च अन्ते जपेत् । सूत्रितं हि कौशिकेन संहिताविधौ । "पौषस्यापरपक्षे त्रिरात्रं नाधीयीत तृती-

1 S' फलाशासने. 2 S' प्रगच्छतु. 3 S' °वर्चसः.

"यस्याः प्रातः समासं संदिश्य[1] यस्मात् कोशादित्यन्तः[2]" इति [कौ° १४. ३] ॥

ऋक्पाठस्तु ॥

यस्मात् कोशा॑दु॒दभ॑राम॒ वेदं॒[1] तस्मि॑न्न॒न्तरव॑ द॒ध्म एनम् ।

कृ॒तमि॒ष्टं[2] ब्रह्म॑णो वी॒र्ये॑ण तेन॑ मा देवा॒स्तप॑सावते॒ह ॥ १ ॥

यस्मा॑त् । कोशा॑त् । उ॒त्ऽअभ॑राम । वेद॑म् । तस्मि॑न् । अ॒न्तः । अव॑ । द॒ध्मः॒ । ए॒न॒म् ।

कृ॒तम् । इ॒ष्टम् । ब्रह्म॑णः । वी॒र्ये॑ण । तेन॑ । मा॒ । दे॒वाः॒ । तप॑सा । अ॒व॒त॒ । इ॒ह ॥ १ ॥

यस्मात् "अव्यसश्च व्यचसश्च" इति मन्त्रे प्रतिपादिताद् मूलाधाररूपाद् वा कोशात् कोशवत्कोशः यथा कोशाद् धनवस्त्ररत्नादिपूर्णाद् अपेक्षितं वस्तु आनीयते एवम् अस्य सर्ववर्णमन्त्रायतनत्वात् तत एवोद्धार इति तत्त्वेन व्यपदेशः । वेदम् विदन्त्यनेन प्रत्यक्षाद्यविषयम् उपायम् इति वेदः । उक्तं हि ।

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता ॥

इति । श्रौतस्मार्तसकलकर्मप्रतिपादकमन्त्रब्राह्मणरूपं वेदम् उदभराम उद्धृतवन्तः । कर्मानुष्ठानार्थम् उच्चारितवन्तः स्मः । ⌶ "हृग्रहोर्भः°" इति भत्वम् ⌶ । तस्मिन् पूर्वोक्ते स्थाने एनं येन कर्माण्यनुष्ठितानि तम् एतम् अन्वादिष्टं वेदम् अन्तः मध्ये अव दध्मः पुनः स्थापयामः । कर्मप्रयोगार्थं स्वमुखाद् उच्चारिता वर्णरूपा मन्त्रास्तथैव यदि निःसरेयुस्तर्हि उत्तरकाले मन्त्राभावेन कर्मानुष्ठानं न भवेद् इति पुनः पूर्वोक्त एव वेदोद्धरणापादानस्थाने[3] वेदनिधानम् उक्तम् इत्यभिप्रायः । ब्रह्मणः

१ D °दु॒दभराम॒ वेदं॒. K K̆ V Cs °दु॒दभ॑राम वेदं॒. S̈ को॒शादु॒दभ॒रा॑म वे॒दं॒. Dc कोशा॒दु॒दभ॑राम॒ वेदं॒ changed to कोशा॑दु॒दभ॑राम वेदं॒. P J उ॒त्॒ऽअभ॑राम । वे॒द॒म् (J वेद॑म्) ।. २ A B̆ ऋ॒त°. C कृ॒त° changed to ऋ॒त°. We with D K K̆ R S̈ V Dc Cs.

1 S′ दिशति for संदिश्य. 2 S′ °दित्यंतत इति for °दित्यन्तः इति. 3 S′ °स्थान एव.

देशकालवस्तुपरिच्छेदशून्यस्य परमात्मनो वीर्येण वीर्यरूपेण कर्मप्रतिपादकेन वा वेदेन कृतम् यत् कर्म ब्रह्मयज्ञादिकं निष्पादितम् इष्टम् यत् स्वाहावौषडादिशब्दैर्देवतार्थं हविः प्रत्तं तेन कृतेन इष्टेन च कर्मणा हे देवाः यूयम् इह कर्मलोके तपसा । तपःशब्देन फलं विवक्ष्यते । कर्मफलेन मा माम् अनुष्ठातारम् अवत रक्षत तर्पयत । कर्म अविकलं कृत्वा तत्फलेन मां संयोजयतेति यावत् । यद्वा तपसा कृच्छ्रानुष्ठितेन कर्मणा माम् अवत । अथ वा तपसा । तपः पर्यालोचनम् । तद्रूपेण तेन ब्रह्मणो वीर्येण मां संतर्पयतेति ॥

एकोनविंशे काण्डे सप्तमेनुवाके त्रयोदशं सूक्तम् ॥

सप्तमोनुवाकः समाप्तः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजराजपरमेश्वरश्रीवीरहरिहरमहाराजसाम्राज्यधुरंधरेण सायणार्यविरचिते माधवीये अथर्ववेदसंहिताभाष्ये
वेदार्थप्रकाशे एकोनविंशं काण्डं समाप्तम् ॥

श्रीविद्याशंकरार्पणम् अस्तु ॥

श्रीगणाधिपतये नमः ॥

यस्य निश्वसितं वेदा यो वेदेभ्योखिलं जगत् ।
निर्ममे तम् अहं वन्दे विद्यातीर्थमहेश्वरम् ॥
शान्तिकं पौष्टिकं कर्म प्रायशः प्राक् प्रपञ्चितम् ।
विंशेथ ब्रह्मवर्ग्याणां शस्त्रयाज्यादि वर्ण्यते ॥

तत्र विंशे काण्डे नवानुवाकाः । तत्र प्रथमेनुवाके त्रयोदश सूक्तानि । तत्र प्रथमं सूक्तं तृचात्मकम् । तास्तिस्र ऋचः अग्निष्टोमादियज्ञेषु ब्राह्मणाच्छंसिपोत्राग्नीध्राणां[1] क्रमेण प्रातःसवनिक्यः प्रस्थितयाज्याः । सूत्रितं हि वैताने । "प्रस्थितैश्चरिष्यन्नध्वर्युः[2] संप्रेष्यति । होतर्यज प्रशास्त-"ब्राह्मणाच्छंसिन् पोतर्नेष्टरग्नीद् इति । इन्द्र त्वा वृषभं वयम् इति "ब्राह्मणाच्छंसी यजति । उत्तराभ्यां पोत्राग्नीध्रौ" इति [वै° ३.९] ॥

तत्र प्रथमा ॥

इन्द्रं त्वा वृषभं वयं सुते सोमे हवामहे ।
स पाहि मध्वो अन्धसः ॥ १ ॥

इन्द्रं । त्वा । वृषभम् । वयम् । सुते । सोमे । हवामहे ।
सः । पाहि । मध्वः । अन्धसः ॥ १ ॥

हे इन्द्र परमैश्वर्यगुणविशिष्ट । इदि परमैश्वर्ये । ऋज्रेन्द्र° [उ° २.२८] इत्यादिना रन् प्रत्ययः । नित्त्वाद् आद्युदात्तः । अथ वा इन्दौ सोमे निमित्तभूते सति द्रवति त्वरया गच्छतीति इन्द्रः । यद्वा इन्दवे सोमाय तत्पानार्थं द्रवतीति[3] वा इन्द्रः । सत्सु अन्येषु दधिपयःप्रभृतिषु द्रव्येषु सोमस्यातिशयेन प्रियत्वाद् उक्तव्युत्पत्तिरिन्द्रशब्द-

1 S′ °पोताग्नी°. 2 S′ प्रस्थितेश्चरिष्यंत्यध्वर्युः. 3 S′ द्रवत इति वा.

अश्वऽयन्तः । गव्यन्तः । वाजयन्तः । हवामहे । त्वा । उपऽगन्तवै । ऊं इति ।
आऽभूषन्तः । ते । सुऽमतौ । नवायाम् । वयम् । इन्द्र । त्वा । शुनम् । हुवेम ॥ ५ ॥

मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात् ।
ग्राहिर्जग्राह यद्येतदेनं तस्या इन्द्राग्नी प्र मुमुक्तमेनम् ॥ ६ ॥

मुञ्चामि । त्वा । हविषा । जीवनाय । कम् । अज्ञातऽयक्ष्मात् । उत । राजऽयक्ष्मात् ।
ग्राहिः । जग्राह । यदि । एतत् । एनम् । तस्याः । इन्द्राग्नी इति । प्र । मुमुक्तम् ।
एनम् ॥ ६ ॥

यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव ।
तमा हरामि निर्ऋतेरुपस्थादस्पार्शमेनं शतशारदाय ॥ ७ ॥

यदि । क्षितऽआयुः । यदि । वा । पराऽइतः । यदि । मृत्योः । अन्तिकम् । निऽईतः । एव ।
तम् । आ । हरामि । निःऽऋतेः । उपऽस्थात् । अस्पार्शम् । एनम् । शतऽशारदाय ॥७॥

सहस्राक्षेण शतवीर्येण शतायुषा हविषाहार्षमेनम् ।
इन्द्रो यथैनं शरदो नयात्यति विश्वस्य दुरितस्य पारम् ॥ ८ ॥

सहस्रऽअक्षेण । शतऽवीर्येण । शतऽआयुषा । हविषा । आ । अहार्षम् । एनम् ।
इन्द्रः । यथा । एनम् । शरदः । नयाति । अति । विश्वस्य । दुःऽइतस्य । पारम् ॥ ८ ॥

शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान् ।
शतं त इन्द्रो अग्निः सविता बृहस्पतिः शतायुषा हविषाहार्षमेनम् ॥९॥

शतम् । जीव । शरदः । वर्धमानः । शतम् । हेमन्तान् । शतम् । ऊं इति । वसन्तान् ।
शतम् । ते । इन्द्रः । अग्निः । सविता । बृहस्पतिः । शतऽआयुषा । हविषा । आ ।
अहार्षम् । एनम् ॥ ९ ॥

आहार्षमविदं त्वा पुनरागाः पुनर्णवः ।
सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च तेविदम् ॥ १० ॥

आ । अहार्षम् । अविदम् । त्वा । पुनः । आ । अगाः । पुनःऽनवः ।
सर्वऽअङ्ग । सर्वम् । ते । चक्षुः । सर्वम् । आयुः । च । ते । अविदम् ॥ १० ॥

ब्रह्मणाग्निः संविदानो रक्षोहा बाधतामितः ।
अमीवा यस्ते गर्भं दुर्णामा योनिमाशये ॥ ११ ॥

ब्रह्मणा। अग्निः। सम्ऽविदानः। रक्षःऽहा। बाधताम्। इतः।
अमीवा। यः। ते। गर्भम्। दुःनामा। योनिम्। आऽशये ॥ ११ ॥

यस्ते गर्भममीवा दुर्णामा योनिमाशये।
अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत् ॥ १२ ॥

यः। ते। गर्भम्। अमीवा। दुःऽनामा। योनिम्। आऽशये।
अग्निः। तम्। ब्रह्मणा। सह। निः। क्रव्यऽअदम्। अनीनशत् ॥ १२ ॥

यस्ते हन्ति पतयन्तं निषत्स्नुं यः सरीसृपम्।
जातं यस्ते जिघांसति तमितो नाशयामसि ॥ १३ ॥

यः। ते। हन्ति। पतयन्तम्। निऽसत्स्नुम्। यः। सरीसृपम्।
जातम्। यः। ते। जिघांसति। तम्। इतः। नाशयामसि ॥ १३ ॥

यस्त ऊरू विहरत्यन्तरा दम्पती शये।
योनिं यो अन्तरारेलिह तमितो नाशयामसि ॥ १४ ॥

यः। ते। ऊरू इति। विऽहरति। अन्तरा। दम्पती इति दम्ऽपती। शये।
योनिम्। यः। अन्तः। आऽरेलिह। तम्। इतः। नाशयामसि ॥ १४ ॥

यस्त्वा भ्राता पतिर्भूत्वा जारो भूत्वा निपद्यते।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥ १५ ॥

यः। त्वा। भ्राता। पतिः। भूत्वा। जारः। भूत्वा। निऽपद्यते।
प्रऽजाम्। यः। ते। जिघांसति। तम्। इतः। नाशयामसि ॥ १५ ॥

यस्त्वा स्वप्नेन तमसा मोहयित्वा निपद्यते।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥ १६ ॥

यः। त्वा। स्वप्नेन। तमसा। मोहयित्वा। निऽपद्यते।
प्रऽजाम्। यः। ते। जिघांसति। तम्। इतः। नाशयामसि ॥ १६ ॥

अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां छुबुकादधि।
यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया वि वृहामि ते ॥ १७ ॥

---

१ D निषत्स्नुं. P °त्स्नुं।. २ KV °रेह्लि. CKRD °रेह्लि. We with BBDES.

अक्षीभ्याम् । ते । नासिकाभ्याम् । कर्णाभ्याम् । छुबुकात् । अधि ।
यक्ष्मम् । शीर्षण्यम् । मस्तिष्कात् । जिह्वायाः । वि । वृहामि । ते ॥ १७ ॥

ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात् ।
यक्ष्मं दोषण्य१मंसाभ्यां बाहुभ्यां वि वृहामि ते ॥ १८ ॥

ग्रीवाभ्यः । ते । उष्णिहाभ्यः । कीकसाभ्यः । अनूक्यात् ।
यक्ष्मम् । दोषण्यम् । अंसाभ्याम् । बाहुऽभ्याम् । वि । वृहामि । ते ॥ १८ ॥

हृदयात् ते परि क्लोम्नो हलीक्ष्णात् पार्श्वाभ्याम् ।
यक्ष्मं मतस्नाभ्यां प्लीह्नो यक्नस्ते वि वृहामसि ॥ १९ ॥

हृदयात् । ते । परि । क्लोम्नः । हलीक्ष्णात् । पार्श्वाभ्याम् ।
यक्ष्मम् । मतस्नाभ्याम् । प्लीह्नः । यक्नः । ते । वि । वृहामसि ॥ १९ ॥

आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोरुदरादधि ।
यक्ष्मं कुक्षिभ्यां प्लाशेर्नाभ्या वि वृहामि ते ॥ २० ॥

आन्त्रेभ्यः । ते । गुदाभ्यः । वनिष्ठोः । उदरात् । अधि ।
यक्ष्मम् । कुक्षिऽभ्याम् । प्लाशेः । नाभ्याः । वि । वृहामि । ते ॥ २० ॥

ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् ।
यक्ष्मं भसद्यं१ श्रोणिभ्यां भासदं भंससो वि वृहामि ते ॥ २१ ॥

ऊरुऽभ्याम् । ते । अष्ठीवत्ऽभ्याम् । पार्ष्णिऽभ्याम् । प्रऽपदाभ्याम् ।
यक्ष्मम् । भसद्यम् । श्रोणिऽभ्याम् । भासदम् । भंससः । वि । वृहामि । ते ॥ २१ ॥

अस्थिभ्यस्ते मज्जभ्यः स्नावभ्यो धमनिभ्यः ।
यक्ष्मं पाणिभ्यामङ्गुलिभ्यो नखेभ्यो वि वृहामि ते ॥ २२ ॥

अस्थिऽभ्यः । ते । मज्जऽभ्यः । स्नावऽभ्यः । धमनिऽभ्यः ।
यक्ष्मम् । पाणिऽभ्याम् । अङ्गुलिऽभ्यः । नखेभ्यः । वि । वृहामि । ते ॥ २२ ॥

अङ्गेअङ्गे लोम्निलोम्नि यस्ते पर्वणिपर्वणि ।
यक्ष्मं त्वचस्यं ते वयं कश्यपस्य वीबर्हेण विष्वञ्चं वि वृहामसि ॥ २३ ॥

अङ्गेऽअङ्गे । लोम्निऽलोम्नि । यः । ते । पर्वणिऽपर्वणि ।
यक्ष्मम् । त्वचस्यम् । ते । वयम् । कश्यपस्य । विऽबर्हेण । विष्वञ्चम् । वि । वृहामसि २३

अपेहि मनसस्पतेप क्राम परश्चर।
परो निर्ऋत्या आ चक्ष्व बहुधा जीवतो मनः॥ २४॥

अप। इहि। मनसः। पते। अप। क्राम। परः। चर।
परः। निःऽऋत्यै। आ। चक्ष्व। बहुधा। जीवतः। मनः॥ २४॥

अष्टमेनुवाके षष्ठं सूक्तम्॥

इति अष्टमोनुवाकः॥

बृहस्पतिसवे "वयमेनमिदा ह्यः" इत्यस्य "तद् वो गाय सुते सचा" [२०. ७८] इत्यनेन सह उक्तो विनियोगः॥
तथा सर्वजित्यृषभादिषु अस्य तेनैव सह उक्तो विनियोगः॥

तथा त्रिवृदादिषु सूत्रोक्तेषु सप्तसु त्रिरात्रैकाहेषु "उभयं शृणवच्च नः" [२०. ११३] "वयमेनमिदा ह्यः" [२०. ९७] "पिबा सोममिन्द्र मन्दतु त्वा" [२०. ११७] एते आज्यस्तोत्रिया भवन्ति चकारात् पृष्ठस्तोत्रिया विकल्पिता भवन्ति। तद् उक्तं वैताने। "त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशनवसप्तदशेषूभयं शृणवच्च नो वयमेनमिदा ह्यः पिबा सोममिन्द्र मन्दतु त्वेति" इति [वै०. ८. २]॥

तथा त्रिककुद्व्याहे अस्य विनियोगः "क ईं वेद सुते सचा [२०. ५३] इत्यनेन सह उक्तः॥

वयमेनमिदा ह्योपीपेमेह वज्रिणम्।
तस्मा उ अद्य समना सुतं भरा नूनं भूषत श्रुते॥ १॥

वयम्। एनम्। इदा। ह्यः। अपीपेम। इह। वज्रिणम्।
तस्मै। ऊं इति। अद्य। समना। सुतम्। भर। आ। नूनम्। भूषत। श्रुते॥ १॥

वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति।
सेमं नः स्तोमं जुजुषाण आ गहीन्द्र प्र चित्रया धिया॥ २॥

वृकः। चित्। अस्य। वारणः। उराऽमथिः। आ। वयुनेषु। भूषति।
सः। इमम्। नः। स्तोमम्। जुजुषाणः। आ। गहि। इन्द्र। प्र। चित्रया। धिया॥२॥

कदू न्व[1]स्याकृतमिन्द्रस्यास्ति पौंस्यम्।
केनो नु कं श्रोमतेन न शुश्रुवे जनुषः परि वृत्रहा॥ ३॥

कत्। ऊं इति। नु। अस्य। अकृतम्। इन्द्रस्य। अस्ति। पौंस्यम्।

१ PP[2] ॰थे॰।. We with J Cp. २ D K S Dc न स्तोमं we with B B C E K R V Cs. ३ P P सा. ४ B Cs कदु. ५ B Cs न्व३॰.

केनो इति । ऊं इति । कम् । श्रोमतेन । न । शुश्रुवे । जनुषः । परि । वृत्रऽहा ॥ ३ ॥

इति नवमेनुवाके प्रथमं सूक्तम् ॥

श्येनसंदंशाजिरवज्रेषु एकाहेषु "त्वामिद्धि हवामहे" इत्यस्य विनियोगः "सुरूपकृत्नुमूतये" [२०. ५७] इत्यनेन सह उक्तः ॥

तथा तनूपृष्ठे षडहे अस्य विनियोगः "यद् द्याव इन्द्र ते शतम्" [२०. ८१] इत्यनेन सह उक्तः ॥

त्वामिद्धि हवामहे साता वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ १ ॥

त्वाम् । इत् । हि । हवामहे । साता । वाजस्य । कारवः ।
त्वाम् । वृत्रेषु । इन्द्र । सत्ऽपतिम् । नरः । त्वाम् । काष्ठासु । अर्वतः ॥ १ ॥

स त्वं नश्चित्र वज्रहस्त धृष्णुया मह स्तवानो अद्रिवः ।
गामश्वं रथ्यमिन्द्र सं किर सत्रा वाजं न जिग्युषे ॥ २ ॥

सः । त्वम् । नः । चित्र । वज्रऽहस्त । धृष्णुऽया । महः । स्तवानः । अद्रिऽवः ।
गाम् । अश्वम् । रथ्यम् । इन्द्र । सम् । किर । सत्रा । वाजम् । न । जिग्युषे ॥ २ ॥

इति नवमेनुवाके द्वितीयं सूक्तम् ॥

अपूर्वाख्ये एकाहे "अभि त्वा पूर्वपीतये" इत्येव पृष्ठस्तोत्रियो भवति । तद् उक्तं वैताने । "अपूर्वेभि त्वा पूर्वपीतय इति" इति [वै० ८. १] ॥

अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः ।
समीचीनास ऋभवः समस्वरन् रुद्रा गृणन्त पूर्व्यम् ॥ १ ॥

अभि । त्वा । पूर्वऽपीतये । इन्द्र । स्तोमेभिः । आयवः ।
सम्ऽईचीनासः । ऋभवः । सम् । अस्वरन् । रुद्राः । गृणन्त । पूर्व्यम् ॥ १ ॥

अस्येदिन्द्रो वावृधे वृष्ण्यं शवो मदे सुतस्य विष्णवि ।
अद्या तमस्य महिमानमायवोनु ष्टुवन्ति पूर्वथा ॥ २ ॥

अस्य । इत् । इन्द्रः । ववृधे । वृष्ण्यम् । शवः । मदे । सुतस्य । विष्णवि ।
अद्य । तम् । अस्य । महिमानम् । आयवः । अनु । स्तुवन्ति । पूर्वऽथा ॥ २ ॥

इति नवमेनुवाके तृतीयं सूक्तम् ॥

---

१ B वाजं. २ K वावृधे वृष्ण्यं शवो मदे.

आत्मस्तोमाख्येषु एकाहेषु "आ त्वेता नि षीदत" [२०. ६८. ११] "अधा हीन्द्र गिर्वणः" [२०. १००] इति आज्य-पृष्ठस्तोत्रियौ यथाक्रमं भवतः । तद् उक्तं वैताने । "आत्मस्तोमेष्वा त्वेता नि षीदताधा हीन्द्र गिर्वण इति" [वै०८. १] ॥

तथा पवित्रादिषु राजसूयैकाहेषु "यत् सोममिन्द्र विष्णवि" [२०. १११] "अधा हीन्द्र गिर्वणः" [२०. १००] "अभ्रातृव्यो अना त्वम्" [२०. ११४] "त्वम् न इन्द्रा भर" [२०. १०८] एते यथासंभवम् उक्थस्तोत्रिया भवन्ति । चकाराद् "यदद्य कच्च वृत्रहन्" [२०. ११२] "उभयं शृणवच्च नः" [२०. ११३] एतौ आज्यपृष्ठस्तोत्रियौ भवतः ॥

तथा चतुरहपञ्चाहाहीनदशाहच्छन्दोमदशाहेषु "यत् सोममिन्द्र विष्णवि" एते चत्वारो यथासंभवम् उक्थस्तोत्रिया भवन्ति ॥

तद् उक्तं वैताने । "राजसूयेषु यत्सोममिन्द्र विष्णव्यधा हीन्द्र गिर्वणोऽभ्रातृव्यो अना त्वं त्वं न इन्द्रा भरेति च । चतुरहपञ्चाहाहीनदशाहच्छन्दोमदशाहेषु च" इति [वै० ८. २] ॥

अधा हीन्द्र गिर्वण उप त्वा कामान् महः[१] संसृज्महे[२] । उदेव यन्त उदभिः ॥ १ ॥

अध । हि । इन्द्र । गिर्वणः । उप । त्वा । कामान् । महः । सम्सृज्महे । उदाऽइव । यन्तः । उदऽभिः ॥ १ ॥

वार्ण त्वा यव्याभिर्वर्धन्ति शूर ब्रह्माणि । वावृध्वांसं चिदद्रिवो दिवेदिवे २

वाः । न । त्वा । यव्याभिः । वर्धन्ति । शूर । ब्रह्माणि ॥ ववृध्वांसम् । चित् । अद्रिऽवः । दिवेऽदिवे ॥ २ ॥

युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे । इन्द्रवाहा वचोयुजा॥३॥

युञ्जन्ति । हरी इति । इषिरस्य । गाथया । उरौ । रथे । उरुऽयुगे ॥ इन्द्रऽवाहा । वचःऽयुजा ॥ ३ ॥

इति नवमेनुवाके चतुर्थं सूक्तम् ॥

अग्निष्टुत्सु एकाहेषु "ईळेन्यो नमस्यः" [२०. १०२] "अग्निं दूतं वृणीमहे" [२०. १०१] "अग्निमीळिष्वावसे" [२०. १०३] "अग्न आ याह्यग्निभिः" [२०. १०३. २] एषु आद्यौ आज्यस्तोत्रियौ विकल्पितौ भवतः । उत्तरौ पृष्ठस्तोत्रियौ विकल्पितौ भवतः । तद् उक्तं वैताने । "अग्निष्टुत्स्वीळेन्यो नमस्योग्निं दूतं वृणीमहेग्निमीळिष्वावसेग्न आ याह्यग्निभिरिति" इति [वै० ८. १] ॥

तथा विराजेभिःस्तोमेभिःकुलाये "अग्निं दूतं वृणीमहे" "अग्निमीळिष्वावसे" एतौ आज्यपृष्ठस्तोत्रियौ भवतः । तद् उक्तं वैताने । "विराजेभिःस्तोमेभिःकुलायेग्निं दूतं वृणीमहेग्निमीळिष्वावस इति" [वै० ८. २] ॥

अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥ १ ॥

अग्निम् । दूतम् । वृणीमहे । होतारम् । विश्वऽवेदसम् ॥ अस्य । यज्ञस्य । सुऽक्रतुम् ॥ १ ॥

अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम् ॥ २ ॥

---

१ K °महत्. २ B Cs संसृज्महे.

अग्निम्ऽअग्निम् । हवीमऽभिः । सदा । हवन्त । विश्पतिम् ॥ हव्यऽवाहम् । पुरुऽप्रियम् ॥२॥

अग्ने देवाँ इहा वह जज्ञानो वृक्तबर्हिषे । असि होता न ईड्यः ॥ ३ ॥

अग्ने । देवान् । इह । आ । वह । जज्ञानः । वृक्तऽबर्हिषे ॥ असि । होता । नः । ईड्यः ॥३॥

इति नवमेनुवाके पञ्चमं सूक्तम् ॥

अग्निष्टुत्सु एकाहेषु "ईलेन्यो नमस्यः" इत्यस्य पूर्वेण सह उक्तो विनियोगः ॥

ईलेन्यो नमस्यस्तिरस्तमांसि दर्शतः । समग्निरिध्यते वृषा ॥ १ ॥

ईलेन्यः । नमस्यः । तिरः । तमांसि । दर्शतः ॥ सम् । अग्निः । इध्यते । वृषा ॥ १ ॥

वृषो अग्निः समिध्यतेश्वो न देववाहनः । तं हविष्मन्त ईलते ॥ २ ॥

वृषो इति । अग्निः । सम् । इध्यते । अश्वः । न । देवऽवाहनः ॥ तम् । हविष्मन्तः । ईलते ॥ २ ॥

वृषणं त्वा वयं वृषन् वृषणः समिधीमहि । अग्ने दीद्यतं बृहत् ॥ ३ ॥

वृषणम् । त्वा । वयम् । वृषन् । वृषणः । सम् । इधीमहि ॥ अग्ने । दीद्यतम् । बृहत् ॥३॥

इति नवमेनुवाके षष्ठं सूक्तम् ॥

"अग्निमीलिष्वावसे" इत्यस्य "अग्निं दूतं वृणीमहे" [२०. १०१] इत्यनेन सह उक्तो विनियोगः ॥

अग्निमीलिष्वावसे गाथाभिः शीरशोचिषम् ।
अग्निं राये पुरुमील्ह श्रुतं नरोग्निं सुदीतये छर्दिः ॥ १ ॥

अग्निम् । ईलिष्व । अवसे । गाथाभिः । शीरऽशोचिषम् ।
अग्निम् । राये । पुरुऽमील्ह । श्रुतम् । नरः । अग्निम् । सुऽदीतये । छर्दिः ॥ १ ॥

अग्न आ याह्यग्निभिर्होतारं त्वा वृणीमहे ।
आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे ॥ २ ॥

अग्ने । आ । याहि । अग्निऽभिः । होतारम् । त्वा । वृणीमहे ।
आ । त्वाम् । अनक्तु । प्रऽयता । हविष्मती । यजिष्ठम् । बर्हिः । आऽसदे ॥ २ ॥

---

१ P[2] पुरुऽप्रियम् ।. We with P J Cp. २ K V इले°. K[m] इडे°. B[m] C ईडे°. Cs इले°. We with D E R S[m] Dc. P P[2] J ईडेन्यः ।. We with Cp. ३ K K[m] V ईळते. B[m] C ईडते. Cs इलते. We with D E R S[m] Dc. ४ K V °मीळि°. B C K[m] °मीडि°. We with D E R S[m] Dc. P P[2] ईडिष्व ।. ५ C K K[m] Dc °मीढ°. V °मीह्ळ.

अच्छा हि त्वा सहसः सूनो अङ्गिरः स्रुचश्चरन्त्यध्वरे।
ऊर्जो नपातं घृतकेशमीमहेऽग्निं यज्ञेषु पूर्व्यम् ॥ ३ ॥
अच्छ। हि। त्वा। सहसः। सूनो इति। अङ्गिरः। स्रुचः। चरन्ति। अध्वरे।
ऊर्जः। नपातम्। घृतऽकेशम्। ईमहे। अग्निम्। यज्ञेषु। पूर्व्यम् ॥ ३ ॥

इति नवमेऽनुवाके सप्तमं सूक्तम् ॥

"इमा उ त्वा पुरूवसो" इत्यस्य विनियोगः "अयमु ते समतसि" [२०. ४५] इत्यनेन सह उक्तः ॥

इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम।
पावकवर्णाः शुचयो विपश्चितोऽभि स्तोमैरनूषत ॥ १ ॥
इमाः। ऊं इति। त्वा। पुरुवसो इति पुरुऽवसो। गिरः। वर्धन्तु। याः। मम।
पावकऽवर्णाः। शुचयः। विपःऽचितः। अभि। स्तोमैः। अनूषत ॥ १ ॥

अयं सहस्रमृषिभिः सहस्कृतः समुद्र इव पप्रथे।
सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ॥ २ ॥
अयम्। सहस्रम्। ऋषिऽभिः। सहःऽकृतः। समुद्रःऽइव। पप्रथे।
सत्यः। सः। अस्य। महिमा। गृणे। शवः। यज्ञेषु। विप्रऽराज्ये ॥ २ ॥

आ नो विश्वासु हव्य इन्द्रः समत्सु भूषतु।
उप ब्रह्माणि सवनानि वृत्रहा परमज्या ऋचीषमः ॥ ३ ॥
आ। नः। विश्वासु। हव्यः। इन्द्रः। समत्ऽसु। भूषतु।
उप। ब्रह्माणि। सवनानि। वृत्रऽहा। परमऽज्याः। ऋचीषमः ॥ ३ ॥

त्वं दाता प्रथमो राधसामस्यसि सत्य ईशानकृत्।
तुविद्युम्नस्य युज्या वृणीमहे पुत्रस्य शवसो महः ॥ ४ ॥
त्वम्। दाता। प्रथमः। राधसाम्। असि। असि। सत्यः। ईशानऽकृत्।
तुविऽद्युम्नस्य। युज्या। आ। वृणीमहे। पुत्रस्य। शवसः। महः ॥ ४ ॥

इति नवमेऽनुवाके अष्टमं सूक्तम् ॥

प्रतीचीनस्तोमे एकाहे "त्वमिन्द्र प्रतूर्तिषु" इत्येष आज्यपृष्ठस्तोत्रियो भवति। तद् उक्तं वैताने। "प्रतीचीनस्तोमे त्वमिन्द्र प्रतूर्तिष्विति" इति [वै० ८.१] ॥

१ B वर्धतु. २ P सहःऽकृतः।.

राजि एकाहे "यो राजा चर्षणीनाम्" [२०. १०५.४] इति पृष्ठस्तोत्रियो भवति। तद् उक्तं वैताने। "राजि यो राजा चर्षणीनाम् इति" इति [वै० ८.१] ॥

त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः।
अशस्तिहा जनिता विश्वतूरसि त्वं तूर्य तरुष्यतः ॥ १ ॥

त्वम्। इन्द्र। प्रऽतूर्तिषु। अभि। विश्वाः। असि। स्पृधः।
अशस्तिऽहा। जनिता। विश्वऽतूः। असि। त्वम्। तूर्य। तरुष्यतः ॥ १ ॥

अनु ते शुष्मं[1] तुरयन्तमीयतुः[2] क्षोणी शिशुं न मातरा।
विश्वास्ते स्पृधः श्नथयन्त मन्यवे वृत्रं यदिन्द्र तूर्वसि ॥ २ ॥

अनु। ते। शुष्मम्। तुरयन्तम्। ईयतुः। क्षोणी इति। शिशुम्। न। मातरा।
विश्वाः। ते। स्पृधः। श्नथयन्त। मन्यवे। वृत्रम्। यत्। इन्द्र। तूर्वसि ॥ २ ॥

इत ऊती वो अजरं प्रहेतारमप्रहितम्।
आशुं जेतारं हेतारं रथीतममतूर्तं तुग्र्यावृधम् ॥ ३ ॥

इतः। ऊती। वः। अजरम्[3]। प्रऽहेतारम्। अप्रऽहितम्।
आशुम्। जेतारम्। हेतारम्। रथिऽतमम्। अतूर्तम्। तुग्र्यऽवृधम् ॥ ३ ॥

यो राजा चर्षणीनां याता रथेभिरध्रिगुः।
विश्वासां तरुता पृतनानां ज्येष्ठो यो वृत्रहा गृणे ॥ ४ ॥

यः। राजा। चर्षणीनाम्। याता। रथेभिः। अध्रिऽगुः।
विश्वासाम्। तरुता। पृतनानाम्। ज्येष्ठः। यः। वृत्रऽहा। गृणे ॥ ४ ॥

इन्द्रं तं शुम्भ पुरुहन्मन्नवसे यस्य द्विता विधर्तरि।
हस्ताय वज्रः प्रति धायि दर्शतो महो दिवे न सूर्यः ॥ ५ ॥

इन्द्रम्। तम्। शुम्भ। पुरुऽहन्मन्[4]। अवसे। यस्य। द्विता। विऽधर्तरि।
हस्ताय। वज्रः। प्रति। धायि। दर्शतः। महः। दिवे। न। सूर्यः ॥ ५ ॥

इति नवमेऽनुवाके नवमं सूक्तम् ॥

इन्द्रस्तोमाख्ये एकाहे "तव त्यदिन्द्रियं बृहत्" इत्यस्य "इन्द्र क्रतुं न आ भर" [२०. ७९] इत्यनेन सह उक्तो विनियोगः ॥

---

[1] B शुष्मिं. [2] B cancels visarga. [3] P °रं।. [4] P °न्म°।.

तव॒ त्यदि॑न्द्रि॒यं बृ॒हत् तव॒ शुष्म॑मु॒त क्रतु॑म्। वज्रं॑ शिशाति धि॒षणा॒ वरे॑ण्यम् ॥ १ ॥

तव॑। त्यत्। इ॒न्द्रि॒यम्। बृ॒हत्। तव॑। शुष्म॑म्। उ॒त। क्रतु॑म् ॥ वज्र॑म्। शि॒शा॒ति॒। धि॒षणा॑। वरे॑ण्यम् ॥ १ ॥

तव॒ द्यौरि॑न्द्र॒ पौंस्यं॑ पृथि॒वी व॑र्धति॒ श्रवः॑। त्वामापः॒ पर्व॑तासश्च हिन्विरे २

तव॑। द्यौः। इ॒न्द्र॒। पौंस्य॑म्। पृ॒थि॒वी। व॒र्ध॒ति॒। श्रवः॑ ॥ त्वाम्। आपः॑। पर्व॑तासः। च॒। हि॒न्वि॒रे॒ ॥ २ ॥

त्वां विष्णु॑र्बृ॒हन् क्षयो॑ मि॒त्रो गृ॑णाति॒ वरु॑णः। त्वां शर्धो॑ मद॒त्यनु॒ मारु॑तम् ॥ ३ ॥

त्वाम्। विष्णुः॑। बृ॒हन्। क्षयः॑। मि॒त्रः। गृ॒णा॒ति॒। वरु॑णः ॥ त्वाम्। शर्धः॑। म॒द॒ति॒। अनु॑। मारु॑तम् ॥ ३ ॥

इति नवमेनुवाके दशमं सूक्तम् ॥

विघने एकाहे "समस्य मन्यवे विशः" [२०. १०७] "तदिदास भुवनेषु ज्येष्ठम्" [२०. १०७.४] इत्येतौ आज्यपृ-ष्ठस्तोत्रियौ भवतः। तद् उक्तं वैताने। "विघने समस्य मन्यवे विशस्तदिदास भुवनेषु ज्येष्ठमिति" इति [वै० ८.१] ॥

सम॑स्य म॒न्यवे॒ विशो॒ विश्वा॑ नमन्त कृ॒ष्टयः॑। स॒मु॒द्राये॑व॒ सिन्ध॑वः ॥१ ॥

सम्। अ॒स्य॒। म॒न्यवे॑। विशः॑। विश्वाः॑। न॒म॒न्त॒। कृ॒ष्टयः॑ ॥ स॒मु॒द्राय॑ऽइव। सिन्ध॑वः॥१

ओज॒स्तद॑स्य तित्विष उ॒भे यत् स॒मव॑र्तयत्। इन्द्र॒श्चर्मे॑व॒ रोद॑सी ॥ २ ॥

ओजः॑। तत्। अ॒स्य॒। ति॒त्वि॒षे॒। उ॒भे इति॑। यत्। स॒म्ऽअव॑र्तयत् ॥ इन्द्रः॑। चर्म॑ऽइव। रोद॑सी॒ इति॑ ॥ २ ॥

वि चि॑द् वृ॒त्रस्य॒ दोध॑तो॒ वज्रे॑ण श॒तप॑र्वणा। शिरो॑ बिभेद वृ॒ष्णिना॑ ॥३ ॥

वि। चि॒त्। वृ॒त्रस्य॑। दोध॑तः। वज्रे॑ण। श॒त॒ऽप॑र्वणा ॥ शिरः॑। बि॒भे॒द॒। वृ॒ष्णिना॑ ॥ ३ ॥

तदिदा॑स॒ भुव॑नेषु॒ ज्येष्ठं॒ यतो॑ ज॒ज्ञ उ॒ग्रस्त्वे॒षनृ॑म्णः।
स॒द्यो ज॑ज्ञा॒नो नि रि॑णाति॒ शत्रू॒ननु॒ यदे॑नं॒ मद॑न्ति॒ विश्व॒ ऊमाः॑ ॥ ४ ॥

तत्। इत्। आ॒स॒। भुव॑नेषु। ज्येष्ठ॑म्। यतः॑। ज॒ज्ञे। उ॒ग्रः। त्वे॒षऽनृ॑म्णः।
स॒द्यः। ज॒ज्ञा॒नः। नि। रि॒णा॒ति॒। शत्रू॑न्। अनु॑। यत्। ए॒न॒म्। मद॑न्ति। विश्वे॑। ऊमाः॑ ४

वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसं दधाति ।
अव्यनच्च व्यनच्च सस्नि सं ते नवन्त प्रभृता मदेषु ॥ ५ ॥
ववृधानः । शवसा । भूरिऽओजाः । शत्रुः । दासाय । भियसम् । दधाति ।
अविऽअनत् । च । विऽअनत् । च । सस्नि । सम् । ते । नवन्त । प्रऽभृता । मदेषु ॥ ५ ॥

त्वे क्रतुमपि पृञ्चन्ति भूरि द्विर्यदेते त्रिर्भवन्त्यूमाः ।
स्वादोः स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाभि योधीः ॥ ६ ॥
त्वे इति । क्रतुम् । अपि । पृञ्चन्ति । भूरि । द्विः । यत् । एते । त्रिः । भवन्ति । ऊमाः ।
स्वादोः । स्वादीयः । स्वादुना । सृज । सम् । अदः । सु । मधु । मधुना । अभि । योधीः ॥ ६ ॥

यदि चिन्नु त्वा धना जयन्तं रणेरणे अनुमदन्ति विप्राः ।
ओजीयः शुष्मिन्त्स्थिरमा तनुष्व मा त्वा दभन् दुरेवासः कशोकाः ॥ ७
यदि । चित् । नु । त्वा । धना । जयन्तम् । रणेऽरणे । अनुऽमदन्ति । विप्राः ।
ओजीयः । शुष्मिन् । स्थिरम् । आ । तनुष्व । मा । त्वा । दभन् । दुःऽएवासः । कशोकाः ७

त्वया वयं शाशद्महे रणेषु प्रपश्यन्तो युधेन्यानि भूरि ।
चोदयामि त आयुधा वचोभिः सं ते शिशामि ब्रह्मणा वयांसि ॥ ८ ॥
त्वया । वयम् । शाशद्महे । रणेषु । प्रऽपश्यन्तः । युधेन्यानि । भूरि ।
चोदयामि । ते । आयुधा । वचःऽभिः । सम् । ते । शिशामि । ब्रह्मणा । वयांसि ॥ ८ ॥

नि तद् दधिषेवरे परे च यस्मिन्नाविथावसा दुरोणे ।
आ स्थापयत मातरं जिगत्नुमत इन्वत कर्वराणि भूरि ॥ ९ ॥
नि । तत् । दधिषे । अवरे । परे । च । यस्मिन् । आविथ । अवसा । दुरोणे ।
आ । स्थापयत । मातरम् । जिगत्नुम् । अतः । इन्वत । कर्वराणि । भूरि ॥ ९ ॥

स्तुष्व वर्ष्मन् पुरुवर्त्मानं समृभ्वाणमिनतममाप्तमाप्त्यानाम् ।
आ दर्शति शवसा भूर्योजाः प्र सक्षति प्रतिमानं पृथिव्याः ॥ १० ॥
स्तुष्व । वर्ष्मन् । पुरुऽवर्त्मानम् । सम् । ऋभ्वाणम् । इनऽतमम् । आप्तम् । आप्त्यानाम् ।
आ । दर्शति । शवसा । भूरिऽओजाः । प्र । सक्षति । प्रतिऽमानम् । पृथिव्याः ॥ १० ॥

इमा ब्रह्म बृहद्दिवः कृणवदिन्द्राय शूषमग्रियः स्वर्षाः ।
महो गोत्रस्य क्षयति स्वराजा तुरश्चिद् विश्वमर्णवत् तपस्वान् ॥ ११ ॥

इमा । ब्रह्म । बृहत्ऽदिवः । कृणवत् । इन्द्राय । शूषम् । अग्रियः । स्वःऽसाः ।
महः । गोत्रस्य । क्षयति । स्वऽराजा । तुरः । चित् । विश्वम् । अर्णवत् । तपस्वान् ॥ ११ ॥

एवा महान् बृहद्दिवो अथर्वावोचत् स्वां तन्व१मिन्द्रमेव ।
स्वसारौ मातरिभ्वरी अरिप्रे हिन्वन्ति चैने शवसा वर्धयन्ति च ॥ १२ ॥

एव । महान् । बृहत्ऽदिवः । अथर्वा । अवोचत् । स्वाम् । तन्वम् । इन्द्रम् । एव ।
स्वसारौ । मातरिभ्वरी इति । अरिप्रे इति । हिन्वन्ति । च । एने इति । शवसा ।
वर्धयन्ति । च ॥ १२ ॥

चित्रं देवानां केतुरनीकं ज्योतिष्मान् प्रदिशः सूर्य उद्यन् ।
दिवाकरोऽति द्युम्नैस्तमांसि विश्वातारीद् दुरितानि शुक्रः ॥ १३ ॥

चित्रम् । देवानाम् । केतुः । अनीकम् । ज्योतिष्मान् । प्रऽदिशः । सूर्यः । उत्ऽयन् ।
दिवाऽकरः । अति । द्युम्नैः । तमांसि । विश्वा । अतारीत् । दुःऽइतानि । शुक्रः ॥ १३ ॥

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्राद् द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥ १४ ॥

चित्रम् । देवानाम् । उत् । अगात् । अनीकम् । चक्षुः । मित्रस्य । वरुणस्य । अग्नेः ।
आ । अप्रात् । द्यावापृथिवी इति । अन्तरिक्षम् । सूर्यः । आत्मा । जगतः । तस्थुषः । च ॥ १४ ॥

सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात् ।
यत्रा नरो देवयन्तो युगानि वितन्वते प्रति भद्राय भद्रम् ॥ १५ ॥

सूर्यः । देवीम् । उषसम् । रोचमानाम् । मर्यः । न । योषाम् । अभि । एति । पश्चात् ।
यत्र । नरः । देवऽयन्तः । युगानि । विऽतन्वते । प्रति । भद्राय । भद्रम् ॥ १५ ॥

इति नवमेऽनुवाके एकादशं सूक्तम् ॥

वज्रपुनःस्तोमाख्ययोरेकाहयोः "त्वं न इन्द्रा भर" इत्येष उक्थस्तोत्रियो भवति । तद् उक्तं वैताने । "वज्रे पुनःस्तोमे त्वं न इन्द्रा भरेति" इति [वै० ८. १] ॥

तथा पवित्रादिषु राजसूयैकाहेषु एतस्य विनियोगः "अधा हीन्द्र गिर्वणः" [२०. १००] इत्यनेन सह उक्तः ॥

तथा वैदस्वरसाम्नोरुभयहयोः प्रथमयोरह्नोः एष उक्थस्तोत्रियो भवति । तद् उक्तं वैताने । "वैदस्वरसाम्नोस्त्वं न इन्द्रा भरेति" इति [वै० ८. ३] ॥

तथा चतुरहाणां तृतीयेष्वहःसु अस्य विनियोगः "श्रायन्त इव सूर्यम्" [२०. ५८] इत्यनेन सह उक्तः ॥

तथा अभ्यासङ्ग्यपञ्चशारदीययोः पञ्चाहयोर्द्वितीयेऽहनि एष उक्थस्तोत्रियो भवति । तद् उक्तं वैताने । "अभ्यासङ्ग्य-पञ्चशारदीययोर्द्वितीये त्वं न इन्द्रा भरेति" इति [वै० ८. ३] ॥

तथा अभिप्लवस्यायुराख्येहनि एष उक्थस्तोत्रियो भवति । तद् उक्तं वैताने । "आयुषि त्वं न इन्द्रा भरेति" इति [वै० ८. ३] ॥

तथा पृष्ठ्यषडहस्य तृतीयेहनि अस्य विनियोगः "इन्द्रेण सं हि दृक्षसे" [२०. ४०] इत्यनेन सह उक्तः ॥

तथा द्वादशाहस्य च्छन्दोमत्र्यहस्य प्रथमान्त्ययोरह्नोः "त्वं न इन्द्रा भर" [२०. १०८] "य एक इद् विदयते" [२०. ६३.४] एतौ उक्थस्तोत्रियौ यथाक्रमं भवतः । तद् उक्तं वैताने । "द्वादशाहस्य च्छन्दोमप्रथमान्त्ययोस्त्वं न इन्द्रा भर य एक इद् विदयत इति" इति [वै० ८. ४] ॥

**त्वं न इन्द्रा भर[1] ओजो नृम्णं शतक्रतो विचर्षणे । आ वीरं पृतनाषहम् ॥ १ ॥**

त्वम् । नः । इन्द्र । आ । भर । ओजः । नृम्णम् । शतक्रतो इति शतऽक्रतो । विऽचर्षणे ॥ आ । वीरम् । पृतनाऽसहम् ॥ १ ॥

**त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ । अधा ते सुम्नमीमहे ॥ २ ॥**

त्वम् । हि । नः । पिता । वसो इति । त्वम् । माता । शतक्रतो इति शतऽक्रतो । बभूविथ ॥ अध । ते । सुम्नम् । ईमहे ॥ २ ॥

**त्वां शुष्मिन् पुरुहूत वाजयन्तमुप ब्रुवे शतक्रतो । स नो रास्व सुवीर्यम् ३**

त्वाम् । शुष्मिन् । पुरुऽहूत । वाजऽयन्तम् । उप । ब्रुवे । शतक्रतो इति शतऽक्रतो । सः । नः । रास्व । सुऽवीर्यम् ॥ ३ ॥

इति नवमेनुवाके द्वादशं सूक्तम् ॥

साहस्राख्यावश्वलार एकाहा ब्राह्मणपठिताः । तेषां प्रथमद्वितीययोः "स्वादोरित्था विषूवतः" इति पृष्ठस्तोत्रियो भवति । तद् उक्तं वैताने । "साहस्राययोः स्वादोरित्था विषूवत इति" इति [वै० ८. १] ॥

तथा अश्वमेधत्र्यहस्य द्वितीयेहनि अस्य विनियोगः "वाचमष्टापदीमहम्" [२०. ४२] इत्यनेन सह उक्तः ॥

**स्वादोरित्था विषूवतो मध्वः पिबन्ति गौर्यः ।**
**या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभसे वस्वीरनु स्वराज्यम् ॥ १ ॥**

स्वादोः । इत्था । विषुऽवतः । मध्वः । पिबन्ति । गौर्यः ।
याः । इन्द्रेण । सऽयावरीः । वृष्णा । मदन्ति । शोभसे । वस्वीः । अनु । स्वऽराज्यम् १

**ता अस्य पृशनायुवः सोमं श्रीणन्ति पृश्नयः ।**
**प्रिया इन्द्रस्य धेनवो वज्रं हिन्वन्ति सायकं वस्वीरनु स्वराज्यम् ॥ २ ॥**

१ B D भरँ ।. २ B °वृतो.

ताः । अस्य । पृशनऽयुवः । सोमम् । श्रीणन्ति । पृश्नयः ।

प्रियाः । इन्द्रस्य । धेनवः । वज्रम् । हिन्वन्ति । सायकम् ।० ॥ २ ॥

**ता अस्य नमसा सहः सपर्यन्ति प्रचेतसः ।**

**व्रतान्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यम् ॥ ३ ॥**

ताः । अस्य । नमसा । सहः । सपर्यन्ति । प्रऽचेतसः ।

व्रतानि । अस्य । सश्चिरे । पुरूणि । पूर्वऽचित्तये । वस्वीः । अनु । स्वऽराज्यम् ॥ ३ ॥

इति नवमेनुवाके त्रयोदशं सूक्तम् ॥

विराडादिषु सप्तस्वेकाहेषु "इन्द्राय मद्वने सुतम्" [२०. ११०] "यत् सोममिन्द्र विष्णवि" [२०. १११] एतौ आज्योक्थस्तोत्रियौ भवतः । तद् उक्तं वैताने । "विराजि भूमिस्तोमे वनस्पतिसवे लिष्यपचिल्योरिन्द्राग्न्योःस्तोम इन्द्राग्न्योःकुलाय इन्द्राय मद्वने सुतं यत् सोममिन्द्र विष्णवीति" इति [वै० ८. २] ॥

**इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिरः । अर्कमर्चन्तु कारवः ॥ १ ॥**

इन्द्राय । मद्वने । सुतम् । परि । स्तोभन्तु । नः । गिरः ॥ अर्कम् । अर्चन्तु । कारवः ॥ १ ॥

**यस्मिन् विश्वा अधि श्रियो रणन्ति सप्त संसदः । इन्द्रं सुते हवामहे ॥ २ ॥**

यस्मिन् । विश्वाः । अधि । श्रियः । रणन्ति । सप्त । सम्ऽसदः ॥ इन्द्रम् । सुते । हवामहे २

**त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत । तमिद् वर्धन्तु नो गिरः ॥ ३ ॥**

त्रिऽकद्रुकेषु । चेतनम् । देवासः । यज्ञम् । अत्नत ॥ तम् । इत् । वर्धन्तु । नः । गिरः ॥ ३ ॥

इति नवमेनुवाके चतुर्दशं सूक्तम् ॥

"यत् सोममिन्द्र विष्णवि" इत्यस्य विनियोगः पूर्वसूक्तेन सह उक्तः ॥

तथा पवित्रादिषु राजसूयैकाहेषु चतुरहादिषु च अस्य विनियोगः "अधा हीन्द्र गिर्वणः" [२०. १००] इत्यनेन सह उक्तः ॥

तथा अभिप्लवस्य षष्ठमहः उक्थ्यसंस्थं चेद् भवति तदा "य एक इद् विदयते" [२०. ६३. ४] "यत् सोममिन्द्र विष्णवि" [२०. १११] एतौ उक्थस्तोत्रियौ विकल्पितौ भवतः । तद् उक्तं वैताने । "षष्ठमुक्थ्यं चेद् य एक इद् विदयते यत् सोममिन्द्र विष्णवीति" इति [वै० ८. ३] ॥

**यत् सोममिन्द्र विष्णवि यद्वा घ त्रित आप्त्ये । यद्वा मरुत्सु मन्दसे समिन्दुभिः ॥ १ ॥**

यत् । सोमम् । इन्द्र । विष्णवि । यत् । वा । घ । त्रिते । आप्त्ये ॥ यत् । वा । मरुत्ऽसु । मन्दसे । सम् । इन्दुऽभिः ॥ १ ॥

**यद्वा शक्र परावति समुद्रे अधि मन्दसे । अस्माकमित् सुते रणा समिन्दुभिः ॥ २ ॥**

यत् । वा । शक्र । पराऽवति । समुद्रे । अधि । मन्दसे ॥ अस्माकम् । इत् । सुते । रण । सम् । इन्दुऽभिः ॥ २ ॥

यद्वासि सुन्वतो वृधो यजमानस्य सत्पते । उक्थे वा यस्य रण्यसि समिन्दुभिः ॥ ३ ॥

यत् । वा । असि । सुन्वतः । वृधः । यजमानस्य । सत्ऽपते ॥ उक्थे । वा । यस्य । रण्यसि । सम् । इन्दुऽभिः ॥ ३ ॥

इति नवमेनुवाके पंचदशं सूक्तम् ॥

विशुत्वभिभूत्यादिषु अष्टसु द्वन्द्वैकाहेषु "यदद्य कच्च वृत्रहन्" [२०. ११२] "उभयं शृणवच्च नः" [२०. ११३] एतौ आज्यपृष्ठस्तोत्रियौ भवतः । तद् उक्तं वैताने । "विशुत्वभिभूत्यो राशिमराशयोः शदोपशदयोः सम्राट्स्वराजोर्यदद्य कच्च वृत्रहन्नुभयं शृणवच्च न इति" इति [वै० ८. २] ॥

यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य । सर्वं तदिन्द्र ते वशे ॥ १ ॥

यत् । अद्य । कत् । च । वृत्रऽहन् । उत्ऽअगाः । अभि । सूर्य ॥ सर्वम् । तत् । इन्द्र । ते । वशे ॥ १ ॥

यद्वा प्रवृद्ध सत्पते न मरा इति मन्यसे । उतो तत् सत्यमित् तव ॥ २ ॥

यत् । वा । प्रऽवृद्ध । सत्ऽपते । न । मरै । इति । मन्यसे ॥ उतो इति । तत् । सत्यम् । इत् । तव ॥ २ ॥

ये सोमासः परावति ये अर्वावति सुन्विरे । सर्वांस्ताँ इन्द्र गच्छसि ॥३॥

ये । सोमासः । पराऽवति । ये । अर्वाऽवति । सुन्विरे ॥ सर्वान् । तान् । इन्द्र । गच्छसि ३

इति नवमेनुवाके षोडशं सूक्तम् ॥

विशुत्वभिभूत्यादिषु "उभयं शृणवच्च नः" इत्यस्य विनियोगः पूर्वसूक्तेन सह उक्तः ॥
तथा त्रिवृदादिषु अस्य विनियोगः "वयमेनमिदा ह्यः" [२०. ९७] इत्यनेन सह उक्तः ॥

उभयं शृणवच्च न इन्द्रो अर्वागिदं वचः ।
सत्राच्या मघवा सोमपीतये धिया शविष्ठ आ गमत् ॥ १ ॥

उभयम् । शृणवत् । च । नः । इन्द्रः । अर्वाक् । इदम् । वचः ।
सत्राच्या । मघऽवा । सोमऽपीतये । धिया । शविष्ठः । आ । गमत् ॥ १ ॥

तं हि स्वराजं वृषभं तमोजसे धिषणे निष्टतक्षतुः ।
उतोपमानां प्रथमो नि षीदसि सोमकामं हि ते मनः ॥ २ ॥

१ So we with all our Mss.

तम्। हि। स्वऽराजम्। वृषभम्। तम्। ओजसे। धिषणे इति। निःऽततक्षतुः।
उत। उपऽमानाम्। प्रथमः। नि। सीदसि। सोमऽकामम्। हि। ते। मनः॥ २॥

इति नवमेनुवाके सप्तदशं सूक्तम्॥

पवित्रादिषु राजसूयैकाहेषु "अभ्रातृव्यो अना त्वम्" इत्यस्य विनियोगः "अधा हीन्द्र गिर्वणः" [२०. १००] इत्यनेन सह उक्तः॥

तथा अभिप्लवषडहस्य गवाख्येहनि "अभ्रातृव्यो अना त्वम्" इत्येष उक्थस्तोत्रियो भवति। तद् उक्तं वैताने। "षडहस्य गव्यभ्रातृव्यो अना त्वमिति" इति [वै॰ ८. ३]॥

अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि। युधेदापित्वमिच्छसे १

अभ्रातृव्यः। अना। त्वम्। अनापिः। इन्द्र। जनुषा। सनात्। असि॥ युधा। इत्।
आपिऽत्वम्। इच्छसे॥ १॥

नकी रेवन्तं सख्याय विन्दसे पीयन्ति ते सुराश्वः।
यदा कृणोषि नदनुं समूहस्यादित् पितेव हूयसे॥ २॥

नकिः। रेवन्तम्। सख्याय। विन्दसे। पीयन्ति। ते। सुराश्वः।
यदा। कृणोषि। नदनुम्। सम्। ऊहसि। आत्। इत्। पिताऽइव। हूयसे॥ २॥

इति नवमेनुवाके अष्टादशं सूक्तम्॥

साद्यःक्राभिधानेषु एकाहेषु श्येनयागवर्जितेषु "अहमिद्धि पितुष्परि" इत्याज्यस्तोत्रियो भवति। तद् उक्तं वैताने। "साद्यःक्रेषु श्येनवर्जम् अहमिद्धि पितुष्परीति च" इति [वै॰ ८. २.]॥

अहमिद्धि पितुष्परि मेधामृतस्य जग्रभ। अहं सूर्य इवाजनि॥ १॥

अहम्। इत्। हि। पितुः। परि। मेधाम्। ऋतस्य। जग्रभ॥ अहम्। सूर्यःऽइव।
अजनि॥ १॥

अहं प्रत्नेन मन्मना गिरः शुम्भामि कण्ववत्। येनेन्द्रः शुष्ममिद् दधे २

अहम्। प्रत्नेन। मन्मना। गिरः। शुम्भामि। कण्वऽवत्॥ येन। इन्द्रः। शुष्मम्।
इत्। दधे॥ २॥

ये त्वामिन्द्र न तुष्टुवुर्ऋषयो ये च तुष्टुवुः। ममेद् वर्धस्व सुष्टुतः॥ ३॥

ये। त्वाम्। इन्द्र। न। तुस्तुवुः। ऋषयः। ये। च। तुस्तुवुः॥ मम। इत्। वर्धस्व।
सुऽस्तुतः॥ ३॥

इति नवमेनुवाके एकोनविंशं सूक्तम्॥

---

१ P तत्। २ So we with all our Mss.

अतिरात्राणां सर्वस्तोमाख्ययोः "मा भूम निष्ट्या इव" [२०. ११६] "विधुं दद्राणं सलिलस्य पृष्ठे" [९. १५. ९] एतौ पृष्ठस्तोत्रियौ यथाक्रमं भवतः । तद् उक्तं वैताने । "अतिरात्राणां सर्वस्तोमयोर्मा भूम निष्ट्या इव विधुं दद्राणं सलिलस्य पृष्ठ इति" इति [वै० ८. २] ॥

तथा चतुरहाणां सर्वेष्वहःसु एतौ पृष्ठस्तोत्रियौ विकल्पितौ भवतः । तद् उक्तं वैताने । "सर्वेषु मा भूम निष्ट्या इव विधुं दद्राणं सलिलस्य पृष्ठ इति" इति [वै० ८. ३] ॥

मा भूम निष्ट्या इवेन्द्र त्वदरणा इव ।
वनानि न प्रजहितान्यद्रिवो दुरोषासो अमन्महि ॥ १ ॥

मा । भूम । निष्ट्याःऽइव । इन्द्र । त्वत् । अरणाःऽइव ।
वनानि । न । प्रऽजहितानि । अद्रिऽवः । दुरोषासः । अमन्महि ॥ १ ॥

अमन्महीदनाशवोनुग्रासश्च वृत्रहन् ।
सकृत् सु ते महता शूर राधसानु स्तोमं मुदीमहि ॥ २ ॥

अमन्महि । इत् । अनाशवः । अनुग्रासः । च । वृत्रऽहन् ।
सकृत् । सु । ते । महता । शूर । राधसा । अनु । स्तोमम् । मुदीमहि ॥ २ ॥

इति नवमेनुवाके विंशं सूक्तम् ॥

त्रिवृदादिषु "पिबा सोममिन्द्र मन्दतु त्वा" इत्यस्य विनियोगः "वयमेनमिदा ह्यः" [२०. ९७] इत्यनेन सह उक्तः ॥ तथा तनूपृष्ठे षडहे अस्य विनियोगः "यद् द्याव इन्द्र ते शतम्" [२०. ८१] इत्यनेन सह उक्तः ॥

पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः ।
सोतुर्बाहुभ्यां सुयतो नार्वा ॥ १ ॥

पिब । सोमम् । इन्द्र । मन्दतु । त्वा । यम् । ते । सुसाव । हरिऽअश्व । अद्रिः ।
सोतुः । बाहुऽभ्याम् । सुऽयतः । न । अर्वा ॥ १ ॥

यस्ते मदो युज्यश्चारुरस्ति येन वृत्राणि हर्यश्व हंसि ।
स त्वामिन्द्र प्रभूवसो ममत्तु ॥ २ ॥

यः । ते । मदः । युज्यः । चारुः । अस्ति । येन । वृत्राणि । हरिऽअश्व । हंसि ।
सः । त्वाम् । इन्द्र । प्रभुवसो इति प्रभुऽवसो । ममत्तु ॥ २ ॥

बोधा सु मे मघवन् वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिम् ।
इमा ब्रह्म सधमादे जुषस्व ॥ ३ ॥

बोधं । सु । मे । मघऽवन् । वाचम् । आ । इमाम् । याम् । ते । वसिष्ठः । अर्चति । प्रऽशस्तिम् ।

इमा । ब्रह्म । सधऽमादे । जुषस्व ॥ ३ ॥

इति नवमेऽनुवाके एकविंशं सूक्तम् ॥

चातुर्मास्यवैश्वदेवादीनां सप्तानां त्र्यहाणां प्रथमेष्वहःसु "शग्ध्यू षु शचीपते" इत्येष पृष्ठस्तोत्रियो भवति । तद् उक्तं वैताने । "चातुर्मास्यवैश्वदेवगर्गवैदच्छन्दोमवत्पराकान्तर्वैश्वस्त्वमेधत्र्यहाणां शग्ध्यू षु शचीपत इति" इति [वै० ८. ३] ॥

तथा त्रिककुद्दशाहाहीने अस्य विनियोगः "क ईं वेद सुते सचा" [२०. ५३] इत्यनेन सह उक्तः ॥

साकमेधत्र्यहस्य प्रथमेऽहनि "इन्द्रमिद् देवतातये" [२०. ११८. ३] इत्येष पृष्ठस्तोत्रियो भवति । तद् उक्तं वैताने । "साकमेधस्येन्द्रमिद् देवतातय इति" इति [वै० ८. ३] ॥

शग्ध्यू३ षु शचीपत इन्द्र विश्वाभिरूतिभिः ।
भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥ १ ॥

शग्धि । ऊं इति । सु । शचीऽपते । इन्द्र । विश्वाभिः । ऊतिऽभिः ।
भगम् । न । हि । त्वा । यशसम् । वसुऽविदम् । अनु । शूर । चरामसि ॥ १ ॥

पौरो अश्वस्य पुरुकृद् गवामस्युत्सो देव हिरण्ययः ।
नकिर्हि दानं परिमर्धिषत् त्वे यद्यद्यामि तदा भर ॥ २ ॥

पौरः । अश्वस्य । पुरुऽकृत् । गवाम् । असि । उत्सः । देव । हिरण्ययः ।
नकिः । हि । दानम् । परिऽमर्धिषत् । त्वे इति । यत्ऽयत् । यामि । तत् । आ । भर ॥ २ ॥

इन्द्रमिद् देवतातय इन्द्रं प्रयत्यध्वरे ।
इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये ॥ ३ ॥

इन्द्रम् । इत् । देवऽतातये । इन्द्रम् । प्रऽयति । अध्वरे ।
इन्द्रम् । सम्ऽईके । वनिनः । हवामहे । इन्द्रम् । धनस्य । सातये ॥ ३ ॥

इन्द्रो मह्ना रोदसी पप्रथच्छव इन्द्रः सूर्यमरोचयत् ।
इन्द्रे ह विश्वा भुवनानि येमिर इन्द्रे सुवानास इन्दवः ॥ ४ ॥

इन्द्रः । मह्ना । रोदसी इति । पप्रथत् । शवः । इन्द्रः । सूर्यम् । अरोचयत् ।
इन्द्रे । ह । विश्वा । भुवनानि । येमिरे । इन्द्रे । सुवानासः । इन्दवः ॥ ४ ॥

इति नवमेऽनुवाके द्वाविंशं सूक्तम् ॥

वैश्वदेवादित्र्यहेषु "अस्तावि मन्म पूर्व्यम्" इत्यस्य विनियोगः "तमिन्द्रं वाजयामसि" [२०.४७] इत्यनेन सह उक्तः ॥

अस्ताविं मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत ।
पूर्वीर्ऋतस्य बृहुतीरनूषत स्तोतुर्मेधा असृक्षत ॥ १ ॥

अस्तावि । मन्म । पूर्व्यम् । ब्रह्म । इन्द्राय । वोचत ।
पूर्वीः । ऋतस्य । बृहतीः । अनूषत । स्तोतुः । मेधाः । असृक्षत ॥ १ ॥

तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो अर्कमानृचुः ।
अस्मे रयिः पप्रथे वृष्ण्यं शवोस्मे सुवानास इन्दवः ॥ २ ॥

तुरण्यवः । मधुऽमन्तम् । घृतऽश्चुतम् । विप्रासः । अर्कम् । आनृचुः ।
अस्मे इति । रयिः । पप्रथे । वृष्ण्यम् । शवः । अस्मे इति । सुवानासः । इन्दवः ॥ २ ॥

इति नवमेनुवाके त्रयोविंशं सूक्तम् ॥

दशाहस्य गवामयनिकस्य अष्टमेहनि "यदिन्द्र प्रागपागुदक्" इत्येष उक्थस्तोत्रियो भवति । उक्तं वैताने । "दशाहस्याष्टमे यदिन्द्र प्रागपागुदगिति" इति [वै० ८. ४] ॥
तथा त्रिककुद्दशाहाहीने अस्य विनियोगः "क ईं वेद सुते सचा" [२०. ५३] इत्यनेन सह उक्तः ॥

यदिन्द्र प्रागपागुदङ्न्यग्वा हूयसे नृभिः ।
सिमा पुरू नृषूतो अस्यानवेसि प्रशर्ध तुर्वशे ॥ १ ॥

यत् । इन्द्र । प्राक् । अपाक् । उदक् । न्यक् । वा । हूयसे । नृऽभिः ।
सिम । पुरु । नृऽसूतः । असि । आनवे । असि । प्रऽशर्ध । तुर्वशे ॥ १ ॥

यद्वा रुमे रुशमे श्यावके कृप इन्द्र मादयसे सचा ।
कण्वासस्त्वा ब्रह्मभि स्तोमवाहस इन्द्रा यच्छन्त्या गहि ॥ २ ॥

यत् । वा । रुमे । रुशमे । श्यावके । कृपे । इन्द्र । मादयसे । सचा ।
कण्वासः । त्वा । ब्रह्मऽभिः । स्तोमऽवाहसः । इन्द्र । आ । यच्छन्ति । आ । गहि ॥ २ ॥

इति नवमेनुवाके चतुर्विंशं सूक्तम् ॥

तत्पृष्ठे षडहे "अभि त्वा शूर नोनुमः" इत्यस्य विनियोगः "यद् द्याव इन्द्र ते शतम्" [२०. ८१] इत्यनेन सह उक्तः॥

अभि त्वा शूर नोनुमोदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ १ ॥

अभि । त्वा । शूर । नोनुमः । अदुग्धाःऽइव । धेनवः ।
ईशानम् । अस्य । जगतः । स्वःऽदृशम् । ईशानम् । इन्द्र । तस्थुषः ॥ १ ॥

न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥ २ ॥

न। त्वाऽवान्। अन्यः। दिव्यः। न। पार्थिवः। न। जातः। न। जनिष्यते।
अश्वऽयन्तः। मघऽवन्। इन्द्र। वाजिनः। गव्यन्तः। त्वा। हवामहे ॥ २ ॥

इति नवमेनुवाके पञ्चविंशं सूक्तम् ॥

तनूपृष्ठे षडहे "रेवतीर्नः सधमादे" इत्यस्य विनियोगः "यद् द्याव इन्द्र ते शतम्" [२०. ८१] इत्यनेन सह उक्तः ॥

रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः। क्षुमन्तो याभिर्मदेम ॥ १ ॥

रेवतीः। नः। सधऽमादे। इन्द्रे। सन्तु। तुविऽवाजाः ॥ क्षुऽमन्तः। याभिः। मदेम ॥ १ ॥

आ घ त्वावान् त्मनाप्त स्तोतृभ्यो धृष्णवियानः। ऋणोरक्षं न चक्र्योः ॥२

आ। घ। त्वाऽवान्। त्मना। आप्तः। स्तोतृऽभ्यः। धृष्णो इति। इयानः ॥ ऋणोः।
अक्षम्। न। चक्र्योः ॥ २ ॥

आ यद् दुवः शतक्रतवा कामं जरितॄणाम्। ऋणोरक्षं न शचीभिः ॥३॥

आ। यत्। दुवः। शतक्रतो इति शतऽक्रतो। आ। कामम्। जरितॄणाम् ॥ ऋणोः।
अक्षम्। न। शचीभिः ॥ ३ ॥

इति नवमेनुवाके षड्विंशं सूक्तम् ॥

विषुवति सौर्यपृष्ठे माध्यंदिने "चित्रं देवानामुदगादनीकम्" [२०. १०७. १४] "तत् सूर्यस्य देवत्वं तन्महित्वम्" [२०. १२३] इति पृष्ठस्तोत्रियानुरूपौ भवतः। तद् उक्तं वैताने। "चित्रं देवानामुदगादनीकं तत् सूर्यस्य देवत्वं तन्महित्वम् इति पृष्ठस्तोत्रियानुरूपौ" इति [वै० ६. ३] ॥

तत् सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार।
यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥ १ ॥

तत्। सूर्यस्य। देवऽत्वम्। तत्। महिऽत्वम्। मध्या। कर्तोः। विऽततम्। सम्। जभार।
यदा। इत्। अयुक्त। हरितः। सधऽस्थात्। आत्। रात्री। वासः। तनुते। सिमस्मै ॥१॥

तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे।
अनन्तमन्यद् रुशदस्य पाजः कृष्णमन्यद्धरितः सं भरन्ति ॥ २ ॥

तत्। मित्रस्य। वरुणस्य। अभिऽचक्षे। सूर्यः। रूपम्। कृणुते। द्योः। उपऽस्थे।

---

१ B C[s] जरीतृणाम्. २ J द्यौः।.

अनन्तम् । अन्यत् । रुशत् । अस्य । पाजः । कृष्णम् । अन्यत् । हरितः । सम् । भरन्ति ॥ २॥

इति नवमेनुवाके सप्तविंशं सूक्तम् ॥

तनूपृष्ठे षडहे "कया नश्चित्र आ भुवत्" इत्यस्य विनियोगः "यद् द्याव इन्द्र ते शतम्" [२०.८१] इत्यनेन सह उक्तः॥

कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥ १॥

कया । नः । चित्रः । आ । भुवत् । ऊती । सदाऽवृधः । सखा ॥ कया । शचिष्ठया । वृता १

कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृळ्हा चिदारुजे वसु ॥२॥

कः । त्वा । सत्यः । मदानाम् । मंहिष्ठः । मत्सत् । अन्धसः ॥ दृळ्हा । चित् । आऽरुजे । वसु ॥२॥

अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतिभिः ॥ ३ ॥

अभि । सु । नः । सखीनाम् । अविता । जरितॄणाम् ॥ शतम् । भवासि । ऊतिऽभिः॥३॥

इमा नु कं भुवना सीषधामेन्द्रश्च विश्वे च देवाः ।
यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह चीक्लृपाति ॥ ४ ॥

इमा । नु । कम् । भुवना । सीसधाम । इन्द्रः । च । विश्वे । च । देवाः ।
यज्ञम् । च । नः । तन्वम् । च । प्रऽजाम् । च । आदित्यैः । इन्द्रः । सह । चीक्लृपाति ॥ ४ ॥

आदित्यैरिन्द्रः सगणो मरुद्भिरस्माकं भूत्वविता तनूनाम् ।
हत्वाय देवा असुरान् यदायन् देवा देवत्वमभिरक्षमाणाः ॥ ५ ॥

आदित्यैः । इन्द्रः । सऽगणः । मरुत्ऽभिः । अस्माकम् । भूतु । अविता । तनूनाम् ।
हत्वाय । देवाः । असुरान् । यत् । आयन् । देवाः । देवऽत्वम् । अभिऽरक्षमाणाः ॥ ५ ॥

प्रत्यञ्चमर्कमनयं छचीभिरादित् स्वधामिषिरां पर्यपश्यन् ।
अया वाजं देवहितं सनेम मदेम शतहिमाः सुवीराः ॥ ६ ॥

---

१ B̊ C K K̊ R Dc दृढा. We with D E S̊ V Cs P P̊ J Cp. २ B B̊ K K̊ omit the rest of the hymn observing: असुरान्यदायन्निति द्विपदासूक्तौ ॥ स्तोत्रियानुरूपौ ॥ C and all other Samhitâ and Pada Mss omit the rest of this hymn as it has appeared before ( See XX. 63 ) and indicate the omission and the special nature of the Riks omitted by the following remark, which unhappily is so incorrectly written in all Mss that we have given the reading of C only as containing the fewest mistakes:— इमा नु कं भुवना सीषधाम हत्वाय देवा असुरान् यदायन्निति द्विपदासूक्तौ स्तोत्रियानुरूपौ ॥

प्रत्यञ्चम्। अर्कम्। अनयन्। शचीभिः। आत्। इत्। स्वधाम्। इषिराम्। परि। अपश्यन्।
अया। वाजम्। देवऽहितम्। सनेम। मदेम। शतऽहिमाः। सुऽवीराः॥ ६॥

इति नवमेनुवाके अष्टाविंशं सूक्तम्॥

पृष्ठ्यस्य षष्ठेहनि "अपेन्द्र प्राचो मघवन्नमित्रान्" इति सुकीर्त्याख्यस्य सकलसूक्तस्य पच्छः शंसने प्राप्ते चतुर्थीम् अर्धर्चशः शंसति। तद् उक्तं वैताने। "अपेन्द्र प्राचो मघवन्नमित्रान् इति सुकीर्तिम्। चतुर्थीमर्धर्चशः" इति [वै० ६. २]॥

सौत्रामण्यां गृहीतेष्वाज्येषु "कुविदङ्ग यवमन्तः" [२०. १२५. २] इति ऋचा पयोग्रहान् गृह्णन्तमध्वर्युम् अभिमन्त्रयते। तद् उक्तं वैताने। "गृहीतेष्वाज्येषु कुविदङ्ग यवमन्त इति पयोग्रहान् गृह्णन्तम्" इति [वै० ५. ३]॥

तत्रैव वपामार्जनादनन्तरम् "युवं सुराममश्विना" [२०. १२५. ४–७] इति चतसृभिर्ऋग्भिः पयःसुराग्रहाणां होमान् अनुमन्त्रयते। तद् उक्तं वैताने। "वपामार्जनाद् युवं सुराममश्विनेति चतसृभिः पयःसुराग्रहाणाम्" इति [वै० ५. ३]॥

अपेन्द्र प्राचो मघवन्नमित्रानपापाचो अभिभूते नुदस्व।
अपोदीचो अप शूराधराच उरौ यथा तव शर्मन् मदेम॥ १॥

अप। इन्द्र। प्राचः। मघऽवन्। अमित्रान्। अप। अपाचः। अभिऽभूते। नुदस्व।
अप। उदीचः। अप। शूर। अधराचः। उरौ। यथा। तव। शर्मन्। मदेम॥ १॥

कुविदङ्ग यवमन्तो यवं चिद् यथा दान्त्यनुपूर्वं वियूय।
इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमोवृक्तिं न जग्मुः॥ २॥

कुवित्। अङ्ग। यवऽमन्तः। यवम्। चित्। यथा। दान्ति। अनुऽपूर्वम्। विऽयूय।
इहऽइह। एषाम्। कृणुहि। भोजनानि। ये। बर्हिषः। नमःऽवृक्तिम्। न। जग्मुः॥ २॥

नहि स्थूर्यृतुथा यातमस्ति नोत श्रवो विविदे संगमेषु।
गव्यन्त इन्द्रं सख्याय विप्रा अश्वायन्तो वृषणं वाजयन्तः॥ ३॥

नहि। स्थूरि। ऋतुऽथा। यातम्। अस्ति। न। उत। श्रवः। विविदे। सम्ऽगमेषु।
गव्यन्तः। इन्द्रम्। सख्याय। विप्राः। अश्वऽयन्तः। वृषणम्। वाजयन्तः॥ ३॥

युवं सुराममश्विना नमुचावासुरे सचा।
विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम्॥ ४॥

युवम्। सुरामम्। अश्विना। नमुचौ। आसुरे। सचा।
विऽपिपाना। शुभः। पती इति। इन्द्रम्। कर्मऽसु। आवतम्॥ ४॥

१ P सुरागम्।. Cp. सुऽरामम्।.

पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दंसनाभिः ।
यत् सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥ ५ ॥

पुत्रम्ऽइव । पितरौ । अश्विना । उभा । इन्द्र । आवथुः । काव्यैः । दंसनाभिः ।
यत् । सुऽरामम् । वि । अपिबः । शचीभिः । सरस्वती । त्वा । मघऽवन् । अभिष्णक् ॥५॥

इन्द्रः सुत्रामा स्ववाँ अवोभिः सुमृडीको भवतु विश्ववेदाः ।
बाधतां द्वेषो अभयं नः कृणोतु सुवीर्यस्य पतयः स्याम ॥ ६ ॥

इन्द्रः । सुऽत्रामा । स्वऽवान् । अवःऽभिः । सुऽमृडीकः । भवतु । विश्वऽवेदाः ।
बाधताम् । द्वेषः । अभयम् । नः । कृणोतु । सुऽवीर्यस्य । पतयः । स्याम ॥ ६ ॥

स सुत्रामा स्ववाँ इन्द्रो अस्मदाराच्चिद् द्वेषः सनुतर्युयोतु ।
तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥ ७ ॥

सः । सुऽत्रामा । स्वऽवान् । इन्द्रः । अस्मत् । आरात् । चित् । द्वेषः । सनुतः । युयोतु ।
तस्य । वयम् । सुऽमतौ । यज्ञियस्य । अपि । भद्रे । सौमनसे । स्याम ॥ ७ ॥

इति नवमेनुवाके एकोनत्रिंशं सूक्तम् ॥

पृष्ठ्यस्य षष्ठेहनि "वि हि सोतोरसृक्षत" इति वृषाकप्याख्यं सूक्तं सूत्रोक्तधर्मकं शंसति । तद् उक्तं वैताने । "वि हि सोतोरसृक्षतेति वृषाकपिम्" इत्यादि [वै० ६. २] ॥

[२]वि हि सोतोरसृक्षत नेन्द्रं देवममंसत ।
यत्रामदद् वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः ॥ १ ॥

वि । हि । सोतोः । असृक्षत । न । इन्द्रम् । देवम् । अमंसत ।
यत्र । अमदत् । वृषाकपिः । अर्यः । पुष्टेषु । मत्ऽसखा । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥१॥

परा हीन्द्र धावसि वृषाकपेरति व्यथिः ।
नो अह प्र विन्दस्यन्यत्र सोमपीतये विश्वस्मादिन्द्र उत्तरः ॥ २ ॥

परा । हि । इन्द्र । धावसि । वृषाकपेः । अति । व्यथिः ।
नो इति । अह । प्र । विन्दसि । अन्यत्र । सोमऽपीतये ।० ॥ २ ॥

किमयं त्वां वृषाकपिश्चकार हरितो मृगः ।
यस्मा इरस्यसीदु न्व१र्यो वा पुष्टिमद् वसु विश्वस्मादिन्द्र उत्तरः ॥ ३ ॥

१ P Cp सुरामम् ।. २ V. says it is believed that these 23 verses contain the story of the Râmâyana.

किम् । अयम् । त्वाम् । वृषाकपिः । चकार । हरितः । मृगः ।
यस्मै । इरस्यसि । इत् । ऊं इति । नु । अर्यः । वा । पुष्टिऽमत् । वसु ।० ॥ ३ ॥

यमिमं त्वं वृषाकपिं प्रियमिन्द्राभिरक्षसि ।
श्वा न्वस्य जम्भिषदपि कर्णे वराहयुर्विश्वस्मादिन्द्र उत्तरः ॥ ४ ॥

यम् । इमम् । त्वम् । वृषाकपिम् । प्रियम् । इन्द्र । अभिऽरक्षसि ।
श्वा । नु । अस्य । जम्भिषत् । अपि । कर्णे । वराहऽयुः ।० ॥ ४ ॥

प्रिया तष्टानि मे कपिर्व्यक्ता व्यदूदुषत् ।
शिरो न्वस्य राविषं न सुगं दुष्कृते भुवं विश्वस्मादिन्द्र उत्तरः ॥ ५ ॥

प्रिया । तष्टानि । मे । कपिः । विऽअक्ता । वि । अदूदुषत् ।
शिरः । नु । अस्य । राविषम् । न । सुऽगम् । दुःऽकृते । भुवम् ।० ॥ ५ ॥

न मत्स्त्री सुभसत्तरा न सुयाशुतरा भुवत् ।
न मत् प्रतिच्यवीयसी न सक्थ्युद्यमीयसी विश्वस्मादिन्द्र उत्तरः ॥ ६ ॥

न । मत् । स्त्री । सुभसत्ऽतरा । न । सुयाशुऽतरा । भुवत् ।
न । मत् । प्रतिऽच्यवीयसी । न । सक्थि । उत्ऽयमीयसी ।० ॥ ६ ॥

उवे अम्ब सुलाभिके यथेवाङ्ग भविष्यति ।
भसन्मे अम्ब सक्थि मे शिरो मे वीवि हृष्यति विश्वस्मादिन्द्र उत्तरः॥७

उवे । अम्ब । सुलाभिके । यथाऽइव । अङ्ग । भविष्यति ।
भसत् । मे । अम्ब । सक्थि । मे । शिरः । मे । विऽइव । हृष्यति ।० ॥ ७ ॥

किं सुबाहो स्वङ्गुरे पृथुष्टो पृथुजाघने ।
किं शूरपत्नि नस्त्वमभ्यमीषि वृषाकपिं विश्वस्मादिन्द्र उत्तरः ॥ ८ ॥

किम् । सुबाहो इति सुऽबाहो । सुऽअङ्गुरे । पृथुस्तो इति पृथुऽस्तो । पृथुऽजघने ।
किम् । शूरऽपत्नि । नः । त्वम् । अभि । अमीषि । वृषाकपिम् ।० ॥ ८ ॥

अवीरामिव मामयं शरारुरभि मन्यते ।
उताहमस्मि वीरिणीन्द्रपत्नी मरुत्सखा विश्वस्मादिन्द्र उत्तरः ॥ ९ ॥

---

१ B वीवं. २ P °थेन ।.

अवीराम्ऽइव । माम् । अयम् । शरारुः । अभि । मन्यते ।

उत । अहम् । अस्मि । वीरिणी । इन्द्रऽपत्नी । मरुत्ऽसखा ।० ॥ ९ ॥

संहोत्रं स्म पुरा नारी समनं वाव गच्छति ।

वेधा ऋतस्य वीरिणीन्द्रपत्नी महीयते विश्वस्मादिन्द्र उत्तरः ॥ १० ॥

सम्ऽहोत्रम् । स्म । पुरा । नारी । समनम् । वा । अव । गच्छति ।

वेधाः । ऋतस्य । वीरिणी । इन्द्रऽपत्नी । महीयते ।० ॥ १० ॥

इन्द्राणीमासु नारिषु सुभगामहमश्रवम् ।

नह्यस्या अपरं चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥ ११ ॥

इन्द्राणीम् । आसु । नारिषु । सुऽभगाम् । अहम् । अश्रवम् ।

नहि । अस्याः । अपरम् । चन । जरसा । मरते । पतिः ।० ॥ ११ ॥

नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते ।

यस्येदमप्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः ॥ १२ ॥

न । अहम् । इन्द्राणि । ररण । सख्युः । वृषाकपेः । ऋते ।

यस्य । इदम् । अप्यम् । हविः । प्रियम् । देवेषु । गच्छति ।० ॥ १२ ॥

वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे ।

घसत् त इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः ॥ १३ ॥

वृषाकपायि । रेवति । सुऽपुत्रे । आत् । ऊं इति । सुऽस्नुषे ।

घसत् । ते । इन्द्रः । उक्षणः । प्रियम् । काचित्ऽकरम् । हविः ।० ॥ १३ ॥

उक्ष्णो हि मे पञ्चदश साकं पचन्ति विंशतिम् ।

उताहमद्मि पीव इदुभा कुक्षी पृणन्ति मे विश्वस्मादिन्द्र उत्तरः ॥ १४ ॥

उक्ष्णः । हि । मे । पञ्चऽदश । साकम् । पचन्ति । विंशतिम् ।

उत । अहम् । अद्मि । पीवः । इत् । उभा । कुक्षी इति । पृणन्ति । मे ।० ॥ १४ ॥

वृषभो न तिग्मशृङ्गोन्तर्यूथेषु रोरुवत् ।

मन्थस्त इन्द्र शं हृदे यं ते सुनोति भावयुर्विश्वस्मादिन्द्र उत्तरः ॥ १५ ॥

---

१ K °वयदु°. २ K प्रीणंति.

वृषभः। न। तिग्मऽशृङ्गः। अन्तः। यूथेषु। रोरुवत्।
मन्थः। ते। इन्द्र। शम्। हृदे। यम्। ते[1]। सुनोति। भावयुः।०॥ १५॥

न सेशे यस्य रम्बतेन्तरा सक्थ्या३ कपृत्।
सेदीशे यस्य रोमशं निषेदुषो विजृम्भते विश्वस्मादिन्द्र उत्तरः॥ १६॥

न। सः। ईशे। यस्य। रम्बते। अन्तरा। सक्थ्या[2]। कपृत्।
सः। इत्। ईशे। यस्य। रोमशम्। निऽसेदुषः। विऽजृम्भते।०॥ १६॥

न सेशे यस्य रोमशं निषेदुषो विजृम्भते।
सेदीशे यस्य रम्बतेन्तरा सक्थ्या३ कपृद् विश्वस्मादिन्द्र उत्तरः॥१७॥

न। सः। ईशे। यस्य। रोमशम्। निऽसेदुषः। विऽजृम्भते।
सः। इत्। ईशे। यस्य। रम्बते। अन्तरा। सक्थ्या[2]। कपृत्।०॥ १७॥

अयमिन्द्र वृषाकपिः परस्वन्तं हतं विदत्।
असिं सूनां नवं चरुमादेधस्यान आचितं विश्वस्मादिन्द्र उत्तरः॥१८॥

अयम्। इन्द्र। वृषाकपिः। परस्वन्तम्। हतम्। विदत्।
असिम्। सूनाम्। नवम्। चरुम्। आत्। एधस्य। अनः। आऽचितम्।०॥ १८॥

अयमेमि विचाकशद् विचिन्वन् दासमार्यम्।
पिबामि पाकसुत्वनोभि धीरमचाकशं विश्वस्मादिन्द्र उत्तरः॥ १९॥

अयम्। एमि। विऽचाकशत्। विऽचिन्वन्। दासम्। आर्यम्।
पिबामि। पाकऽसुत्वनः। अभि। धीरम्। अचाकशम्।०॥ १९॥

धन्व च यत् कृन्तत्रं च कति स्वित् ता वि योजना।
नेदीयसो वृषाकपेस्तमेहि गृहाँ उप विश्वस्मादिन्द्र उत्तरः॥ २०॥

धन्व। च। यत्। कृन्तत्रम्। च। कति। स्वित्। ता। वि। योजना।
नेदीयसः। वृषाकपे। अस्तम्। आ। इहि। गृहान्। उप।०॥ २०॥

पुनरेहि वृषाकपे सुविता कल्पयावहै।
य एष स्वप्ननंशनोस्तमेषि पथा पुनर्विश्वस्मादिन्द्र उत्तरः॥ २१॥

---

१ P ते।. २ B K K V °क्थ्या।क°. ३ K स्वप्नं नशनो°.

पुनः । आ । इहि । वृषाकपे । सुविता । कल्पयावहै ।
यः । एषः । स्वप्नऽनंशनः । अस्तम् । एषि । पथा । पुनः ।० ॥ २१ ॥

यदुदञ्चो वृषाकपे गृहमिन्द्राजगन्तन ।
क्व१ स्य पुल्वघो मृगः कमगं जनयोपनो विश्वस्मादिन्द्र उत्तरः ॥२२॥

यत् । उदञ्चः । वृषाकपे । गृहम् । इन्द्र । अजगन्तन ।
क्व । स्यः । पुल्वघः । मृगः । कम् । अगन् । जनऽयोपनः ।० ॥ २२ ॥

पर्शुर्ह नाम मानवी साकं ससूव विंशतिम् ।
भद्रं भल त्यस्या अभूद् यस्या उदरमामयद् विश्वस्मादिन्द्र उत्तरः २३

पर्शुः । ह । नाम । मानवी । साकम् । ससूव । विंशतिम् ।
भद्रम् । भल । त्यस्यै । अभूत् । यस्याः । उदरम् । आमयत् । विश्वस्मात् । इन्द्रः ।
उत्ऽतरः ॥ २३ ॥

---

## ॥ अथ कुन्तापसूक्तानि ॥

पृष्ठ्यस्य षष्ठेऽहनि "इदं जना उपश्रुत" इति कुन्तापम् अर्धर्चशः शंसति । तत्र प्रथमाश्चतुर्दश ऋचः पदावग्राहं शंसति । तद् उक्तं वैताने । "इदं जना उपश्रुतेति कुन्तापम् अर्धर्चशः । चतुर्दश पदावग्राहम्" इति [वै० ६. २] ॥

इदं जना उप श्रुत नराशंस स्तविष्यते ।
षष्टिं सहस्रा नवतिं च कौरम आ रुशमेषु दद्महे ॥ १ ॥
उष्ट्रा यस्य प्रवाहणो वधूमन्तो द्विर्दश ।
वर्ष्मा रथस्य नि जिहीडते दिव ईषमाणा उपस्पृशः ॥ २ ॥

---

* J and Cp have no accents in the Kuntâpa sûktas.

१ R क्व ३. २ Rw जना. ३ P श्रुत. Rw श्रुत नाराशंस स्तवि°. ४ E S̄ Dc Cp कौरुम. Rw कौरम. ५ E दद्महे. ६ P̄ उष्ट्रा. R Dc Cs उष्ट्रा. ७ B B̄ प्रवाहणो. C Cs प्रवाहणो. D E R S̄ Dc P̄ प्रवाहणो. Rw प्रवाहिणो. ८ B B̄ C D E R S̄ Dc Cs वधूमंतो P̄ वधूमतो. Cp वधूमंतोद्विर्दश. ९ E वरिष्मा. Cs वरिष्मा. १० S̄ रथस्य. ११ J न. १२ E जहीडते. Rw जिहीषते. १३ P ईषमाणा. Rw ईषमाण.

एष इषाय मामहे शतं निष्कान् दश स्रजः ।
त्रीणि शतान्यर्वतां सहस्रा दश गोनाम् ॥ ३ ॥

वच्यस्व रेभ वच्यस्व वृक्षे न पक्वे शकुनः ।
नष्टे जिह्वा चर्चरीति क्षुरो न भुरिजोरिव ॥ ४ ॥

प्र रेभासो मनीषा वृषा गाव इवेरते ।
अमोतपुत्रका एषाममोत गा इवासते ॥ ५ ॥

प्र रेभ धीं भरस्व गोविदं वसुविदम् ।
देवत्रेमां वाचं श्रीणीहीषुर्नावीरस्तारम् ॥ ६ ॥

राज्ञो विश्वजनीनस्य यो देवोमर्त्यां अति ।
वैश्वानरस्य सुष्टुतिमा सुनोता परिक्षितः ॥ ७ ॥

---

१ Cs ईषाय. Rw ऋषये. २ D °मांमहे. ३ C D E R S̈ Dc Cs P̊ दश. We with P. ४ त्रीणि. ५ D E S̈ Dc Cs P̊ सहस्रा. ६ Cs वच्यः स्व रेभं वच्यस्व. ७ S̈ रेभ· ८ S̈ P वंच्यस्व. ९ S̈ Cp वृक्षेर्ण प°. C D E R Dc Cs P̊ J वृक्षेनं प°. We with P. १० C पक्वेन श°. C E R S̈ Dc Cs P̊ पक्वे. We with D P. ११ R शकुनः. १२ J वृष्टे. १३ Dc चर्चरीति. १४ C न. १५ C D R Dc P̊ भुरिजो°. Cs भूरिजो°. १६ Rw वच्यस्वं रेभ वच्यस्वं वृक्षे न पक्वे शकुनः । ओष्ठे जिह्वा चर्चरीति क्षुरो न भुरिजोरिव ॥ १७ D R Dc P̊ प्ररे°. १८ D वृषा. S̈ वृषा. Dc वृषा. १९ C D E R S̈ Dc Cs P̊ गाव इवेरते. We with P. २० C Cs अमोत. Dc अमोत. P अमोत. २१ E पुत्रका. २२ S̈ °ममोतकागा इवासते. P °ममोतजा इवासते. २३ E Cp का. २४ Rw प्र रेभासो मनीषा वृषा गाव इवेरते । अमोत पुत्रका एषाममोत गा उपासते ॥ २५ D प्ररेभ धीं भ° E प्ररेभ धीयं भ°. S̈ Cp प्र रेभ धीयं भ°. Dc प्ररेवधीं भ°. Cs प्र रेभ धी भ°. P̊ प्र रेभ धीं यं भ°. Rw प्र रेभ धियं भ°. २६ Rw वाचं कृणीषुं न वीरो अस्ता. २७ C D S̈ Dc J शृणीही°. P has no accents from this verse onwards. २८ Rw विश्वजनीनस्य. २९ D E R Cs मर्त्यां. ३० Rw °रस्यं सुष्टुतिमा शृणोता प°.

परिच्छिन्नः क्षेमंमकरोत् तम आसनमाचरन् ।
कुलायन् कृण्वन् कौरव्यः पतिर्वदति जायया ॥ ८ ॥
कतरत् त आ हराणि दधि मन्थां परि श्रुतम् ।
जायाः पतिं वि पृच्छति राष्ट्रे राज्ञः परिक्षितः ॥ ९ ॥
अभीवस्वः प्र जिहीते यवः पक्वः पथो बिलम् ।
जनः स भद्रमेधति राष्ट्रे राज्ञः परिक्षितः ॥ १० ॥
इन्द्रः कारुमबूबुधदुत्तिष्ठ वि चरा जनम् ।
ममेदुग्रस्य चर्कृधि सर्व इत् ते पृणादरिः ॥ ११ ॥
इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः ।
इहो सहस्रदक्षिणोपि पूषा नि षीदति ॥ १२ ॥
नेमा इन्द्र गावो रिषन् मो आसां गोप रीरिषत् ।
मासाममित्रयुर्जन इन्द्र मा स्तेन ईशत ॥ १३ ॥

---

१ C Dc परिछि°. D परिछिन्न क्षे°. Cs परिछिन्नाँ क्षमं°. P̊ परिं छिन्नः. Rw परिक्षिन्नः क्षेमंमकरुत्तम. Though we have not taken the reading परिक्षित् because none of our Mss support it, yet it seems Rw's reading परिक्षिन्नः is right as it follows the analogy of the preceeding one and following two verses. २ Rw कुलायं. ३ Rw पतिर्वदति. ४ P °वँदति. ५ C D E कतरत्. ६ R S̈ हराणि. ७ R दधि मंथां. Rw दधिं मन्थं परिं श्रु°. ८ E S̈ Cp स्रुतं. ९ Rw जाया. १० C पतिं. ११ C अभीव स्व. Rw अभीव स्व१ः. १२ D E P̊ पथो. Rw परो. १३ C °मेर्थति. Rw °मेधते. १४ E R S̈ Dc Cs P̊ मबूबुध°. १५ C °दुर्दत्तिष्ठ. १६ Rw जरन्. १७ R S̈ Cs P̊ J Cp दुर्गस्य. Rw °दुग्रस्यं. १८ D Dc चर्कृतिः. S̈ P चर्कृधिः. Rw चर्कृधि. १९ S̈ इहा गा°. Rw इह गां°. २० C °श्वा इह पूरुषाः. D °श्वा इह पुरुषः. E R S̈ °श्वा इह पूरुषाः. Cs P J श्वा इह पूरुषः. P̊ श्वा इह पूरुषः. Rw °श्वा इह पूरुषाः. २१ C E S̈ सहस्र°. D Cs P̊ संहस्र°. We with R Dc. २२ S̈ °दक्षिणोपिं पूषा. २३ C पूषा. २४ C D E R S̈ Dc Cs नेमां. Rw मेमा इन्द्र. We with P̊. २५ Rw आसां गोपती रिषत्. २६ Rw मासाममि°. २७ Dc स्तेनं ईशत्. २८ Rw ईशंत.

उप नो न रमसि सूक्तेन वचसा वयं भद्रेण वचसा वयम् ।
वनादधिध्वनो गिरो न रिष्येम कदा चन ॥ १४ ॥

तं प्रतिगिरेति प्रति कुरुत । ओथामोदैवेति पञ्चपदा चतुर्दशी एकेन द्वाभ्यां वा प्रणौति ॥

इति नवमेऽनुवाके एकत्रिंशं सूक्तम् ॥

"यः सभेयो विदथ्यः" इति षोडशर्चः ॥

"यः सभेयो विदथ्यः" एतस्य शंसनप्रकारः पूर्वसूक्ते उक्तः ॥

यः सभेयो विदथ्यः सुत्वा यज्वाथ पूरुषः ।
सूर्यं चामू रिशादसस्तद् देवाः प्रागकल्पयन् ॥ १ ॥
यो जाम्या अप्रथयस्तद् यत् सखायं दुधूर्षति ।
ज्येष्ठो यदप्रचेतास्तदाहुरधरागिति ॥ २ ॥
यद् भद्रस्य पुरुषस्य पुत्रो भवति दाधृषिः ।
तद् विप्रो अब्रवीदु तद् गन्धर्वः काम्यं वचः ॥ ३ ॥
यश्च पणि रघुजिष्ठ्यो यश्च देवाँ अदाशुरिः ।
धीराणां शश्वतामहं तदपागिति शुश्रुम ॥ ४ ॥

---

१ Rw उप नर्र नोनुमसि सूक्तेन°. २ C रमसि. ३ C R S[m] Dc Cs वनादधि° Rw वनों दधिष्व नो गिरो. ४ Though the words from तं प्रति to षोडशर्चः are no part of the Samhitâ text, yet some of the Mss have placed accents in two, and others in three, places without any reasons whatever; we have therefore followed E and S[m] which give no accents and have not shown the accents of other Mss either. ५ C E विदथ्र्यः. D विदूथ्र्य. ६ S[m] सुत्व. P P[2] स्तुत्वा. Rw सुत्वा यज्वा च. ७ C सूर्यं चामू रिशादस°. Dc सूर्यं चामू रिशादस°. P[2] सूर्यं चामू रिशादस°. Cp सूर्यं वामू. Rw सूर्यं चामुं रिशादसं. ८ Cs प्रागकल्पयन्. ९ E अप्रथय°. C D R S[m] P[2] अप्रथय° Rw अमेथयद्यत्. १० C E P P[2] दुर्धूरिषति. ११ Rw ज्येष्ठाय यदप्रचेतास्तदाहुरधरागिति. १२ P पूरुषस्य. १३ Rw भवति दाधृषिः. १४ Rw तद्विप्रो अब्रवीदुदगं°. १५ P तद्विप्रो अब्रवीदुगद्गं°. १६ E J पणी. Dc पणीं. १७ Rw °रघुजिष्ठो. १८ C D P J Cp °जिष्ठयो. Dc Cs जिष्ठयो. १९ Rw देवाँ. २० Rw शश्वतामह तदपा°.

